# सम्पादकीय-वक्तव्यम्—

अयि सार्वीयसिद्धान्तकल्पतरुकुसुमसौरभवासितस्वान्ताः सज्जनाः ! इह खलु जैनेन्द्रशासने सकलशास्त्रशिरोमणित्वेन समग्राभीष्टसम्पादकत्वेन च
समरिष्णाऽधरितकामकुम्भ-चिन्तामण्याद्यविकलवाञ्छितसम्प्रापकवस्तुव्रातस्य सुविश्रुतस्य दशाश्रुतस्कन्धाष्टमाध्ययनरूपस्यास्य श्रीमत्पर्युषणाकल्पसूत्रस्य को
नामार्हदुपासकः सकर्णोऽपरिचितः समस्ति ?, प्रत्यब्दं प्रतिस्थलं च साम्प्रतं प्रायः सर्वैरर्हदुपासकैर्वाच्यमानत्वात् श्रूयमाणत्वाच्च ।
विहिताः सन्त्यस्योपरि चूर्णि-टिप्पन-निरुक्त-वृत्त्यन्तर्वाच्यादयोऽनेके व्याख्याग्रन्थाः प्राचीनैरर्वाचीनैश्चाप्याचार्योपाध्यायमुनिमतल्लिकाभिः, तेष्वेषा कल्पार्थ-
बोधिनी नाम वृत्तिः पृथगेव स्वस्वरूपं बिभ्रती विद्वज्जनकरकमलेषूपस्थिता भवति ।
सञ्जातः सङ्ग्रहोऽस्या विनयेन्दुसूरीयकल्पटिप्पन-जिनप्रभसूरिसन्दब्धसन्देहविषौषधी-समयसुन्दरीयकल्पलतावृत्त्याद्याधारेण । सङ्ग्राहकाश्चास्याः प्रवचन-
प्रभावक-खरतरगच्छनभोनभोमणि-क्रियोद्धारक-श्रीमन्मोहनमुनीश्वरविनेयविनेयाः स्वर्गीयानुयोगाचार्य-श्रीमत्केशरमुनि-गणिवराः ।
प्रोक्ताः सन्त्यत्र त्रयोऽप्यधिकारा नवापि च व्याख्यानानि स्थले स्थले प्रसङ्गोचितानेकग्रन्थोद्धृतसुभाषितादिसंयोजनात्मिकया सुन्दरपद्धत्या पूज्यवरैरेभिर्वाद-
स्थलानि तु प्रायः सर्वाण्यपि सप्रपञ्चं वर्णितानि, विशेषतो "गर्भस्य—उदरसत्त्वस्य हरणं—उदरान्तरसङ्क्रामणं गर्भहरणं" (इति स्थानाङ्गवृत्तौ कल्पकिरणा-
वल्यामपि च) "गर्भस्य—स्त्रीकुक्षिसमुद्भूतसत्त्वस्य हरणं—अन्यस्त्रीकुक्षौ सङ्क्रामणं गर्भहरणं" (इति प्रव० सारो० वृत्तौ) "गर्भस्य हरणं—उदरान्तर-
मोचनं" (इति कल्पसुबोधिकायां) "गर्भस्य—श्रीवर्द्धमानरूपस्य हरणं—त्रिशलाकुक्षौ सङ्क्रामणं गर्भहरणं" (इति कल्पदीपिकायां) इत्यादिनाऽनेकैर्व्या-
वर्णितमत्यस्वरूपस्य देवानन्दाकुक्षितस्त्रिशलाकुक्षौ गर्भाधानतया संस्थापनलक्षणस्य श्रीवीरगर्भापहारस्य "अकल्याणक(अश्रेयो)भूतस्य गर्भापहारस्य" (इति
कल्पकिरणावल्यां) "नीचैर्गोत्रविपाकरूपस्यातिनिन्द्यस्याश्चर्यरूपस्य गर्भापहारस्य कल्याणकत्वकथनं अनुचितं" (इति कल्पसुबोधिकायां) "गर्भाप-
हारोऽशुभः" (इति कल्पसु० टिप्पन्यां) इत्यादिप्ररूपणलक्षणं सागरान्तवृषाद्युपज्ञं अकल्याणकमतं सर्वाभिमताभियुक्तश्रीमद्भद्रबाहुस्वामि-हरिभद्रसूर्यभयदेव-
सूर्यादिवचनदर्शनेन सम्यक्तया निर्लोठितः । सुविहितशास्त्रोत्तीर्णमेवैतन्मतमित्यनेकैः शास्त्रप्रमाणैर्हेतुयुक्तिभिश्च सम्यक्साधितम् ।

प्रभुनिर्वाणतिथिरमावास्या पाक्षिकदिनमिति प्रसङ्गेन विहितायां टिप्पनीगतपाक्षिकचर्चायामप्यनेकैः सर्वमान्यप्राचीनशास्त्रप्रमाणैर्निर्धार्य प्रदर्शितं, यदुत–आदितः पञ्चदश्यामेव पाक्षिकं प्रतिक्रमणमभूत्, परं कालकसूर्याचरणया चतुर्थीपर्युषणाप्रवृत्त्यनन्तरमेव पञ्चाशद्दिनानां परिपूर्त्तये नियमितं चतुर्दश्यां तत्करणं प्राचीनाचार्यैः, अन्यथा पाक्षिक–चातुर्मासिकयोरैक्यकरणं सार्वीयाज्ञोत्तीर्णमेव स्यात् ।

एतेन साम्प्रतं चतुर्दशी-पञ्चदशीक्षये त्रयोदश्यां पाक्षिकं चातुर्मासिकं च, चतुर्थी-पञ्चमीक्षये च तृतीयायां सांवत्सरिकं प्रतिक्रमणं स्फुटमागमाचरणोभयोत्तीर्णं, एवमेव पञ्चदशी-पञ्चमीवृद्धौ युगप्रधानाचरितां सूर्योदयान्वितां चतुर्दशीं-चतुर्थीं च विहायाद्यायां सम्पूर्णभोगायां पञ्चदश्यां पञ्चम्यां च पाक्षिक-चातुर्मासिके सांवत्सरिकं च प्रतिक्रमणं स्पष्टमेव युगप्रधानाचरणभञ्जनमित्यपि सम्यक्साधितम् ।

सामाचार्यां (वृत्तौ टिप्पन्यामपि च) सुष्ठु विहिता अधिकमासीयाऽपि चर्चा, सम्यक्तया साधितं बृहत्कल्पचूर्णि-निशीथचूर्णि-कुलमण्डनाचार्यकृतकल्पावचूर्यादिवचनैः श्रावणभाद्रपदान्यतरवृद्धावपि पञ्चाशतैव, न त्वशीत्या दिनैर्युक्तं संवत्सरप्रतिक्रान्त्यादिसांवत्सरिककृत्यविशिष्टगृहिज्ञातपर्युषणापर्वाराधनमिति, नूतनमेवैतच्चैत्यवास्तुपज्ञं कालचूलारूपाधिकमासाविवक्षणमतमित्यपि बृहत्कल्पचूर्ण्यादिसर्वाभिमताभियुक्तशास्त्रप्रमाणैरनेकैश्च हेतुदृष्टान्तैः सम्यङ्निर्णीतम् ।

इत्याद्यनेकेषु विवादास्पदीभूतेषु विषयेषु सागरान्तनृपकल्पैः प्रयुक्तानामनेकविधानां शास्त्रोत्तीर्णयुक्तीनां शास्त्रानुगतयुक्तियुक्तप्रत्युत्तरप्रदानप्रभविष्णुताऽवाप्ताविथं सहायिका प्रसङ्गानुगतनानासुभाषितसङ्ग्रहेण वाचकानां श्रोतॄणामपि चापूर्वरसोत्कर्षपोपिकाऽपि च भविष्यतीति विभाव्य विहितं प्रकाशनमेतस्याः ।

सर्वजीवैः सह क्षमापनाकरणादिना कर्मविच्छेदनाय नियमितेषु पर्युषणादिनेषु किं प्रयोजनं विवादग्रस्तानां विषयाणां चर्चया? इत्याद्यगम्यैः कारणैर्यद्यपि नोद्भाविता विवादास्पदविषयीया युक्तयः कल्पलतादिषु, परं कालानुभावाद्यायो भूयाञ्जनो विद्यमानेऽपि भूयस्यप्यन्तरेऽभेदमेव मन्यते, नैतावन्मात्रमेव, किन्तु प्रतिवर्षं प्रतिस्थलं चाकर्ण्यमानैः पक्षान्तरीयवृत्तिगतैर्युक्त्याभासैः सन्दिग्धोऽपि भूयाञ्जनो भवति, स तावदनया युक्तिलेशं निशम्य जानातु तत्त्वमित्यनुकम्पया "शुभे यथाशक्ति यतनीय"मिति शिष्टोपदेशमनुसृत्य विहितोऽयं प्रयत्नो यथाशक्यटिप्पन्यादिभिः परिष्कृत्यास्याः प्रकाशने ।

महदनुग्रहो विहितः परमाराध्याचार्यप्रवर-श्रीमज्जिनरत्नसूरिवरैः सर्वप्रकारेण सहयोगप्रदानतोऽस्याः सम्पादने संशोधनेऽपि चानुष्ठितं महत्साहाय्यं परमपूज्य-परमोपास्यश्रीमल्लब्धिमुनिपाठकप्रवरैः श्रीमद्भद्रमुनिभिश्च, निर्णयसागरमुद्रणालयसत्कैः पण्डितप्रकाण्डैः काव्यतीर्थोपपदैः 'श्रीनारायण राम आचार्य' इति सुनामधेयैश्चापि प्रूफसंशोधनेऽनेकशो योग्यसूचनाकरणादिना, अतस्तेषां सर्वेषामुपकारं सर्वदा स्मृतिपथमानयामि ।

विहितं चैतस्याः प्रकाशने द्रव्यसाहाय्यं निम्नोल्लिखितैरुदारप्रकृतिकैर्महानुभावैः—

२५० झवेरी—कस्तूरचन्द कल्याणचन्द, ह० तलकचन्दभाई—सुरत
२०० झवेरी—पानाचन्द भगुभाई तथा मोतीचन्द भगुभाई—सुरत
१०० शेठ—उदयचन्दजी ह्लालाखण्डी—पाली ( मारवाड )
७५ ज्ञाननैमित्तिकं, ह० झवेरी शांतिचन्द बाबुभाई घेलाभाई—मलजी—सुरत
५१ शेठ पूनमचन्दजी गुलाबचन्दजी गोलेछा-फलोदी ( मारवाड )

एतदतिरिक्तं सर्वं व्ययमर्पितं श्रीपालरासमुद्रणावशिष्टाज्ज्ञानद्रव्यात् मुम्बई—जिनदत्तसूरिज्ञानभण्डारकार्यवाहकैः

अतः सर्वेऽप्येते महानुभावाः शतशः साधुवादानर्हन्ति, करणीयमनुकरणमेतेषामन्यैरप्युदाराशयैः श्रीमद्भिरेतादृग्ग्रन्थप्रकाशने साहाय्यप्रदानेन।

विहितेऽप्यायासे संशोधनकर्मणि मतिमान्द्य-प्रमाद-भ्रान्त्याद्यनेकविधैर्निमित्तैस्सञ्जातानां दृष्टिपथावतीर्णानामशुद्धीनां यद्यपि शुद्धिपत्रकं विन्यस्तं, तथापि प्राथमिकप्रयासत्वान्मनुष्यभावसुलभत्रुटिस्वभावाच्च तदतिरिक्ता अपि याः काश्चनाशुद्धयो दृग्गोचरीभवेयुस्ताः सम्मार्जयन्तु प्रकृतिदयालवो धीधनाः संसूचयन्तु च मां, येनाग्रिमे संस्करणे मार्जनसौकर्यं स्यादित्यभ्यर्थयते—

संवत् १९९९ चैत्रशुक्ल २ बुधे
वीरचैत्यनिश्रिते खरतरगच्छोपाश्रये
मुम्बापुर्यां

प्रकल्पिताञ्जलिर्वृत्तिसङ्ग्राहकपूज्यपादपाथोजमधुकरो
बुद्धिसागरो गणिः

सूचनं—शुद्धिपत्रकानुसारं संशोध्यैव वाचनीयैषा प्रतिः सहृदयैरिति।

# शुद्धिपत्रम्

| पत्रं | पृष्ठं | पं० | अशुद्धम् | शुद्धम् | पत्रं | पृष्ठं | पं० | अशुद्धम् | शुद्धम् | पत्रं | पृष्ठं | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २ | १ | १३ | धर्म, | धर्मः, | २३ | २ | २ | महिड्डिए | महिड्ढिए | ३९ | १ | ७ | ऽअधो | ऽधो |
| ५ | २ | १४ | ज्ञातव्याः | ज्ञातव्याः | २५ | १ | ९ | जद्वक्ष | जद्वक्षः | ,, | ,, | १३ | प्राण | प्रमाण |
| १२ | १ | १३ | स्यतो | स्यतः | २८ | १ | ९ | मित्यादिः | मित्यादि | ४० | २ | ५ | "यथा स्यात्तथा" | इति न युज्यते |
| ,, | २ | १० | समर्त्वं | समत्वं | ,, | २ | ८ | इद्दशे | ईद्दशे | ,, | ,, | १२ | प्रमाणन्वि | प्रमाणान्वि |
| १५ | १ | ४ | स्तोमं | स्तोमो | २९ | १ | ३ | वि समणं | वि | ४२ | १ | १ | उज्जअ | उज्जुअ |
| ,, | ,, | १२ | लोकोद्योत | लोकोद्द्योत | ,, | २ | ५ | ३० | ०३ | ,, | २ | ३ | सह्न | सण्ह |
| ,, | २ | ७ | निश्चितम् | निश्चितः | ,, | ,, | १५ | प्रतती | प्रतीत | ,, | ,, | ११ | कौदुम्विके | कौडुम्बिके |
| १८ | १ | २ | देवणंदा | देवाणंदा | ३० | ,, | १० | मुक्तत्वान् | मुक्तवान् | ४४ | १ | १० | तं | तत् |
| ,, | ,, | ५ | भान्ति | भ्रान्ति | ,, | ,, | १३ | समानौ | मानौ | ४६ | १ | १३ | ,, | ,, |
| ,, | ,, | १० | चान्तमु | चान्तर्मु | ३२ | १ | ३ | दाश्चार्यम् | दाश्चर्यम् | ,, | २ | १४ | ,, | ,, |
| १९ | २ | १ | मन्न | मन्ने | ३९ | १ | १ | तारिगंसि | तारिसगंसि | ४७ | १ | ५-८-९-१२ | | पङ्क्तिष्वप्येवमेव |

| पत्रं | पृष्ठं | पं० | अशुद्धम् | शुद्धम् | पत्रं | पृष्ठं | पं० | अशुद्धम् | शुद्धम् | पत्रं | पृष्ठं | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ५० | २ | १२ | काराः | कराः | ६६ | २ | १३ | दुर्वि | खलु वि | ७६ | २ | १० | केट | कोट |
| ५१ | २ | १४ | णेमं | णैनं | ६७ | ,, | ९ | यावनो | यावन्नो | ७७ | २ | ७ | “सह” | इति न युज्यते |
| ५२ | १ | १३ | पीत | प्रातःपीत | ६८ | १ | १ | आगा | अगा | ७८ | ,, | ११ | स पुत्रायाः | सपुत्रायाः |
| ,, | ,, | ,, | नादर्वागव | नाव | ,, | ,, | ८ | ,, | ,, | ७९ | १ | ८ | यति | यतः |
| ५३ | १ | ३ | फुल्ल | फुलु | ६९ | ,, | ४ | कुथा | कुथाः | ८५ | २ | १ | भम्मा | भम्भा |
| ५४ | १ | १२ | सम्वाध | संवाह | ७१ | १ | ७ | हस्तोत्तरा- | ‘हस्तोत्तरा- | ८७ | १ | १ | अविग्धं | अविग्घं |
| ,, | ,, | ,, | सम्वाधि | संवाहि | | | | भिस्समं | भिः’समं | ९३ | २ | १० | विवुधा | विबुधा |
| ५६ | ,, | २ | दिसि | दिसी | ७२ | १ | २ | देवेहि | देवीहि | ९५ | १ | ११ | पृच्छयैव | पृच्छयव |
| ६० | ,, | १४ | ऽऽपगाः | ऽपगाः | ,, | ,, | ९ | हतां | हृतां | ,, | ,, | ,, | त्रुटि | त्रुटित |
| ,, | २ | ९ | सज्झइ | सिज्झइ | ,, | २ | १० | तेजाः | तेजा | ९६ | ,, | २ | न्तेत | न्ते त |
| ६२ | ,, | १३ | णेमं | णैनं | ७३ | १ | २ | स्थानं | स्थाने | ९७ | ,, | २ | वहु | बहु |
| ६३ | ,, | ४ | निहाणइं | निहाणाइं | ७४ | ,, | ७ | प्रत्येकं | सहस्रं | ९८ | ,, | १४ | गोशाद्धखि | गोशद्धखि |
| ६५ | १ | २ | समुप | समुप्प | ७६ | ,, | ११ | तैः | ताभ्यां | १०१ | २ | १२ | पात्रा | पात्री |

| पत्रं | पृष्ठं | पं० | अशुद्धम् | शुद्धम् | पत्रं | पृष्ठं | पं० | अशुद्धम् | शुद्धम् | पत्रं | पृष्ठं | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १०३ | १ | १३ | सममनः | सममनाः | १२६ | २ | १४ | द्विभक्ति | द्विभक्ति | १५१ | २ | ७ | भरतेन | भरतेन सह |
| १०४ | १ | ७ | पञ्चाशं | पञ्चाशत् | १२८ | १ | ४ | क्षम | क्षाम | १५३ | २ | १० | द्वयो | द्वयो |
| ,, | २ | १० | द्विधा | द्विविधा | ,, | २ | १४ | त्रौक्तौ | त्रोक्तौ | १५४ | १ | ७ | न्तिप | न्तिष |
| १०९ | १ | ५ | स्तमा | स्तसा | १३० | ,, | १२ | द्रवीण | द्रविण | १५७ | १ | १४ | सुधर्मः | सुधर्मो |
| १११ | १ | १० | नन्त | नन्तर | १३१ | १ | ५ | त्तरयत् | त्तरं ददौ | १६९ | २ | १० | वन्दामि | वन्दे |
| ११३ | २ | ५ | न्यादिक | न्यादिस्थिरक | ,, | ,, | ७ | ''नाल'' इति न युज्यते | | १७६ | १ | १ | म्मील्य | म्मेलयित्वा |
| ११४ | १ | ६ | णो म | णो भगवान्म | ,, | २ | २ | हरिय | हरियं | ,, | ,, | १४ | ,, | ,, |
| ,, | ,, | १३ | काप्य | काप्या | १३३ | २ | ८ | पशुना | पशूना | १७९ | १ | १२ | ,, | ,, |
| ११७ | २ | १२ | च्चूर्णि | च्चूर्णि | १३४ | १ | १ | क्षयते | क्षते | १९३ | १ | १ | सुहूमे | सुहुमे |
| ११९ | २ | १२ | श्लोकस्य | श्लोके | ,, | २ | ११ | माए | माए | १९५ | १ | १२ | रूपा | रूप |
| ,, | ,, | १४ | रुमा | रुमा | १३६ | १ | ९ | विष्णु | विष्णो | २०१ | २ | १० | ईर्या | इर्या |
| १२५ | १ | १३ | मपस्थिका | मस्थितिका | १४१ | ,, | १४ | द्वषे | द्वर्षे | २०२ | २ | ७ | निर्ग्रन्थानां | निर्ग्रन्थीनां |
| ,, | २ | ९ | दित्रिभि | दिभि | १४३ | १ | १ | द्दीघ | द्दीर्घ | | | | | |

अस्मिॅंश्चक्रद्वये धर्मशिक्षाया
आद्यान्तिमश्लोकद्वयम्





ॐ पञ्चपरमेष्ठिभ्यो नमः

श्रीमन्मोहन–यशःस्मारक–जैनग्रन्थमालायां–

श्रुतकेवलिश्रीमद्भद्रबाहुस्वामिसङ्कलितं पर्युषणाकल्पनिर्युक्त्यन्तर्वाच्यादिविविधव्याख्यातः स्वर्गीयानुयोगाचार्य-श्रीमत्केशरमुनिगणिवरसङ्गृहीतया कल्पार्थबोधिन्यभिधयाऽल्पव्याख्यया सहितं

# पर्युषणाकल्पसूत्रम् ।

प्रणम्य श्रीजिनं वक्ष्ये, व्याख्यां कल्पार्थबोधिनीम् । वाचने श्रवणे चाल्पां, स्वल्पमत्युपकारिणीम् ॥ १ ॥
स्थिता वर्षाचतुर्मास्यां, पर्युषणां हि साधवः । कुर्वन्ति मङ्गलार्थं च, कल्पसूत्रस्य वाचनाम् ॥ २ ॥
कल्पशब्देन साधूना-माचारोऽत्र प्रकथ्यते । दशभेदाश्च कल्पस्य, निर्युक्त्यादिषु ते यथा ॥ ३ ॥

आचेल[1]क्कुद्दे[2]सिय-सि[3]ज्जायररायं[4]पिंड[5]किइकम्मे । वयं[6]जिट्ठ[7]पडिक्कमणे[8], मासं[9] पज्जोसणा[10]कप्पो ॥ १ ॥

व्याख्या—"आचेलक्क"त्ति आचेलक्यं-(अचेलकत्वं,) वस्त्ररहितत्वं, तत्र प्रथमान्तिमजिनतीर्थे सर्वेषां साधूनां श्वेतमानोपेतजीर्णप्रायतुच्छ(अल्पमूल्य)वस्त्रधारित्वेनाचेलकत्वं । सत्यपि वस्त्रे कथमचेलकत्वं ? इति चेद्यथा–कृत-

पीतिका नदीमुत्तरन्तो जना वदन्ति य'न्नग्नीभूतैरस्माभिर्नदीरुत्तीर्णा' एवमेव तन्तुवायरजकादींश्चापि वदन्ति– 'शीघ्रं देह्यस्मद्वस्त्राणि, नग्नाः स्मो वयमि'ति, तथैव साधूनां सत्यपि वस्त्रे जीर्णप्रायतुच्छत्वादिहेतुनाऽचेलकत्वमेव विवक्षितम्। अत इदमपि सिद्धं–यन्निशीथादिप्रोक्तप्रायश्चित्तं पीतादिवर्णोपेतं वस्त्रं वीरजिनतीर्थसाधूनां न कल्पत एव। मध्यमजिनतीर्थसाधूनां तु केषाञ्चिन्मूर्च्छाद्यभावे बहुमूल्यविविधवर्णवस्त्रपरिभोगानुज्ञासद्भावेन सचेलकत्वं, केषाञ्चिच्च मूर्च्छादिदोषसम्भवे श्वेतमानोपेतवस्त्रधारित्वेनाचेलकत्वमपि १।

"उद्देसिअ"त्ति औद्देशिकं–साधुनिमित्तं कृतमशनादि, तच्च आद्यन्तिमजिनतीर्थे एकमुद्दिश्य कृतं सर्वेषां साध्वादीनां न कल्पते, मध्यमजिनतीर्थे तु यं साध्वादिकमुद्दिश्य कृतं तत्तस्यैव न कल्पते, अन्येषां कल्पते २।

"सिज्जायर"त्ति शय्यां–गृहं दत्वा तरतीति शय्यातरो–गृहस्वामी, उपाश्रयदाता, तस्य अशनादिचतुर्विध आहारस्तथा वस्त्र-पात्र-कम्बल-रजोहरण-सूचि-पिप्पलक-नखरदन-कर्णशोधनरूपो द्वादशप्रकारः पिण्डः सर्वजिनतीर्थे सर्वसाधूनामुत्सर्गतो न कल्पते, अतिप्रसङ्ग-वसतिदौर्लभ्यादिबहुदोषसम्भवात्। अपवादतस्तु शक्रस्य देशग्रामाधिपयोश्च क्रमेणैकैकं दिनं शय्यातरो विधेयः, एवं च सति दिनत्रयादुपरि चतुर्थे दिने गृहस्वामिन

१ यत्र गृहे रात्रौ सुप्तं रात्रिकं प्रतिक्रमणं च कृतं स शय्यातरो भवति, यदा चैकत्र सुप्तमन्यत्र च रात्रिकं प्रतिक्रान्तं तदा द्वावपि शय्यातरौ, यदा तु रात्रौ चतुरः प्रहरान् यावज्जाग्रति, ततः प्राभातिकं प्रतिक्रमणमन्यत्र कुर्वन्ति तदा यत्र गृहे स्थिताः स शय्यातरो न भवति, यत्र प्रतिक्रमणं कृतं स्यात्स एव भवति, वसति सङ्कीर्णत्वादिना यद्यनेकेषु गृहेषु तिष्ठन्ति साधवस्तर्हि यत्र गुरवस्तिष्ठन्ति स शय्यातरो भवति, नान्ये गृहाधिपाः।

आहारादिकं न कल्पते इति वृद्धाम्नायः । तृण-डगल-भस्म-मल्लक-पीठफलक-शय्या-संस्तारक-लेपादिवस्तूनां सोपधिकशिष्यस्य च ग्रहणं तु कल्पते, बाह्यपरिभोगत्वेन तेषां भगवताऽनुज्ञातत्वात् ३ ।

"रायपिंड"त्ति राजपिण्डः, तत्र राजा—छत्रधरः सेनापति-पुरोहित-श्रेष्ठ्य-मात्य-सार्थवाहरूपैः पञ्चभिर्लक्षणैर्युतो मूर्द्धाभिषिक्तस्तस्य अशनादिचतुर्विध आहारो वस्त्रं पात्रं कंबलं रजोहरणं चेत्यष्टविधः पिण्ड आद्यन्तिमजिन-तीर्थे सर्वसाधूनां न कल्पते, निर्गच्छदागच्छत्सामन्तादिभिः स्वाध्यायस्य अपशकुनबुद्ध्या शरीरादेश्च व्याघात-सम्भवात्स्वाद्यलोभ-लघुत्व-निन्दादिबहुदोषसम्भवाच्च, मध्यमजिनतीर्थसाधूनां तु ऋजुप्राज्ञत्वेन पूर्वोक्तदोषा-भावे कल्पते, दोषसद्भावे नापि कल्पत इति ४ ।

"किइकम्म"त्ति कृतिकर्म—वन्दनकं, तच्च द्विधा—अभ्युत्थानं द्वादशावर्त्तं च। द्विविधमपीदं यथायोग्यमुभयसन्ध्यं सर्वजिनतीर्थेषु सर्वैरपि साधुभिः साध्वीभिश्च यथाज्येष्ठानुक्रमेण नित्यं कर्त्तव्यं, किमुक्तं ?, लघुसाधुना ज्येष्ठो वन्दनीयः, साध्व्या तु शतवर्षदीक्षितयाऽप्यद्यदीक्षितः साधुर्वन्दनीय एव, पुरुषज्येष्ठो हि धर्म इति हेतोः[3] ५ ।

---

१ "तणडगलछारमल्लग-सिज्जासंथारपीढलेवाई । सिज्जायरपिंडो सो, न होइ सेहो य सोवहिओ ॥ १ ॥"

२ "असणाईण चउक्कं, वत्थ-पत्त-कंबल-पायपुंछणयं । निवपिंडम्मि न कप्पइ, पुरिमंतिमजिणजईणं तु ॥ १ ॥"

३ एतेन श्राद्धैरपि न वन्द्या साध्वीति न श्रद्धेयम्, श्राद्धधर्माच्छ्रमणधर्मस्य प्रधानतमत्वात्, स्वस्वधर्मेष्वेव पुरुषज्येष्ठो धर्म, अत. श्राद्धधर्मान्वितः श्राद्धः श्राद्धीषु ज्येष्ठत्वं भजते, न तु श्रमणधर्मान्वितासु श्रमणीषु, किञ्च—साधुवदेव साध्वीनामपि सुखपृच्छादिकं विधेयं श्राद्धैरित्युक्तं श्राद्धविधावित्यलम् ।

“वय”त्ति व्रतानि, आद्यन्तिमजिनतीर्थसाधूनां ऋजुजडत्व-वक्रजडत्वाभ्यां तथाविधज्ञानाभावात्पञ्चमहाव्रतानि भवन्ति, मध्यमजिनतीर्थसाधूनां तु ऋजुप्राज्ञत्वेन तानि चत्वार्येव, यतस्तेषां मते स्त्रीपरिग्रह एवेति ६।

“जिट्ठ”त्ति ज्येष्ठः, सर्वेषामपि तीर्थङ्कराणां पुरुषज्येष्ठो धर्मः, अतः शतवर्षदीक्षितयाऽपि साध्व्याऽद्यदीक्षितः साधुर्वन्द्यते। अथवा ‘ज्येष्ठ’ इति वृद्धत्व-लघुत्वव्यवहारः, स च श्रीआदिनाथमहावीरजिनसाधूनामुपस्थापना-(बृहद्दीक्षा) पर्यायेण गण्यते, अजितादिद्वाविंशतिजिनसाधूनां तु दीक्षादिनादेव, निरतिचारचारित्रत्वात्तेषां। सहप्रव्रजितानां पितापुत्र-मातासुता-नृपामात्यादीनां समकमेव षड्जीवनिकायाध्ययनयोगोद्वहनादियोग्यताप्रासानां स्तोकान्तरितानां वा किञ्चिद्विलम्बेनापि पित्रादीनामेव प्रथममुपस्थापना विधेया, पुत्रादीनां सप्रज्ञत्वे च यदि पित्रादयोऽनुमन्यन्ते तदा पुत्रादयः प्रथममुपस्थापनीयाः, नान्यथा, यथा पित्रादीनामप्रीतिर्न स्यादिति ७।

“पडिक्कमण”त्ति प्रतिक्रमणम्, अतिचारो भवतु मा वा, परं श्रीआदिनाथ-महावीरजिनसाधुभिरवश्यमुभयसन्ध्यं यथायोगं पाक्षिकाद्यपि च प्रतिक्रमणं कर्त्तव्यमेव, द्वाविंशतिजिनसाधुभिस्तु अतिचारकारणे प्रतिक्रमणं क्रियते, नान्यथा। कारणेऽपि दैवसिकं रात्रिकं वा, न तु पाक्षिकादय इति ८।

“मास”त्ति मासकल्पः, स चाद्यान्त्यजिनसाधुभिः शेषकालेऽवश्यं कर्त्तव्यः, दुर्भिक्षादिकारणेऽपि शाखापुरकोणकादिपरावर्त्तनेनाप्यवश्यं सत्यापनीयः, परं शेषकाले न मासादधिकं स्थातव्यमेकत्र, येन क्षेत्रप्रति-

गन्धादिदोषा न भवेयुः× । अजितादिद्वाविंशतिजिनसाधूनां तु न मासकल्पनियमः, ते हि कारणाभावे देशोनां पूर्वकोटीमपि यावदेकत्र तिष्ठन्ति, कारणे च न मासमपीत्यनियतोऽयं कल्पस्तेषाम् ९ ।

"पज्जोसणाकप्पो"त्ति पर्युषणाकल्पः, तत्र 'परि' सामस्त्येन-द्रव्यक्षेत्रकालभावेन 'उषणा' वसनं पर्युषणा, सा द्विधा-गृहस्थज्ञाता गृहिज्ञाता च, तत्र अशिवादिकारणे कदाचिद्गमनं स्यात्ततः पञ्चपञ्चदिनवृद्ध्या चन्द्रवर्षे पञ्चाशद्दिनं अभिवर्द्धिते तु विंशतिदिनानि यावदनभिगृहीता-अनिश्चिता स्थितिर्यस्यां सा गृहस्थज्ञाता, या तु गृहिज्ञाता सा सांवत्सरिककृत्यविशिष्टा ज्ञेया । यदुक्तं-"एत्थ य अणभिग्गहियं, वीसइराइं सवीसयं मासं । तेण परमभिग्गहियं, गिहिनायं कत्तियं जाव ॥ १ ॥' अनभिगृहीतं-अनिश्चितं, अशिवादिभिर्निर्गमभावात्, आह च-'असिवादिकारणेहिं, अहवा वासं न सुट्ठु आरद्धं । अभिवड्ढियम्मि वीसा, इयरेसु सवीसइमासो ॥ १ ॥' यत्र संवत्सरे अधिकमासो भवति, तत्र आषाढ्या विंशतिर्दिनानि यावदनभिग्रहिक (अनिश्चित) आवासोऽन्यत्र (चन्द्रवर्षे) सविंशतिरात्रं मासं-पञ्चाशतं दिनानी"ति पर्युषणाकल्पनिर्युक्तिगाथाभ्यां स्थानाङ्गे पञ्चमस्थानवृत्तौ श्रीमदभयदेवसूरिपूज्यैः । अनेन सिद्धं यदतः परमभिगृहीतं-निश्चितं गृहिज्ञातं कार्त्तिकीं यावद्दिनशतं अभिवर्द्धितवर्षे, चन्द्रवर्षे दिनसप्ततिं च स्यातव्यमिति । तथा "अभिवड्ढियम्मि वीसा, इयरेसु सवीसइमासो" इति पर्युषणाकल्पनिर्युक्तौ, तथा "अभिवड्ढियवरिसे वीसतिराते गते गिहिणातं

---

× यत्र स्वस्य द्रव्यक्षेत्रादिसमस्तप्रतिबन्धनिममत्वेऽपि 'वयं मासकल्पसत्यापका', अमुकेन तद्व्यवच्छेदः प्रलपित.' इत्यादि मिथ्याप्रलपनं तद्वक्तुः पृथुस्थूलबुद्धेरेवानुमापकं, वस्तुतो मासानन्तरं लब्धपुनरावृत्त्याऽन्यत्र गमनमेव मासकल्पो, न तु एकादिरात्रिमन्यत्रोपित्वा पुनस्तत्रैवागमनस्य नाम मासकल्पः ।

करेंति, तिसु चंदवरिसेसु सवीसतिराते मासे गते गिहिणातं करेंति" इति निशीथचूर्णौ, तथा "गृहिज्ञाता तु सा यस्यां सांवत्सरिकातिचारालोचनं लुञ्चनं पर्युषणायां कल्पसूत्रकथनं चैत्यपरिपाटी अष्टमं तपः सांवत्सरिकप्रतिक्रमणं च क्रियते, यया च व्रतपर्यायवर्षाणि गण्यन्ते, सा चन्द्रवर्षे नभस्य शुक्लपञ्चम्यां कालकसूर्यादेशाच्चतुर्थ्यामपि जनप्रकटा कार्या। यत्पुनरभिवर्द्धितवर्षे विंशत्या दिनैः पर्युषितव्यमित्युच्यते तत्सिद्धान्तटिप्पणानुसारेण, तत्र हि युगमध्ये पौषो युगान्ते चाषाढ एव वर्द्धते, नान्ये मासाः, तानि च टिप्पणानि अधुना न सम्यग् ज्ञायन्ते, अतो दिनपञ्चाशतैव पर्युषणा सङ्गतेति वृद्धाः" इति कल्पसूत्रावचूरौ तपागच्छीयश्रीकुलमण्डनसूरयः। "एत्थ अधिमासगो चेव मासो गणिज्जति, सो वीसाए समं सवीसतिरातो मासो भणति चेव" इति बृहत्कल्पचूर्णौ। अधिकमासं गणयित्वैव पञ्चाशद्दिनानां पूर्त्तिर्विहिताऽत्र चूर्णिकारैः, तथा च श्रीकालकसूरेरिव पञ्चाशद्दिनादर्वागपि सांवत्सरिकं पर्व कर्त्तुं कल्पते, परं न तदुपरि, अत एवोक्तं श्रीपर्युषणाकल्पसूत्रे–'सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेमो, अंतरा वि य से कप्पइ, नो से कप्पइ तं रयणिं उवाइणावित्तए" इति। समवायाङ्गसूत्रपाठोऽपि चतुर्मासप्रमितवर्षाकालापेक्षिक एव, तथाहि (आ० स० मु० ८१ पत्रे)–"समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते सत्तरिएहिं राइंदिएहिं सेसेहिं वासावासं पज्जोसवेइ"–(टीका–) "वर्षाणां–चतुर्मासप्रमाणस्य वर्षाकालस्य सविंशतिरात्रे–विंशतिदिवसाधिके मासे व्यतिक्रान्ते, पञ्चाशति दिनेषु अतीतेषु इत्यर्थः, सप्तत्यां च रात्रिदिनेषु शेषेषु, भाद्रपदशुक्लपञ्चम्यामित्यर्थः, वर्षासु आवासो वर्षावासः–वर्षावस्थानं, "पज्जोसवेइ"त्ति परिवसति–सर्वथा वासं करोति। पञ्चाशति प्राक्तनेषु दिवसेषु तथाविधवसत्यभावादिकारणे स्थानान्तरमप्याश्रयति, अतिभाद्रपदशुक्लपञ्चम्यां तु वृक्षमूलादावपि निवसतीति

हृद्यं" इति । पञ्चमासप्रमाणवर्षाकालापेक्षिकोऽप्यभविष्यदुपरोक्तपाठश्चेत्तदा "चतुर्मासप्रमाणस्य वर्षाकालस्य" इति नाकथयिष्यन् वृत्तिकाराः श्रीमदभयदेवसूरिपूज्याः, इति सुविमृश्यं । नायुक्तं पञ्चमासप्रमाणे चातुर्मासिके "पंचण्हं मासाणं" इत्यादेस्त्रयोदशमासात्मके सांवत्सरिके च "तेरसण्हं मासाणं" इत्यादेर्जल्पनं, यतः "तेरस य चंदमासा, एसो अभिवड्ढिओ य नायव्वो" (वृत्तिः)—"त्रयोदश चन्द्रमासा यस्मिन् संवत्सरे भवन्ति स एष संवत्सरोऽभिवर्द्धित इत्युच्यते" इति ज्योतिष्करण्डकप्रकीर्णकवृत्त्योः १९ पत्रे । तथा "गोयमा ! अभिवड्ढियसंवच्छरस्स छवीसाइं पव्वाइं—अभिवर्द्धितसंवत्सरस्य षड्विंशतिपर्वाणि, तस्य त्रयोदशमासात्मकत्वात्" इति सूर्यप्रज्ञप्तिसूत्रवृत्त्योः १५५ पत्रे उक्तत्वात्सर्वदाऽपि "चउण्हं—बारसण्हं वा मासाणं" इत्याद्येव जल्पितव्यमिति नियामकशास्त्रप्रमाणाभावाच्च । न क्वाप्युपलभ्यते यत्सर्वेष्वपि वर्षेषु "चउण्हं—बारसण्हं वा मासाणं" इत्याद्येव जल्पितव्यमिति शास्त्राज्ञा, किन्तु "एगस्स पक्खस्स, पन्नरसण्हं दिवसाणं" इत्याद्यावश्यकबृहद्वृत्त्युक्त्या यथायोग्या योजना क्रियते । अन्यच्च—पञ्चभिर्मासैर्दशभिः पक्षैश्चातुर्मासिकं त्रयोदशमासैः षड्विंशतिपक्षैश्च सांवत्सरिकं कुर्वन्नपि स्वमुखेन च प्रतिपाक्षिकं त्रिस्त्रिवारं "एगस्स पक्खस्स, पन्नरसण्हं दिवसाणं" इत्यादिकं सत्यं भणित्वाऽपि चातुर्मासिके सांवत्सरिके च पुनः "चउण्हं—बारसण्हं वा मासाणं" इत्याद्यसत्यं जल्पन् कश्चिद्वाचाटः शास्त्राणां स्वाचारस्यापि च विराधकः । न च भाद्रपदमासप्रतिबद्धैव पर्युषणा, यतश्चेदेवं स्यात्तर्हि शास्त्रकाराणां "सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेमो, अंतरावि य से कप्पइ" इत्यादिसर्वमालजालं व्युत्सृज्य "सव्वेसु वि वरिसेसु भद्दवयसुद्धपंचमीए चेव संवच्छरियं पडिक्कमियव्वं" इत्येव-

मेव वक्तुमुचितं स्यात्। न हि गृहिज्ञाताद्भिन्नमुपलभ्यते क्वापि वार्षिकपर्वविधानम्। अतोऽनागमिकमसङ्गतं च पर्युषणाशब्दस्य 'सामस्त्येन वसनं वार्षिकं पर्व च' इत्येतदर्थद्वयकरणं। ननु अर्थद्वयविधानमन्तरेण तीर्थङ्कराणामपि संवत्सरप्रतिक्रान्त्यादिकृत्यकरणप्रसङ्गः स्यात्, न चैतदिष्टं, इति चेन्मैवं, तेषां हि कल्पातीतत्वात्कथं प्रतिक्रमणादिक्रियायाः करणत्वं सम्भाव्यते? तेष्विति विचारय। न च "अभिवड्ढियम्मि वीसा" इत्यादिपाठो गृहिज्ञातमात्रापेक्षिक इति वाच्यं, शास्त्रेषु सर्वत्रापि गृहिज्ञाताज्ञातयोरेव पर्युषणाभेदयोर्दृश्यमानत्वात्, न च क्वाप्यायाति गन्धोऽपि गृहिज्ञातमात्रायाः। यदा च प्राग्विंशत्या दिनैः सांवत्सरिककृत्यविशिष्टा गृहिज्ञातपर्युषणा बभूव तदाऽपि पाश्चात्यानां दिनानां शतमेव बभूव, ततः कथं साम्प्रतं दूष्यते तत्। न च प्रथमो मासोऽधिक इत्यपि वक्तुमुचितं, यतः "अइरित्ता अहिगमासा—'अतिरिक्ता' उचितकालात्समधिका अधिकमासकाः प्रतीताः" इति दशवैकालिकनिर्युक्तिवृत्तिवाक्याद् द्वितीय एवाधिकः, न हि उचितकालात्समधिकत्वं प्रथमे जाघटीति, किं प्रथम एव पुत्रोऽधिक इति वक्तुं शक्यते केनापि? इति विचारय। अतः सिद्धं—साम्प्रतं लोकरूढ्या यः कोऽपि मासो वर्द्धतां चातुर्मासिकदिनात्पञ्चाशद्दिनेषु व्यतीतेषु अवश्यमेव सांवत्सरिककृत्यविशिष्टा गृहिज्ञातपर्युषणाकार्येत्यलम्प्रसङ्गेन। तत्र प्रागुक्ता गृह्यज्ञातपर्युषणा सा यस्यां वर्षायोग्यपीठफलक—शय्या—संस्तारकादीनां सम्प्राप्ते कल्पोक्ता द्रव्यादिचतुर्भेदभिन्ना स्थापना क्रियते। सा चैवं—द्रव्यतः स्वोचितानां तृणडगलादीनां परिग्रहः सचित्तानां च परिहारः, तत्र सचित्तद्रव्यं—शिष्यः, स चातिश्रद्धं राजानममात्यं च विनाऽन्यो न

दीक्ष्यते। अचित्तद्रव्यं वस्त्रादिकं, मिश्रद्रव्यं सोपधिकः शिष्यो न गृह्यते। क्षेत्रतो भिक्षाचर्या-देवगुरुवन्दनाद्यौत्सर्गिके कार्ये सक्रोशं योजनं, ग्लानवैद्यौपधाद्यापवादिके तु चत्वारि पञ्च वा योजनानि यावद्गमनागमनप्रमाणकरणं। कालतो मर्यादीकृतं कालं यावन्नियतावस्थाननियमः, स च द्विविधः—सालम्बनः-सकारणो निरालम्बनः-कारणरहितश्च, निरालम्बनोऽपि द्विभेदो-जघन्य उत्कृष्टश्च, तत्र जघन्यस्तावत्सांवत्सरिकप्रतिक्रमणात्प्रारभ्य कार्त्तिकचातुर्मासिकं यावच्चन्द्रवर्षे ससतिदिनमानोऽभिवर्द्धिते च शतदिनप्रमितः। द्विविधोऽप्ययं निरालम्बनः स्थविरकल्पिकानां, जिनकल्पिकानां तु एको निरालम्बनश्चातुर्मासिक एव। सालम्बनः-कारणिकस्तु कृताषाढमासकल्पे क्षेत्रेऽनन्तरमेव चतुर्मासकं विधाय संलग्नमेव मासकल्पकरणे उत्कृष्टः षाण्मासिकः,

यदुक्तं-"इय सत्तरि जहण्णा, असिइ णउई वीसुत्तरसयं च। जइवासे मग्गसिरे, दसराया तिन्नि उक्कोसा ॥ १ ॥

काऊण मासकप्पं, तत्थेव ठियाणऽतीत मग्गसिरे। सालंबणाण छम्मा-सिओ उ जेट्ठुग्गहो होइ ॥ २ ॥"

अयमपि स्थविरकल्पिकानामेव। भावतः क्रोधादीनां विवेकः (त्यागः) समित्यादिषु चोपयोगः। योग्यक्षेत्राद्यभावे त्वपवादतः पञ्चपञ्चदिनवृद्ध्या चन्द्राभिवर्द्धितवर्षयोः क्रमेण दशपञ्चकान् चतुःपञ्चकांश्चातिक्रम्य यावद्भाद्रपदीयायां श्रावणीयायां चामावास्यायां भवति,

यदुक्तं-"आसाढपुण्णिमाए पज्जोसविंति एस उस्सग्गो, सेसकाले पज्जोसविंताणं सव्वो अववाओ" इति निशीथचूर्णि-दशमोद्देशके।

गृहिज्ञाता तु सांवत्सरिककृत्यविशिष्टा, सांवत्सरिककृत्यानि चेमानि—

"संवत्सरप्रतिक्रान्ति–र्लुञ्चनं चाष्टमं तपः। सर्वार्हद्भक्तिपूजा च, संघस्य क्षामणं मिथः ॥ १ ॥"

अथैवं वर्णितस्वरूपोऽभिवर्द्धिते वर्षे विंशतिदिनानि चान्द्रे च पञ्चाशद्दिनानि यावद् गृह्यज्ञातस्ततोऽनन्तरं गृहिज्ञातः पर्युषणाकल्प आद्यान्तिमजिनतीर्थसाधूनां नियतो, न तु शेषाणां, यतस्ते दोषाभावे देशोनां पूर्वकोटीमपि यावदेकत्र तिष्ठन्ति, दोषसद्भावे तु न मासमपीति १०।

एते दशापि कल्पाः प्रथमान्तिमजिनतीर्थे नियता एव, द्वाविंशतिजिनतीर्थे तु शय्यातर-चतुर्व्रत-पुरुषज्येष्ठ-कृतिकर्मलक्षणाश्चत्वारो नियताः, शेषास्तु (आचेलक्यौ-द्देशिक-प्रतिक्रमण-राजपिण्ड-मास-पर्युषणालक्षणाः षड्) अनियताः। महाविदेहेष्वप्येवमेव द्वाविंशतिजिनवत्सर्वेषां जिनानां कल्पव्यवस्था, इति दशानामपि कल्पानां नियतानियतविभागः। नन्वेक एवास्ति साध्यो मोक्षमार्गः श्रमणधर्मस्य, ततः किं कारणं प्रथमान्तिमजिनसाधूनां मध्यमजिनसाधूनां चाचारभेदे ?, उच्यते—जीवविशेषा एव तत्र कारणं। यदुक्तं सप्तदशे पञ्चाशके—

"पुरिमाण दुव्विसोज्झो, चरिमाणं दुरणुपालओ कप्पो। मज्झिमगाण जिणाणं, सुविसुज्झो सुहणुपालो अ १

उज्जुजडा पुरिमा खलु, नडाइनायाउ हुंति नायव्वा। वक्कजडा पुण चरिमा, उज्जुपण्णा मज्झिमा भणिया॥२॥"

१ पूर्वेषा दुर्विशोध्यः, चरमाणां दुरणुपाल. कल्पः। मध्यमकानां जिनाना, सुविशोध्य. सुखानुपालश्च ॥ १ ॥
ऋजुजडाः पूर्वाः खलु, नटादिज्ञाताद्भवन्ति ज्ञातव्याः। वक्रजडाः पुनश्चरमाः, ऋजुप्राज्ञा मध्यमा भणिताः ॥ २ ॥

आद्यजिनतीर्थजीवा ऋजुजडास्तेषां धर्मस्य बोधो दुर्लभः, जडत्वात् । वीरजिनतीर्थसाधूनां पालनं दुष्करं, वक्रजडत्वात् । मध्यमजिनसाधूनां तु एतद्द्वयमपि सुकरं, ऋजुप्राज्ञत्वात् । अत्रार्थे नटादयो दृष्टान्ता ज्ञातव्यास्तथाहि—केचन प्रथमजिनमुनयो बहिर्भूमेश्चिरेणागता गुरुभिः पृष्टाः—'भो मुनयः ! भवद्भिरियती वेला क्व कृता ?'। तैरुक्तं—'स्वामिन् ! नटं नृत्यन्तं विलोकयितुं स्थिताः'। गुरुभिरुक्तं—'न कल्पते नटनृत्यविलोकनं साधूनां'। स्वीकृतं तैरपि । पुनः कदाचित्त एव साधवश्चिरेणोपाश्रयं समागतास्तथैव गुरुभिः पृष्टाः प्रोचुः—'प्रभो ! अद्य नटीं नृत्यन्तीमवलोकमानाः स्थिताः । गुरुभिरूचे—'भो महाभागाः ! तदानीं भवतां नटो निषिद्धस्ततो नटी तु सुतरां निषिद्धैव'। तैर्विज्ञप्तं—'स्वामिन् ! नास्माभिरिदं ज्ञातं, अथैवं न करिष्यामः'। अत्र जडत्वान्नटे निषिद्धे नटी निषिद्धैवेति तैर्न ज्ञातं, ऋजुत्वाच्च सरलमुत्तरं ददाविति प्रथमः ।

कश्चित्कुङ्कणदेशीयो वृद्धः प्रव्रजितः, स चैकदा ऐर्यापथिकीकायोत्सर्गे चिरं स्थितो, गुरुभिः पृष्टः—'किं चिन्तितमियद्दीर्घे कायोत्सर्गे ?'। तेनोक्तं—'जीवदया'। पुनः कथमिति गुरुभिः पृष्टः प्राह—'भगवन् ! पूर्वं गृहस्थावस्थायां मया वृक्षनिपूदनादिपूर्वकसुसानि धान्यानि बहून्यभूवन्, इदानीं तु मत्पुत्रा निश्चिता यदि वृक्षनिपूदनादिर्न कुर्युस्तदा ते वराकाः कथं भविष्यन्ति ?' इति ऋजुत्वादुक्तं यथास्थितं स्वाभिप्रायं, ततो गुरुभिः—'महाभाग ! दुर्ध्यातं भवता, अयुक्तमेतद्यतीनां' इत्युक्ते दत्तं तदैव "मिथ्यादुष्कृतं" तेनेति द्वितीयः ।

अथ वीरजिनतीर्थजीवानामपि वक्रजडत्वे दृष्टान्तद्वयमाह—केचिद्वीरतीर्थश्रमणा नटं नृत्यन्तं वीक्ष्याऽऽगतास्तथैव पृष्टा ऊचुः—'नटनृत्यं वीक्षमाणाः स्थिताः'। ततो गुरुभिर्निषिद्धाः। पुनरन्यदा चिरादागताः पृष्टा वक्रतयाऽन्यान्यन्यान्युत्तराणि ददुः। निर्बन्धेन पृष्टाः 'नटीं नृत्यन्तीं वीक्षमाणाः स्थिताः' इत्युक्तवन्तः। गुरुभिरुपालब्धाः सन्तो गुरूनेव प्रत्युपालब्धुं प्रवृत्ताः, यथा—'अस्माभिरज्ञैः किं ज्ञायते?, यदा नटनृत्यनिषेधः कृतस्तदैव कथं न कृतो भवता नटीनृत्यनिषेधोऽपि?'। एतादृशा वक्रजडा इति प्रथमः।

कश्चिच्छ्रेष्ठिसुतः पित्रा बहुशः शिक्ष्यमाणो 'वृद्धानां सम्मुखं न जल्पनीयं, प्रत्युत्तरं च न देयं' इत्यादिवचांसि वक्रत्वेन मनसि दधार। अन्यदा बहिर्गतेषु सर्वेषु स्वजनेषु 'पुनः पुनः शिक्षयन्तं पितरमद्य शिक्षयामी'ति विचिन्त्य द्वारं पिधाय स्थितः। आगतेषु पित्रादिषु बहुशः शब्द्यमानोऽपि न जल्पति न चोद्घाटयति। भित्तिमुल्लंघ्यान्तःप्रविष्टेन पित्रा हसन् दृष्टः, उपालब्धश्चाकथयत्—'भवन्त एव तु कथयन्त्यहर्निशं यद्वृद्धानामुत्तरं न देयं'। पित्रोक्तं—'अरे!! ईर्ष्यया जनसमक्षमुत्तालतया च न जल्पनीयं'। तेनोक्तं—'वरं'। अन्यदा गृहेऽग्निर्लग्नः, जनन्या प्रोक्तं—'पुत्र! तव जनकमाकारयापणादग्निविध्यापनाय'। गतः स आपणं, बहुजनान्तः स्थितं पितरं वीक्ष्य स्थितस्तूष्णीको घटिकैकां यावत्। ततः कर्णाभ्यर्णीभूय शनैरुक्तं—'गृहेऽग्निर्लग्नोऽस्ति'। पित्रोक्तं—'रे मूर्ख! किमियत्कालं नोक्तवान्?'। तेनोक्तं—'भवद्भिरेव तूक्तं—'जनसमक्षमुत्तालतया न वक्तव्यं' एतादृशा वक्रजडा भवन्तीति द्वितीयः।

पीठिका वक्रजडत्वे दृष्टान्त-द्वयम्।

मध्यमजिनसाधूनां ऋजुप्राज्ञत्वे दृष्टान्तमाह—केचिदजितजिनसाधवो नटनृत्यं निरीक्ष्य चिरेणागता गुरुभिः पृष्टा यथास्थितमकथयन्, निषिद्धाश्च गुरुभिः। पुनरन्यदा त एव साधवो बहिर्गता नटीनृत्यं दृष्ट्वा प्राज्ञत्वाच्चिन्तितवन्तः, यन्नटनृत्यवन्नटीनृत्यमपि नैव वीक्ष्यं, विशेषतो रागहेतुत्वादिति।

ननु भवतु धर्मो मध्यमजिनयतीनां ऋजुप्राज्ञानां, परमादिमजिनयतीनां ऋजुजडानां कथं धर्मः?, अनवबोधत्वात्, तथा च वक्रजडानां वीरजिनयतीनां तु सर्वथैवाभावो धर्मस्येति चेन्मैवं, ऋजुजडानामादिमजिनयतीनां जडत्वेन स्खलनासद्भावेऽपि भवत्येव धर्मः, भावविशुद्धित्वात्। तथा वक्रजडानामपि चरमजिनयतीनां यद्यपि ऋजुप्राज्ञापेक्षयाऽविशुद्धो भवति, परं सर्वथैव न भवतीति न वाच्यं, तथा भणने हि महान् दोषः, तदुक्तं—"×जो भणइ नत्थि धम्मो, न य सामाइयं न चेव य वयाइं। सो समणसंघबज्झो, कायवो समणसंघेण॥ १॥"*

यश्च चन्द्रवर्षे जघन्यः सप्ततिदिनमानोऽभिवर्द्धिते च शतदिनमानो नियतावस्थानलक्षणो गृहिज्ञातपर्युषणाकल्प उक्तः सोऽपि कारणाभावे एव, कारणे तु तन्मध्येऽपि विहर्त्तुं कल्पते, तद्यथा—

"अशिवे भोजनाप्राप्तौ, राजरोगपराभवे। कृतपर्युषणानां हि, विहर्त्तुं कल्पतेऽन्यतः॥ १॥"

"असति स्थण्डिले जीवा-कुले च वसतौ तथा। कुन्थुष्वग्नौ तथा सर्पे, विहर्त्तुं कल्पतेऽन्यतः॥ २॥"

तथा एभिर्वक्ष्यमाणैः कारणैर्व्यतीतेऽपि चतुर्मासके तत्रैव स्थातुं कल्पते—

× गो भणति नास्ति धर्मो, न च सामायिकं न चैव व्रतानि। स श्रमणसंघबाह्यः, कर्त्तव्यः श्रमणसंघेन॥ १॥ * इति तीर्थोद्गारिके गाथाङ्कः ८६९।

"वर्षादविरते मेघे, मार्गे कर्दमदुर्गमे। अतिक्रमेऽपि कार्त्तिक्या–स्तिष्ठन्ति मुनिसत्तमाः॥ १ ॥"

एवमशिवादिदोषाभावेऽपि संयमनिर्वाहाय क्षेत्रगुणा विलोक्याः, तत्र चतुर्गुणयुतं क्षेत्रं जघन्यं, ते चामी—

"सुलहा विहारभूमी[१], वियारभूमी[२] य सुलहसज्झाओ[३]। सुलहा भिक्खा[४] य जहिं, जहन्नयं वासखित्तं तु॥१॥"

यत्र विहारभूमिः सुलभा, निकटं जिनायतनमित्यर्थः १। यत्र विचारभूमिः सुलभा, स्थण्डिलं शुद्धं–निर्जीवमनालोकं च २। यत्र स्वाध्यायभूमिः सुलभा, अस्वाध्यायादिरहिता ३। यत्र च भिक्षा सुलभेति ४।

तथा त्रयोदशगुणयुतमुत्कृष्टं, ते चामी—

"चिक्खल्ल[१]-पाण[२]-थंडिल[३]-वसही[४]-गोरस[५]-जणाउले[६] विज्जे[७]। ओसह[८]-निचया[९]-हिवई[१०], पासंडा[११] भिक्ख[१२]-सज्झाए[१३]॥"

यत्र न प्रचुरः कर्दमः १, न भूयांसः संमूर्च्छिमाः प्राणिनः २, स्थण्डिलं निर्दोषं ३, वसतिः स्त्र्यादिसंसर्गप्रभृतिदोषरहिता ४, गोरसः (दुग्धादिः) प्रचुरः ५, जनो भूयान् सोऽप्यतिभद्रकः ६, वैद्या भद्रकाः ७, औषधानि सुलभानि ८, गृहस्थगृहाणि सपरिवाराणि धनादिनिचितानि च ९, नृपो भद्रकः १०, ब्राह्मणतापसादयः पाषण्डिनो भद्रकाः, येन मुनीनामपमानो न भवेत् ११, भिक्षा सुलभा १२, स्वाध्यायः शुद्ध्येदिति १३।

पूर्वोक्तचतुर्गुणादधिकं पञ्चादिगुणं त्रयोदशगुणाच्च हीनं द्वादशगुणपर्यन्तं क्षेत्रं मध्यमं, यदुक्तं—

"चउग्गुणोववेयं तु, खित्तं होई जहन्नयं। तेरस गुणमुक्कोसं, दुण्ह मज्झम्मि मज्झिमयं॥ १ ॥"

एवं च तावदुत्कृष्टे क्षेत्रे, तस्याप्राप्तौ मध्यमे, तस्याप्यप्राप्तौ जघन्ये, साम्प्रतं तु गुर्वादिष्टे क्षेत्रे श्रमणैः पर्युषणाकल्पोऽवश्यं कर्तव्यः।

यतः–'मन्त्राणां परमेष्ठिमन्त्रमहिमा तीर्थेषु शत्रुञ्जयो, दाने प्राणिदया गुणेषु विनयो ब्रह्म व्रतेषु व्रतम्।
सन्तोषो नियमे तपस्सु च शमस्तत्त्वेषु सद्दर्शनं, सर्वेषूत्तमपर्वसु प्रगदितः श्रीपर्वराजस्तथा ॥ १ ॥"×

दशविधोऽप्ययं कल्पो दोषाभावेऽपि क्रियमाणस्तृतीयौषधवत् हितकरो भवति, तथाहि–केनापि नृपतिना स्वपुत्रस्यानागतरोगचिकित्सार्थं त्रयो वैद्याः समाहूताः, तेष्वाद्यः प्राह–ममौषधं सन्तं रोगं हन्ति, अन्यथा दोषं प्रकटयति। राज्ञोक्तं किमनेनौषधेन सुप्तसिंहोत्थापनकल्पेन ?। द्वितीय आह–ममौषधं सन्तं रोगं हन्ति, असति

× यथाऽर्हच्छासने महत्त्वमस्य पर्वणस्तथैवास्ति शिवशासनेऽपि, तथाहि–पुष्पवत्यां नगर्यां गङ्गाधराख्यो विप्रः परिवसति। कालान्तरे तस्य मातापितरौ मिथ्या तस्यैव गृहे शुनीत्वेन वृषभत्वेन चोत्पन्नौ। गृहपरिजनादिवीक्षणेनोत्पन्नं जातिस्मरणं तयोः। अन्यदा पित्रोः श्राद्धोत्सवः प्रारब्धो गङ्गाधरेण, तद्दिने वृषभो भाटकेनार्पितमौलिकस्य, शुनी गृहे स्थिता। ज्ञातीयजनभोजनाय निष्पादितां क्षैरेयीं सर्पगरलाक्रान्तां विलोक्य 'मा भूद्विषाक्रान्तो मम परिजन' इति मियोच्छिष्टा कृता तया। ततो रुष्टेन गङ्गाधरेण लकुटप्रहारेण तस्याः कटी भग्ना, ततः पूत्कुर्वन्ती वृषभगवादनीं गता। तेन चान्यदुग्धमानीय क्षैरेयीं कृत्वा भोजिता विप्राः। सन्ध्यायां गवादन्यामागतेन वृषभेण पृष्टा कुर्कुरी–'कथमद्य पूत्करोषी'ति। तयोक्त–स्वपुत्रेण यष्टिप्रहारेण भग्ना मे कटी, मया विषभक्षणाद्रक्षिता सर्वे विप्रा उपकृताः, स्वपुत्रेण स्वेवमुपकृताऽहं। वृषभेणोक्तं–अहमप्यनेन दुरात्मना तैलिकस्य दत्तस्तेन चाखिलं दिनं तिलयन्त्रे वाहयित्वेदानीमत्र लात्वा बद्धः। निकटस्थो गङ्गाधर एतं वृत्तान्तं श्रुत्वाऽतीव खिन्नो विदेशं गत्वा पृष्टास्तापसास्तयोः कुगतिकारणं पर्वदिवसे मैथुनसेवनमूचुः, भाद्रपदशुक्लपञ्चम्यां तस्य व्रतकरणेन तयोरुद्धारं चोपदिष्टवन्तः। तेनापि तदुक्तरीत्या विहितं तद्व्रतं, अतः सुगतिभाजौ जातौ तन्मातापितरौ, तत ऋषिपञ्चमीति नाम्ना महापर्व प्रवृत्तम्।

च गुणदोषयोरन्यतरदपि न करोति; राज्ञोक्तं–किमनेनापि भस्मनि हुततुल्येन ?। तृतीयः प्राह–ममौषधं सद्भावे व्याधिं हन्ति, असद्भावेऽपि च शरीरसौन्दर्यादिकं जनयति, राज्ञा 'समीचीनमिदमौषधमि'ति भणित्वा कारिता तदीयौषधेन निजपुत्रस्य चिकित्सा। तद्वदयमपि दशविधः कल्पः सन्तं दोषं शोषयति, तदभावे च पोषयति श्रमणधर्ममिति। तदेवं समुपस्थिते पर्युषणापर्वणि मङ्गलार्थं पञ्चभिः षड्भिः सप्तभिर्वा दिनैर्नवभिरेकादशभिस्त्रयोदशभिर्वा × वाचनाभिः श्रीकल्पसूत्रं वाचनीयं, तच्च—

× "पूर्वं पञ्चरात्र प्रतिक्रमणानन्तरं पाक्षिकसूत्रपाठवत्साधूनां कल्पसूत्रश्रवणमुपलभ्यते, परं अयं विधिर्व्यवच्छिन्नः। साम्प्रतं तु श्रीवीरनिर्वृतेर्नवसु वर्षशतेषु अशीत्यधिकेषु गतेषु आनन्दपुरे पुत्रमरणार्त्तध्रुवसेननृपसन्तोपनिमित्तं सभासमक्षं कल्पो वाचयितुं प्रारब्धः, यदुक्तं श्रीकल्पसूत्रावचूरौ, तथाहि–'केचित्तु इदमाहुः, यत्–इयत्कालातिक्रमे ध्रुवसेननृपस्य पुत्रमरणार्त्तस्य समाधये आनन्दपुरे सभायां अयं ग्रन्थो वाचयितुं प्रारब्ध' इति । अन्यत्र तु सर्वसम्मतचिरन्तनग्रन्थेषु कुत्रापि वाचनानियमो न कृतः पूर्वसूरिभिः, प्रत्युत निशीथचूर्णौ प्रोक्तमस्ति 'ये नववाचनाभिः कल्पं वाचयन्ति ते पार्श्वस्थाः' इति, अत एव ऐदंयुगीना गीतार्थाः प्रतिगच्छं स्वपरम्परया यथारुचिवाचनां विदधानाः सन्ति। न च वाच्यं–वयं मूलविध्यनुसारेण पञ्चदिनानि कल्पं वाचयन्तो नववाचनानियमं कुर्वाणाः स्मः, कथं ?, तद्विधिलेशस्यापि अभावात् कथं तदनुसारिता ?, कथं ? इत्याह–मूलविधौ रात्रौ पार्श्वस्थपार्श्वे श्रवणं, साम्प्रतं तु दिवसे; पूर्वं तु गृहस्थादीनां असमक्षं, सम्प्रति तु तत्समक्षं; पूर्वं तु एकवारं, अधुना तु दिवसमध्येऽपि वारद्वयं वाचनं। अथ ये नववाचनातोऽधिकवाचनावाचने जिनाज्ञाबाह्यत्वं वदन्ति तेषामपि इदं अज्ञानविजृम्भितं, यतोऽत्र सूत्रोक्तविधिविपरीतत्वेन गीतार्थाचरणतो गच्छपरम्परा वर्त्तते । पुनः श्रीहीरविजयसूरिप्रसादीकृतप्रश्नोत्तरसमुच्चये तच्छिष्य पं० कीर्त्तिविजयगणिसमुच्चिते ग्रन्थे पं० वेलर्षिगणिकृतप्रश्नाधिकारे प्रथमप्रश्नेऽपि प्रोक्तं, तथाहि–'नवक्षणैः कल्पसूत्रं वाच्यते, कैश्चिदधिकैरपि वाच्यते, तदक्षराणि क्व सन्ति ? इति, तत्रोत्तरं–कल्पसूत्रं नवक्षणैर्वाच्यते परम्परातः अन्तर्वाच्यमध्ये नवक्षणविधानाक्षरसद्भावाच्चेति"। अत्रापि नववाचनावाचने गच्छपरम्परा एव प्रत्युत्तरिता, न तदक्षराणि दर्शितानि। अन्तर्वाच्यं तु तत्कृतं आधुनिकं च। तत इदं रहस्यं आगतं–मूलपक्षः कोऽपि नास्ति

पीठिका तृतीयौषधनिदर्शनं, नववाचनाया अनियतत्वम्

"यथा द्रुमेषु कल्पद्रुः, सर्वकामफलप्रदः। यथौषधीषु पीयूषं, सर्वरोगहरं परम् ॥ १ ॥"

"रत्नेषु गरुडोद्गारो, यथा सर्वविषापहः। मन्त्राधिराजो मन्त्रेषु, यथा सर्वार्थसाधकः ॥ २ ॥"

"यथा पर्वसु दीपाली, सर्वोत्सवसु सुखावहा। कल्पः सद्धर्मशास्त्रेषु, पापव्यापहरस्तथा ॥३॥" [विशेषकम्]

तथा च-"नार्हतः परमो देवो, न मुक्तेः परमं पदम्। न श्रीशत्रुञ्जयात्तीर्थं, श्रीकल्पान्न परं श्रुतम् ॥ ४ ॥"

एवं च साक्षात्कल्पद्रुम एवायं कल्पः, तस्य च अनानुपूर्व्या उक्तत्वात्—

"श्रीमद्वीरचरित्रबीजमभवच्छ्रीपार्श्ववृक्षाङ्कुरः, स्कन्धो नेमिचरित्रमादिमजिनव्याख्या च शाखाचयः। पुष्पाणि स्थविरव्रजस्य च कथोपादेयहेयं तथा, सौरभ्यं फलमत्र निर्वृतिमयं श्रीकल्पकल्पद्रुमे ॥ ५ ॥"

किञ्च-"वाचनात्साहाय्यदानात्, सर्वाक्षरश्रुतेरपि। विधिनाऽऽराधितः कल्पः, शिवदोऽन्तर्भवाष्टकम् ॥१॥"

तथा-"एगग्गचित्ता जिणसासणम्मि, पभावणापूअपरा नरा जे। तिसत्तवारं निसुणंति कप्पं, भवण्णवं ते लहु संतरंति ॥१॥"

श्रुत्वा चैवं कल्पमहिमानं कष्टधनव्ययसाध्येषु तपःपूजाप्रभावनाद्यन्यधर्मकार्येषु नालस्यं विधेयं, समग्रसामग्रीसहितस्यैव तस्य फलप्रापकत्वात्। यथा लोकेऽपि कृषिकर्मादौ कारणभूतादपि बीजादङ्कुरजलपवनादिसामग्री-

---

ण्यपि, पश्चात् येषां नववाचनानां गच्छपरम्परा ते नववाचनाभिः वाचयन्तु, अथ च येषां गच्छे नवाधिकवाचनानां परम्परा ते तदेकादशकं तत्त्रयोदशकं वा कुर्वन्तु, न कस्यापि निन्दा कार्या धर्मार्थिभिः, गच्छपरम्पराया व्यवस्थायाश्च स्वरुच्यनुयायित्वात्" इति सामाचारीशतके ६५ पत्रे।

१ एकाग्रचित्ता जिनशासने, प्रभावनापूजापरा नरा ये। त्रिसप्तवारान्निशृण्वन्ति कल्पं, भवार्णवं ते लघु सन्तरन्ति ॥ १ ॥

युतादेवाङ्कुरोत्पत्तिर्जायते, नान्यथा, तथेदं कल्पश्रवणमपि देवगुरुपूजा-प्रभावना-साधर्मिकवात्सल्यादि-सामग्रीसंयुतमेव यथोक्तफलहेतुः स्यात्। अन्यथा-"×इक्को वि नमुक्कारो, जिणवरवसहस्स वद्धमाणस्स। संसारसागराओ, तारेइ नरं व नारिं वा ॥ १ ॥" इति श्रुत्वा किञ्चित्प्रयाससाध्यं कल्पश्रवणमप्युपेक्षणीयं स्यात्।

अथ "पुरुषविश्वासे वचनविश्वासः" इति न्यायाद्वचनरूपापन्नस्यास्य सूत्रस्य वर्णितमाहात्म्यसिद्धये तत्प्रणेता प्ररूपणीयः, स च सर्वाक्षरसन्निपातविचक्षणश्चतुर्दशपूर्वविद्गुणप्रधानः श्रीमद्भद्रबाहुस्वामी दशाश्रुतस्कन्धाख्यच्छेदसूत्रस्याष्टमाध्ययनत्वेन प्रत्याख्यानप्रवादाभिधाननवमपूर्वादुद्धृतवानिदं पर्युषणाकल्पसूत्रं।

पूर्वाणि च क्रमशः प्रथममेकेन, द्वितीयं द्वाभ्यां, तृतीयं चतुर्भिः, चतुर्थमष्टभिः, पञ्चमं षोडशभिः, षष्ठं द्वात्रिंशद्भिः, सप्तमं चतुःषष्ट्या, अष्टममष्टाविंशत्यधिकेन शतेन, नवमं षट्पञ्चाशदधिकेन शतद्वयेन, दशमं द्वादशाधिकेन शतपञ्चकेन, एकादशं चतुर्विंशत्यधिकेन सहस्रेण, द्वादशं अष्टचत्वारिंशदधिकेन सहस्रद्वयेन, त्रयोदशं षण्णवत्यधिकेन सहस्रचतुष्केण, चतुर्दशं च द्विनवत्यधिकेन सहस्राष्टकेन हस्तिप्रमाणमषीपुञ्जेन लेख्यं, सर्वाणि च पूर्वाणि षोडशसहस्रैस्त्र्यशीत्यधिकैस्त्रिभिः शतैर्हस्तिप्रमाणमषीपुञ्जैर्लेख्यानि। तस्मान्महापुरुषप्रणीतत्वेन मान्यमिदं प्रतिसूत्रमनन्तार्थकमपि च।

× एकोऽपि नमस्कारो, जिनवरवृषभस्य वर्द्धमानस्य। संसारसागरात्, तारयति नरं वा नारीं वा ॥ १ ॥

पीठिका कल्पमाहात्म्यं, तत्प्रणेता, पूर्वश्रुतमानम्

यदुक्तं–"× सव्वनईणं जइ हुज्ज, वालुआ सव्वोदहीण जं उदयं। तत्तो अणंतगुणिओ, अत्थो इक्कस्स सुत्तस्स ॥१॥"
तथा "मुखे जिह्वासहस्रं स्यात्, हृदये केवलं यदि। तथापि कल्पमाहात्म्यं, वक्तुं शक्यं न मानवैः ॥ २ ॥"

अथास्य कल्पसूत्रस्य वाचने श्रवणेऽपि चाधिकारिणो मुख्यतः साधुसाध्व्य एव, तत्रापि कालतो रात्रौ विहितकालग्रहणोद्देशसमुद्देशादियोगानुष्ठानो वाचनोचितस्साधुर्वाचयति, अन्ये तु शृण्वन्ति । साध्वीश्रावणादिकारणे पुनर्निशीथचूर्ण्याद्युक्तविधिना दिवाऽपि वाचन–श्रवणयोरधिकारः, एषा प्रवृत्तिः प्रागभूत्, साम्प्रतं तु वीरादशीत्यधिकनवशतवर्षातिक्रमे मतान्तरेण त्रिनवत्यधिकनवशतवर्षातिक्रमे पुत्रमरणार्त्तस्य ध्रुवसेनभूपस्य समाधिसाधातुमानन्दपुरे (वडनगरे) श्रावकपर्षदि समहोत्सवं वाचयितुमारब्धं, ततः प्रभृति चतुर्विधोऽपि सङ्घः श्रवणेऽधिकारी। वाचने तु विहितयोगानुष्ठानः* साधुरेव, साध्वभाववति क्षेत्रादौ विहितयोगानुष्ठाना साध्व्यपि, अन्यथा तासां सांवत्सरिकप्रतिक्रान्त्यादिकृत्यानामपरिपूर्त्तिः, सांवत्सरिककृत्येषु कल्पसूत्रकर्षणस्यापि कृत्यत्वेनोक्तत्वात्, न च क्वाप्युक्तं कल्पसूत्रवाचनविरहितैव गृहिज्ञातपर्युषणा श्रमणीनामिति बोध्यम् + ।

× सर्वनदीना यावत्यो भवेयु–र्वालुका सर्वोदधीना च यदुदकं । ततोऽनन्तगुणितो–ऽर्थ एकस्य सूत्रस्य ॥ १ ॥

* सत्या शक्तावकृत्वा योगानुष्ठानं नैव कर्त्तव्यं सूत्रवाचनं, यत उक्तं–"योगरहितं–सम्यगकृतयोगोपचारं" इत्यावश्यकवृत्तौ ७३१ पत्रे श्रीमद्धरिभद्रसूरिपुरन्दरैः। तथा "विना योगकालग्रहणैर्विना तपसा च [यः] पठति वाचयति श्रावयति, अकृततपसः पार्श्वे च यः शृणोति तस्य सूत्राज्ञाभङ्गः, आगमाज्ञाभङ्गो हि महते संसाराय" इत्याचाराङ्गदीपिकायां श्रीमज्जिनहंससूरीश्वरैः । अतः सत्यामात्मशक्ताववश्यं योगानुष्ठानपुरस्सरमेव वाचनीयः सिद्धान्तः; नान्यथेति ।

+ प्रलपन्ति ये पण्डितम्मन्या· यद् व्याख्यानमात्रस्यापि निषेधः श्रमणीना, पुरस्कुर्वन्ति च स्वमतसिद्धये "केवलत्थीणं पुरओ, वक्खाणं पुरिसऽग्गओ अज्जा ।

"सम्प्रासे च महापर्व–ण्यस्मिन् विस्मेरभावनैः। विधेयं विधिना नाग–केतुनेवाष्टमं तपः ॥ १ ॥"

"तपःप्रभावाज्जन्तूनां, जायते किल शाश्वतम् । निर्वाणपदमप्याशु, नागकेतुरिव ध्रुवम् ॥ २ ॥"

तत्कथा चैवं–चन्द्रकान्तायां पुर्यां विजयसेनो राजा, श्रीकान्तो व्यवहारी, तस्य गेहिनी श्रीसखी, तयोरुपयाचितशतैरेकः पुत्रो जातः। स च बालत्वेऽप्यासन्ने पर्युषणापर्वणि 'अष्टमं तपः करिष्यामः' इति कुटुम्बजल्पितं श्रुत्वा सञ्जातजातिस्मृतिरष्टमं तपः कृतवान्, ततः स्तन्यपानादिकमकुर्वन्तं तं पर्युषितमालतीपुष्पमिव म्लानं दृष्ट्वा मातापितृभ्यामनेकधोपचरितोऽपि तथैव स्तन्यमगृह्णन्नतुच्छां मूर्च्छां प्राप्तः, ततोऽमृतोऽपि मृत इत्यवधार्य भूमौ निक्षिप्तः स्वजनैः, तद्दुःखेन सत्यमेव मृतः श्रीकान्तः। ततो नृपेण प्रेषिताः स्वभटाः अपुत्रधनग्रहणाय तद्गृहे। इतश्चाष्टमतपःप्रभावात्प्रकम्पितासनो धरणेन्द्रोऽवधिनाऽखिलं तत्स्वरूपं विज्ञाय शीघ्रमागतस्तत्र, भूमिस्थं तं बालकं अमृतच्छट्या आश्वास्य विप्ररूपं कृत्वा धनं गृह्णतो राजभटान्निवारितवान्। तत् श्रुत्वा आगतो नृपः, उवाच च–'भो विप्र! कथं निवारयस्यस्मान् परम्परागतापुत्रधनं गृह्णतः?'। धरणे-

कुव्वंति तत्थ मेरा, नडपेडगसन्निहा जाण ॥ १ ॥" एता सम्बोधप्रकरणस्य गाथा, ते स्वस्य धियो जाड्यमेवाविष्कुर्वन्ति, निर्दिष्टगाथया केवलस्त्रीपुरतः साधूनां साध्वीनां च केवलपुरुषाग्रत एव व्याख्याननिषेधस्य सूचितत्वात्। किञ्च–विचार्यमिदं एतदर्थस्यैव संवादकं स्वगुरोरपि वचः–"साध्वी श्राद्धानामग्रे व्याख्यानं न करोतीत्यक्षराणि कुत्र सन्तीति। उत्तरं अत्र–दशवैकालिकवृत्तिप्रमुखग्रंथमध्ये 'यतिः केवलश्राद्धीसभाग्रे व्याख्यानं न करोति, रागहेतुत्वा'दित्युक्तमस्ति, एतदनुसारेण साध्व्यपि केवलश्राद्धसभाग्रे व्याख्यानं न करोति, रागहेतुत्वादिति ज्ञायते" इति हीरप्रश्ने तृतीयप्रकाशे, वेलर्षिकृतप्रश्नसमूहे। न त्वत्र सर्वथा व्याख्याननिषेधोऽनुज्ञातस्तासामिति।

न्द्रोऽवोचत्–'राजन्! जीवत्यस्य पुत्रः'। 'कथं ? कुत्रास्ती'ति राजादिभिः पृष्टे भूमेस्तं बालं जीवन्तं निष्कास्य निधानमिवादर्शयत्। ततो विस्मितैः सर्वैरपि 'स्वामिन्! कस्त्वं? कश्चायं?' इति पृष्टे सोऽवदत्–'राजन्! धरणेन्द्रोऽहं नागराजः, कृताष्टमतपसोऽस्य महात्मनः साहाय्यार्थमागतोऽस्मि'। 'कथं जातमात्रेणानेनाष्टमं कृतमि'ति पृष्टे सोऽवदत्–'राजन्? अयं हि प्राग्भवे कश्चिद्वणिक्पुत्रो बाल्यादेव मृतमातृक आसीत्, स च विमात्राऽत्यन्तं पीड्यमानो मित्रायाकथयत्स्वदुःखं। तेनापि 'त्वया प्राग्जन्मनि किञ्चित्तपो न कृतं, तेनैवं पराभवं लभसे' इत्युक्तं। ततोऽसौ यथाशक्तिस्तपस्युद्यत 'आगामिपर्युषणायामष्टमं करिष्यामी'ति कृतनिश्चयस्तृणकुटीरे सुष्वाप। तदा लब्धावसरया विमात्रा पार्श्वस्थप्रदीपनकादग्निकणस्तत्र निक्षिप्तः, तेन ज्वलिते कुटीरके स मृतोऽष्टमध्यानादयं श्रीकान्तश्रेष्ठिसुतो जातः। ततोऽनेन प्राग्भवचिन्तितमष्टमं तपः साम्प्रतं कृतं, तदसौ महापुरुषो लघुकर्माऽस्मिन्नेव भवे शिवङ्गमी, अतो यत्नेन पालनीयः, भवतामपि महते उपकाराय भविष्यति' इत्युक्त्वा स्वहारं तत्कण्ठे निक्षिप्य स्वस्थानं गतो नागराजः। ततः स्वजनैः श्रीकान्तस्य मृतकार्ये कृते तस्य नागकेतुरिति नाम दत्तं। स च बाल्यादपि जितेन्द्रियः शुद्धश्रावकोऽभूत्। अन्यदा कश्चिदचौरोऽपि चौरकलङ्केन हतो राज्ञा, स चार्त्तध्यानेन मृत्वा व्यन्तरो जातः, ततोऽवधिना ज्ञातवृत्तान्तः सः समग्रनगरविघातायैकां महतीं शिलां विकुर्व्य नृपं च पादप्रहारेण भुवि निपात्य नभस्थो दुर्वचसा जनं भापयामास। तदा स नागकेतुः 'कथं जीवन्निमं चतुर्विधसङ्घजिनचैत्यादिविध्वंसं पश्यामी'ति चिन्तयन् प्रासादशिखरमारुह्य पतन्तीं

तां शिलां पाणिना धृतवान्। तत्तपःशक्त्या हतप्रतापो व्यन्तरः शिलां संहृत्य नागकेतुं नतवान् नृपं च तद्वचसा स्वस्थमकरोत्। ततः प्रभृति राजमान्यः सन्नेकदा जिनेन्द्रपूजां कुर्वन् पुष्पमध्यस्थेनाहिना दष्टोऽप्य-व्यग्रचित्तः शुभभावनारूढः केवलमवाप्तः। ततः शासनदेवताऽर्पितमुनिवेषश्चिरं विहृत्यानेकान् भव्यान् प्रतिबोध्य शिवं प्राप्तः। एवमन्यैरपि सत्यां शक्ताववश्यं अष्टमतपसि यतनीयं, यतो रत्नत्रयवदन्यं शल्य-त्रयोन्मूलनं जन्मत्रयपावनं लोकत्रयाग्र्यपदप्रापकमिदमष्टमं तप इति नागकेतुकथा।

अथास्मिन्कल्पसूत्रे त्रीण्यधिकाराणि वाच्यानि, यथा—

"पुरिमचरिमाण कप्पो, मंगलं वद्धमाणतित्थम्मि। इह परिकहिया जिणगण—हराइथेरावलिचरित्तं ॥१॥"

व्याख्या–प्रथमचरमयोः–ऋषभवीरजिनयोस्तीर्थे मुनीनामयं 'कल्पः' आचारो, यद्वृष्टिर्भवतु मा वा परमवश्यं पर्युषणा कार्या, उपलक्षणात्कल्पसूत्रं वाचनीयं। 'मङ्गल'मिति एकोऽयमाचारोऽपरश्च मङ्गलं वर्द्धमानतीर्थे, कस्मादेवं? इत्याह–यस्मादिह परिकथितानि "जिण"त्ति जिनानां चरितानि १, "गणहराइथेरावलि"त्ति गणधरादि-स्थविरावली २, "चरित्तं"ति सामाचारी ३ इत्येवंरूपाणि त्रीण्यधिकाराणि। तत्राद्येऽधिकारे जिनचरितात्मके वर्त्त-मानतीर्थाधिपतित्वेनासन्नोपकारित्वेन चादौ श्रीभद्रबाहुस्वामिपूज्यास्तीर्थंकरभवव्यतिकरावासषण्महाकल्याण-कनिबन्धबन्धुरं श्रीवीरचरित्रं सूत्रयन्तादिमङ्गलार्थं परमेष्ठिनमस्कारात्मकं पञ्चमङ्गलमहाश्रुतस्कन्धमादिशन्ति—

णमो अरिहंताणं, णमो सिद्धाणं, णमो आयरियाणं, णमो उवज्झायाणं, णमो लोए सव्वसाहूणं, एसो पंचणमोक्कारो, सव्वपावप्पणासणो, मंगलाणं च सव्वेसिं, पढमं हवइ मंगलं ॥ १ ॥

---

१—चतुःषष्टीन्द्रकृतामशोकाद्यष्टमहाप्रातिहार्यरूपां पूजामर्हन्तीत्यर्हन्तस्तेभ्यो नमः। सितं—बद्धं यदष्टविधं कर्म, तद् ध्मातं—दग्धं यैस्ते सिद्धास्तेभ्यो नमः। आचरन्ति ज्ञानादिपञ्चविधमाचारं ये ते आचार्याः—सङ्घनायकास्तेभ्यो नमः। उप—समीपमागतान् शिष्यादिकान् अध्यापयन्ति द्वादशाङ्गानि सूत्रतो ये ते उपाध्यायास्तेभ्यो नमः। साधयन्ति ज्ञानाद्यैर्मोक्षमार्गं ये ते साधवः, सर्वे—अर्धतृतीयद्वीपसमुद्रान्तर्वर्त्तिनो जिनकल्पिक—लान्तकल्पिक—स्थविरकल्पिकादयो ये साधवस्तेभ्यो नमः। एष—अर्हदादीनां पञ्चानां कृतो नमस्कारस्सर्वपापप्रणाशनः, च—पुनस्सर्वेषां मङ्गलानां मध्ये प्रथमं—प्रधानं मङ्गलं भवति। यतोऽस्य प्रभावेणानेकैरैहिकं पारत्रिकं च फलं प्राप्तं, यथा—

"इहलोअम्मि तिदंडी, सादिव्वं माउलिंगवणमेव। परलोए चंडपिंगल—हुंडियजक्खो य दिट्ठंता ॥ १ ॥"

इहलोकफले त्रिदण्डिपाशपतितस्य श्राद्धपुत्रस्य[1], सादिव्यं—कृतदेवसान्निध्यायाः श्राविकायाश्च[2], यद्वा देवाधि-

---

१—एकः कश्चिच्छ्राद्धपुत्रो धनाशया त्रिदण्डिपाशे पतितः, श्मशाने करधृतखड्गो मृतकाग्रे स्थितः, योगिकृतमन्त्रजापाद्यन्तराधिष्ठितं मृतकमुत्तिष्ठन्तं दृष्ट्वा भीतस्सन् पित्रा शिक्षितं पञ्चनमस्कारं परावर्त्तयति, तत्प्रभावात्स्वात्मा रक्षितः सुवर्णपुरुषश्च साधितस्तेन।

२—एका श्राद्धसुता छलेन विधर्मिणा परिणीता, धर्मवैमनस्यतो सञ्जातकोपेन पत्या भुजङ्गनिक्षिप्तं घटमन्धकारे संस्थाप्य निशायां तन्मध्यात्कुसुममालाऽऽनयनायादिष्टा सा नमस्कारं स्मरन्ती हस्तमक्षिपद्घटे, देवसान्निध्यादागता कुसुममालेव तद्धस्ते, दत्ता च पत्ये, विस्मितस्स स्वापराधं क्षमयति।

ष्ठितं यन्मातुलिङ्ग–बीजपूरफलं, तस्य वनमिति दृष्टान्ताः । परलोके चण्डपिङ्गलश्चौरो हुण्डिकयक्षश्च दृष्टान्तौ ।

अथ जघन्यमध्यमवाचनात्मकं पट्कल्याणकवन्धवन्धुरं श्रीवीरचरित्रं वर्णयन्ति श्रीभद्रबाहुस्वामिपादाः–

१–एकस्मिन्नगरे नदीतीरे देहचिन्ताऽर्थमागतेन केनचिदद्भुतं वीजपूरमुपलभ्य राज्ञे उपायनीकृतं, राज्ञा च तद् व्यतिकरं ज्ञात्वा तत्तुल्यानामन्यफलानां प्राप्तये प्रेपिताः सपाथेयाः पुरुपाः, दृष्टं तद्वनं तैः, ज्ञातं च–फलानि यो गृह्णाति स म्रियते इति, राज्ञे कथितं, तेनाप्यवश्यमानेतव्यानीति परिपाटितस्तदानयनायादिष्टाः सर्वे नगरजनाः, तत एको वनं प्रविश्य फलं वहिः प्रक्षिपति, म्रियते तत्रैव सः, अन्ये बहिःस्था आनयन्ति। अन्यदैकस्य श्राद्धस्य परिपाटी समागता, स च वनं प्रविशन्नेव नैषेधिकीपूर्वमुच्चैर्नमस्कारमुच्चचार, तं श्रुत्वा प्रतिबुद्धस्तदधिष्ठाता व्यन्तरः । प्रतिप्रातस्तदुच्छीर्षके फलप्रापणवरं दत्वा तं विससर्ज, ततो राजमान्यो जातः सः ।

२–वसन्तपुरे चण्डपिङ्गलश्चौरः गणिकाश्राद्धीगृहे निवसति, कदाचिन्नृपस्य हारमपहृत्य गणिकागृहे गोपितवान् । अन्यदोद्यानिकायां व्रजन्त्यो विभूषितास्सर्वा गणिकाः, ततोऽहमेव सर्वास्वतिशायिनी स्यामिति विचिन्त्य सा तमेव हारं परिदधे । दासीदेव्यादिपरम्परया ज्ञाते राज्ञा चण्डपिङ्गलो गृहीतः शूलायां चारोपितः । मम दोषेण मारितोऽयमिति चिन्तयन्ती सा गणिका तस्मै नमस्कारं श्रावयति भणति च–'अनन्तरे भवेऽहमस्य राज्ञः पुत्रो भवेय'मिति निदानं कुरु, तथा कृत्वा मृतः सोऽग्रमहिष्युदरे पुत्रत्वेनोत्पन्नः । जाते च सुते सा गणिका क्रीडाधात्रीत्वे नियुक्ता, चण्डपिङ्गलमरणस्य गर्भाधानस्य च कालसमत्वं विभाव्य वालं रमयन्ती भणति 'मा रोदीश्चण्डपिङ्गल!' इति, ततो जातजातिस्मृतिः स प्रतिबुद्धः क्रमेण राज्यसुखमनुभूयान्ते द्वावपि प्रव्रजितौ, एवं सुकुलप्रत्यागमनं तन्मूलं च सिद्धिगमनं ।

३–मथुरायां हुण्डिकश्चौरो नगरं मुष्णाति । कदाचिद्गृहीतः शूलायां चारोपितः । तृषितस्सन् नातिदूरेण व्रजन्तं जिनदत्तश्राद्धं भणति–'भोः श्राद्धवर! तृषितोऽहं, पानीयं देहि' । तेनोक्तं–'इमं नमस्कारं पठ यावत्तवार्थं पानीयमानयामि, यदि विस्मरिष्यसि तदाऽऽनीतमपि न दास्यामि' । प्रतिपन्नं तेन, गतः श्राद्धः, पानीयं गृहीत्वा यावदागच्छति तावन्नमस्कारं घोषयन्नेव मृतो यक्षत्वेनोत्पन्नः । इतो राजपुरुषैश्चौरभक्तदायकत्वाद्गृहीतः श्राद्धो नृपादेशेन यावत् शूलास्थानं नीयते तावदवधिना ज्ञातव्यतिकरो यक्षः पर्वतमुत्पाट्य नगरोपरि स्थित्वा भणति–रे ! न जानीथ श्राद्धं भट्टारकं ?, क्षामयत, अन्यथा चूरयिष्यामि । भीतैस्सर्वैः क्षमितः श्राद्धः यक्षायतनं च कारितं पूर्वस्यां दिशि । एवं फलमाप्यते नमस्कारेणेति ।

ते णं काले णं ते णं समए णं समणे भगवं महावीरे पंचहत्थुत्तरे होत्था ।

२–यत्तदोर्नित्याभिसम्बन्धात् यदाऽसौ भगवान् देवलोकाच्च्युत्वा देवानन्दोदरेऽवतीर्णः, "ते" इति प्राकृतत्वात् तस्मिन्, "णं"कारः सर्वत्र वाक्यालङ्कारे, काले–चतुर्थारकान्ते, तस्मिन्समये–निर्विभाज्यकालविशेषे, यद्वा हेतौ तृतीया, ततो यौ कालसमयौ श्रीऋषभादिजिनैर्वीरस्य च्यवनादीनां षण्णां कल्याणकानां × हेतुत्वेनोक्तौ, तेन हेतुभूतेन कालेन समयेन च 'श्रमणः' तपस्वी 'भगवान्' समग्रैश्वर्यादियुक्तो 'महावीरः' कर्मशत्रुञ्जया-दन्वर्थाभिधोऽन्त्यो जिनः "पंचहत्थुत्तरे"त्ति हस्तादुत्तरदिशि वर्त्तमानत्वात्, हस्त उत्तरो–अग्रवर्त्ती यासां वा ता हस्तोत्तरा–उत्तराफाल्गुन्यः, पञ्चसु च्यवनादि(गर्भाधानादि)ज्ञानावाप्तिपर्यवसानेषु कल्याणक(वस्तुषु)स्थानेषु यस्य स पञ्चहस्तोत्तर इति भगवद्विशेषणं, निर्वाणस्य स्वातौ जातत्वात्, "होत्थ"त्ति अभवत् ।

अथाकल्याणकवादी आह–"करोपि श्रीमहावीरे, कथं कल्याणकानि षट् ? । यत्तेष्वेकमकल्याणं, विप्रनीचकुलत्वतः ॥१॥" इति गुरुतत्त्वप्रदीपे। "अकल्याणकभूतस्य गर्भापहारस्य" इति कल्पकिरणावल्यां। "नीचैर्गोत्रविपाकरूपस्य अतिनिन्द्यस्य आश्चर्यरूपस्य गर्भापहारस्यापि कल्याणकत्वकथनमनुचितं" इति कल्पसुबोधिकायां । "गर्भापहारोऽशुभः" इति च क० सु० टिप्पण्यां ।

---

× न च वाच्यं–च्यवनादीनां षण्णां कल्याणकत्वेन व्याख्यानमनागमिकं, "जो भगवता उसभसामिणा सेसतित्थगरेहि अ वद्धमाणसामिणो चवणाईणं छण्हं वत्थूणं कालो दिट्ठो णातो वागरिओ अ" इति पर्युषणाकल्प–दशाश्रुतस्कन्धचूर्ण्योर्वाक्यस्य तथा "हस्त उत्तरो यासां उत्तरफाल्गुनीनां ता हस्तोत्तरास्ताश्च पञ्चसु स्थानेषु–गर्भाधान-संहरण-जन्म-दीक्षा-ज्ञानोत्पत्तिलक्षणेषु संवृत्ताः, अतः पञ्चहस्तोत्तरो भगवानभू" दित्याचाराङ्गवृत्तिवाक्यस्य च बाधकत्वादिति, यतो न व्यभिचरति कल्याणकत्वं वस्तुस्थाने, यथा शिंशपात्वं वनस्पतिवृक्षौ, कल्याणकाकल्याणकयोरुभयत्रापि वस्तुस्थानयोर्घटमानत्वात् ।

उत्तरमत्र-विप्रनीचकुलाश्चर्य-गर्भापहारकारणैः। गर्भाधानमकल्याणं, गर्भकल्याणकं कथम् ? ॥ १ ॥ आश्चर्यमपि कल्याणं, श्रीमल्लिवीरयोर्मतम्। नीचनिन्द्याशुभैर्वाक्यै-रकल्याणं कथं भवेत् ? ॥२॥ कल्याणं च्यवनं प्रोक्तं, गर्भकल्याणकं तथा। अवतरणकल्याण-मकल्याणं कथं भवेत् ? ॥ ३ ॥ यत उक्तं-"गब्भे जम्मे य तहा, णिक्खमणे चेव णाणणिव्वाणे। भुवणगुरूण जिणाणं, कल्लाणा होंति णायव्वा ॥ ३१ ॥" इति पञ्चाशके। तथा "अवयरणजम्मणिक्खमण-णाणणिव्वाणपंचकल्लाणे। तित्थयराणं नियमा, करंति सेसेसु खित्तेसु ॥ १ ॥" इति जिनभद्रीयबृहत्सङ्ग्रहण्यां। नीचकुलेऽवतीर्णश्चे-द्वीरः कल्याणको मतः। उच्चकुलागतो वीरः, किमकल्याणको मतः ? ॥ ४ ॥ चेत्क्षत्रियकुलायातो, गर्भः कल्याणको मतः। विप्रकुलेऽवतीर्णो हि, किमकल्याणको मतः ? ॥ ५ ॥ देवानन्दोदरे गर्भो, यथा कल्याणरूपकः। तथैव त्रिशलाकुक्षौ, गर्भः कल्याणको मतः ॥ ६ ॥ यावद्गर्भतयोत्पत्तिं, च्युत्वा गत्यन्तराद्यथा। बुधैश्च्यवनकल्याणं, मतं गणधरादिभिः ॥ ७ ॥ तथैव-हरणं वाऽपहारस्तत्-त्रिशलोदरधारणम्। गर्भधारणकल्याणं, तत्त्वकल्याणकं कथम् ? ॥ ८ ॥ तावदपहृतो गर्भ-स्त्रिशलाकुक्षिसंहृतः। अतो गर्भापहारो हि, श्रेयःकल्याणसूचकः ॥ ९ ॥ "गर्भस्योदरसत्त्वस्य", इति स्थानाङ्गवृत्तितः। हरणमुदरान्तर-सङ्क्रामणं× तु श्रेयसे ॥ १० ॥ वक्ष्यति चात्रैवाग्रे शक्रविचारणायां-"तं सेयं खलु मम वि समणं भगवं महावीरं" इत्यादि यावत् "तिसलाए खत्तियाणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहरावित्तए" इति। त्रिशलोदरगो गर्भः, पञ्चकल्याणमध्यगः। प्रोक्तः

× "गर्भस्य-( स्त्रीकुक्षिसमुद्भूतसत्त्वस्य ) श्रीवर्द्धमानरूपस्य हरणं-त्रिशला ( अन्यस्त्री ) कुक्षौ सङ्क्रामणं गर्भहरणं" इति (प्रव० सारो० वृ० ) कल्पदीपिकाया च।

श्रीभद्रबाहुभिः, स्वप्नैः कल्याणको हि सः ॥ ११ ॥ प्रोक्तः पञ्चाशके गर्भो, यथा कल्याणरूपकः। पुनरत्र तथा प्रोक्तः, त्रिशलोदरगो हि सः ॥ १२ ॥ सुष्ठु प्रोक्तं हि कल्याणं, जिनवल्लभसूरिभिः × । दुष्टमुक्तमकल्याणं, त्वत्पूज्यद्वेष्यता हि सा ॥ १३ ॥ प्रोक्तः पञ्चाशके गर्भः, कल्याणफलसूचकः। कल्पसूत्रेऽपि सः स्वप्नैः, कल्याणफलसूचकः ॥ १४ ॥ सूत्रार्थमपरं नास्ति, येनाकल्याणकं भवेत् । धृष्टा ब्रुवन्ति मूढाश्च, कर्मबन्धनहेतवे ॥ १५ ॥ देवानन्दोदराद्गर्भं-त्रिशलाकुक्षि(धारणात्)मोचनात्। ज्ञेयो गर्भो यथा पूर्वं, तथा कल्याणको हि सः ॥ १६ ॥ हरणं त्रिशलाकुक्षौ, विभोर्न मन्यते तदा। कल्याणकानि पञ्च स्या-दन्यथा तु षडेव हि ॥ १७ ॥ हरणं त्रिशलाकुक्षौ, मन्यन्ते श्वेतवाससः । दिगम्बरा न मन्यन्ते, देवानन्दोदराद्विभोः ॥ १८ ॥ मातृकुक्ष्यागतः सार्वः, स्वप्नैः कल्याणसूचकः। त्रिशलाकुक्षिगो गर्भो, नास्त्यकल्याणको हि सः ॥ १९ ॥ "पंच महाकल्लाणा (परमश्रेयांसि), सव्वेसिं जिणाण हवंति णियमेण। भुवणऽच्छेरयभूया, कल्लाणफला य जीवाणं ॥ ३० ॥ गब्भे (गर्भाधाने)

---

× यत्तु "जो न सेस सूरीणं, लोयणपहे वि वच्चइ" इत्यनेन गणधरसार्द्धशतकगाथाशकलेन श्रीमद्धरिभद्रसूर्यभयदेवसूर्यादीनां हीलनाकरणरूपासद्दोषोद्भावनं जिनवल्लभसूरेस्तत्तु तदुद्भावयितुरेवानाघ्राततदर्थगन्धत्वाभिव्यञ्जकं, यतः "यो न शेषसूरीणां-अज्ञातसिद्धान्तरहस्यानामित्यर्थः, लोचनपथेऽपि-दृष्टिमार्गेऽपि, आस्तां श्रुतिपथे, व्रजति-याति" इत्यनेन तद्वृत्तिवाक्येन स्पष्टं तत्कालवर्त्तिवैद्यकज्योतिष्कमन्त्राद्यारम्भप्रसक्तचैत्यवासिसूरीणामेव गर्भापहारकल्याणकानभिज्ञत्वं ज्ञाप्यते, न तु हरिभद्रसूर्यादीनां प्रवचनविदां, तेषां तु "उच्यते पुनर्जिनमतज्ञैर्भगवत्प्रवचनवेदिभिः" इत्यनेन गणधरसार्द्धशतकवृत्तिवाक्येनैव स्फुटतर प्रतिपाद्यते तज्ज्ञातृत्वमुपदेष्टृत्वं च, प्रकारान्तरेण गर्भाधानरूपत्वादेव गर्भापहारस्य "गब्भे जम्मे" इत्यादिना गृहीतत्वात् "कल्लाणफला य जीवाणं" इत्येतत्तत्कृतकल्याणकत्वमात्रोपलभ्यमानत्वाच्च, दर्शयन्तु-किमकल्याणफलं सञ्जातं जायते वा गर्भापहारदिनमालम्ब्य तपश्चर्यादिकर्तॄणां जगज्जीवानाम् ।

अकल्याणकवादनिरासे पञ्चाशकोक्तपञ्चशाश्वतकल्याणकपरामर्शः, न हि कल्याणफलत्वं राज्याभिषेके

जम्मे य तहा, णिक्खमणे चेव णाणणिव्वाणे। भुवणगुरूण जिणाणं, कल्लाणा होंति णायव्वा ॥ ३१ ॥" (इदं) वचः पञ्चाशके पञ्च–महाकल्याणदर्शकम्। त्रिशलाकुक्षिगं गर्भं, नाकल्याणप्रलापकम् ॥ २० ॥ उक्तगाथाद्विके गर्भो, महाकल्याणनिश्चितः। कथं भवत्यकल्याण–स्त्रिशलोदरगो हि सः? ॥ २१ ॥ हरणमपहारश्चे–त्त्वयाऽकल्याणको मतः। धारणं मातृकुक्षौ किं, त्वयाऽकल्याणकं मतम्? ॥ २२ ॥ भगवद्वीरगर्भश्चे–त्त्वया कल्याणको मतः। श्रीवीरो गर्भरूपश्च, किमकल्याणको मतः? ॥२३॥ उक्तं दिन * मनुक्तं तत्×, कल्याणकमशाश्वतम्। तेन किं त्रिशलाकुक्षौ, वीरोऽकल्याणको भवेत्? ॥ २४ ॥ पञ्च शाश्वतकल्याणा, एकेनाशाश्वतेन षट्। कल्याणकमशाश्वतं, केनाकल्याणकं भवेत्? ॥ २५ ॥ पञ्चकल्याणतः षष्ठ–मकल्याणं कथं भवेत्?। पञ्चमहाव्रतात्षष्ठ–मव्रतमपि किं भवेत्? ॥ २६ ॥ यथा–पञ्चमहाव्रतात्षष्ठं, रात्रावभोजनं व्रतम्। तथा–पञ्चकल्याणतः षष्ठं, कल्याणं गर्भधारणम् ॥ २७ ॥ +जिनराज्याभिषेकस्तु, नास्ति कल्याणपञ्चके। गर्भधारणकल्याण–मस्ति कल्याणपञ्चके ॥ २८ ॥ सर्वगुणिजिनेन्द्रेऽस्मिन्, यदकल्याणभाषणम्। अकल्याणं तु तत्स्वस्य, प्रभोरवर्णवादतः ॥ २९ ॥ 'कल्याणं' शुभसमृद्धि–विशेषाणां हि कारणात्। नीरोगत्वमणन्तीति, कल्याणं श्रेयसे

* देवानन्दाकुक्षितस्त्रिशलाकुक्षिधारणात्मकस्य गर्भापहारस्य दिनमाश्विनकृष्णत्रयोदशीरूपं कल्पसूत्रादौ। × उक्तलक्षणमेव गर्भापहाराख्यमशाश्वतं कल्याणकं पञ्चाशके।

\+ "उसमे णं अरहा कोसलिए पंचउत्तरासाढे अभीइछट्ठे होत्था, तं जहा–उत्तरासाढाहिं चुए, चइत्ता गब्भं वक्कंते, उत्तरासाढाहिं जाए, उत्तरासाढाहिं रायाभिसेयं पत्तो, उत्तरासाढाहिं मुंडे भवित्ता आगाराओ अणगारियं पव्वइए, उत्तरासाढाहिं अणंते जाव (केवलवरनाणदंसणे) समुप्पण्णे, अभीइणा परिनिव्वुए" इति जम्बूद्वीपप्रज्ञप्तीसूत्रं पुरस्कृत्य ये मताग्रहिणो वीरस्य गर्भापहारद्वारा जातं त्रिशलाकुक्षिगर्भाधानमकल्याणकत्वेन प्रतिपादयन्ति तैर्विचार्यमेतत् पद्यम्।

तं जहा–हत्थुत्तराहिं चुए, चइत्ता गब्भं वक्कंते १, हत्थुत्तराहिं गब्भाओ गब्भं साहरिए २, हत्थुत्तराहिं जाए ३, हत्थुत्तराहिं मुंडे

नामकः। स्त्रीरूपेण समुत्पन्नः, कुम्भराजस्य सद्मनि ॥ ४५ ॥ कार्यं न सुतरां तस्य, ह्यकल्याणत्ववादिभिः। कल्याणकेषु सर्वेषु, कल्याणत्वप्ररूपणम् ॥ ४६ ॥ नाश्चर्यस्थानवस्तुत्वं, कल्याणकत्वबाधकम्। कल्याणं 'जिनचन्द्र'स्य, गर्भाधानद्विके स्थितम् ॥ ४७ ॥ अन्यैरप्युक्तं–"सिद्धार्थराजाङ्गजदेवराज!, कल्याणकैः षड्भिरिति स्तुतस्त्वं। तथा विधेह्यान्तरवैरिषट्कं, यथा जयाम्याशु तव प्रसादात् ॥ १ ॥" इति जयतिलकसूरिकृते सुलसाचरित्रे षष्ठसर्गे, तथा "आषाढे सितषष्ठी १, त्रयोदशी चाश्विने २ सिता चैत्रे ३। मार्गे दशमी ४ सितवै-शाखे सा ५ कार्तिके च कुहूः ६ ॥ १ ॥ वीरस्य षट्कल्याणकदिनानी"ति जयसुन्दरसूरिकृते कल्पान्तर्वाच्ये ×। इत्यलम्प्रसङ्गेन, कल्याणकानि षडेव वीरस्येत्यागमज्ञाः।

अथ यानि षट्कल्याणकानि भवन्ति तानि स्फुटतरं नामग्राहमभिधित्सुराह—

'तद्यथा' पञ्चहस्तोत्तरत्वं प्रभोरेवं वक्ष्यमाणप्रकारेण भवति, "हत्थुत्तराहिं" इत्यत्र सप्तम्यर्थे तृतीया, अतो हस्तोत्तरायां प्राणतनामदशमदेवलोकाच्च्युतः, च्युत्वा गर्भे 'व्युत्क्रान्तः' उत्पन्नः १। हस्तोत्तरायां गर्भाद्गर्भं संहृतः, देवानन्दागर्भात्त्रिशलागर्भे गर्भाधानत्वेन सङ्क्रामित इत्यर्थः २। हस्तोत्तरायां जातः, भगवतो जन्म बभूव ३। हस्तोत्तरायां द्रव्यतः केशलुञ्चनेन भावतः कषायेन्द्रियमनोनिग्रहेण मुण्डो भूत्वा 'आगारात्' गृहात्, निष्क्रम्येति शेषः, 'अनगारितां' साधुतां 'प्रव्रजितः' प्रकर्षेण गतः, प्राप्त इत्यर्थः ४। हस्तोत्तरायां 'अनन्तं' अनन्तार्थ-

× "संवत् १५३८ वर्षे आषाढसुदि १५ सोमे श्रीतपागच्छनायकश्रीपूज्यभ०श्रीविजयरत्नसूरिशिष्येण" इत्युल्लेखान्विताऽस्ति प्रतिः सि० आ० क० सत्के चित्कोषे।

नैतावन्मात्रमेव, किन्तु–जन्मादिषु चतुर्ष्वेव, इन्द्राणां हि प्रजायते । उत्थानासनकम्पादि, स्थानके प्रोक्तमित्यपि* ॥ ३८ ॥ कुत्रापि च्यवने नोक्तः, सुरेशादिसमागमः । ततः कथं प्रकुर्वीरन्, ध्रुवं कल्याणकोत्सवम् ? ॥ ३९ ॥ किञ्च–च्यवनेऽप्यपि देवाना–मागमो यदि निश्चितः । कथं तदैव शक्रेण, वीरो न वन्दितस्तदा ? ॥ ४० ॥ च्यवनानन्तरं चैव, न वन्दित इति स्फुटम् । ज्ञायते कल्पवाक्येन, "केवलकप्प"मादिना † ॥ ४१ ॥ ज्ञानोत्पत्तेरनन्तरं, समवसरणादिकम् । इन्द्राः स्वयं न कुर्वन्ति, तेनाकल्याणकं किमु ? ॥ ४२ ॥ अष्टोत्तरशतेनैव, सिद्धो य ऋषभप्रभुः । तदाश्चर्यमभूदाद्यं, किमकल्याणकं हि तत् ? ॥ ४३ ॥ तथा–सिद्धान्तोऽयं जिनेन्द्राणां, सर्वेषामपि निश्चितम् । तीर्थङ्करा हि सर्वेऽपि, जायन्ते पुरुषोत्तमाः ॥ ४४ ॥ परमेकोनविंशो हि, तीर्थकृन्मल्लि-

* "तिहिं ठाणेहिं देवा अब्भुट्ठिज्जा, ( सिंहासनादभ्युत्तिष्ठेयुरिति ) तं जहा–अरहंतेहिं जायमाणेहिं, जाव तं चेव, एवमासणाइं चलेज्जा सीहणातं करेज्जा चेलुक्खेवं करेज्जा । तिहिं ठाणेहिं देवाणं चेइयरुक्खा चलेज्जा, तं जहा–अरहंतेहिं० तं चेव" इति स्थान ३ उ० १ । "जाव लोगंतिता देवा माणुस्सं लोगं हव्वमागच्छेज्जा, तं जहा–अरहंतेहिं जायमाणेहिं जाव अरिहंताण परिनिव्वाणमहिमासु" वृत्तिः–"यथा त्रिस्थानके प्रथमोद्देशके तथा देवेन्द्रागमादीनि लोकान्तिकसूत्रावसानानि वाच्यानि, केवलमिह परिनिर्वाणमहिमास्विति चतुर्थमिति" स्थान ४ उ० ३ ।

† "केवलकप्पं जंबुद्दीवं दीवं विउलेणं ओहिणा आभोएमाणे २ विहरइ, तत्थ णं समणं भगवं महावीरं जंबुद्दीवे दीवे दाहिणड्ढभरहे माहणकुंडग्गामे नयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंतं पासइ, पासित्ता हट्ठतुट्ठचित्तमाणंदिए णंदिए परमानंदिए पीइमणे परमसोमणस्सिए हरिसवसविसप्पमाणहियए धाराहयनीवसुरभिकुसुमचंचुमालइयऊससियरोमकूवे विकसियवरकमलनयणवयणे पयलियवरकडगतुडियकेऊरमउडकुंडलहारविरायंतवच्छे, पालंबपलंबमाणघोलंतभूसणधरे ससंभमं तुरिअं चवलं सुरिंदे सीहासणाओ अब्भुट्ठेइ, अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ, पच्चोरुहित्ता"×××यावत् "मत्थए अंजलिं कट्टु एवं वयासी–नमुत्थु णं०" इत्यादि कल्पसूत्रे ५ पत्रे ।



अकल्या० जन्मादिचतुष्क एव सुरेशागमादिनिश्चयः त्र्यशीतितमे एवाह्नि शक्रेण वन्दितो वीरः

आओ आउक्खएणं भवक्खएणं ठिइक्खएणं अणंतरं चयं चइत्ता, इहेव जंबुद्दीवे दीवे भारहे वासे दाहिणड्ढभरहे इमीसे ओसप्पिणीए सुसमसुसमाए समाए विइक्कंताए १ सुसमाए समाए विइक्कंताए २ सुसमदुसमाए समाए विइक्कंताए ३ दुसमसुसमाए समाए बहुविइ-

सागरोपमस्थितिकात्, तत्र हि देवानां विंशतिसागराण्युत्कृष्टा स्थितिर्भवति, भगवतोऽप्येतावत्येव स्थितिरासीत्, तस्माद्विमानात् आयुर्देवसत्कं, तस्य क्षयेण, भवो–देवगतिसत्कस्तस्य क्षयेण, स्थितिर्वैक्रियशरीरावस्थानं, तस्याः क्षयेण, अनन्तरं–अव्यवहितं "चयं" च्यवं–च्यवनं "चइत्ता" चित्वा–कृत्वा, अथवा "चयं" देहं देवसम्बन्धिनं "चइत्ता" त्यक्त्वा 'इहैव' अस्मिन्नेव, न पुनरन्यस्मिन्, जम्बूद्वीपाख्ये द्वीपे भारते 'वर्षे' क्षेत्रे दक्षिणार्धभरते, अस्यामवसर्पिण्यां सुषमसुषमाख्ये प्रथमारके * चतुःकोटाकोटीसागरप्रमाणे व्यतिक्रान्ते, सुषमानाम्नि द्वितीयारके † त्रिकोटाकोटीसागरप्रमाणे व्यतिक्रान्ते, सुषमदुःषमाभिधे तृतीयारके × द्विकोटाकोटीसागरप्रमाणे व्यतिक्रान्ते, दुःषमसुषमाख्ये चतुर्थारके + द्विचत्वारिंशद्वर्षसहस्रोनैककोटाकोटीसागरप्रमाणे बहुव्यतिक्रान्ते, किञ्चिदेवावशिष्टे, सार्द्धाष्टमासाधिकेषु पञ्चसप्ततिवर्षेषु शेषेषु सत्सु श्रीवीरोऽवतरितः, द्वासप्ततिवर्षाणि वीरस्यायुः; वीरनिर्वाणाच्च

* यस्मिंस्त्रिपल्यायुष्कास्त्रिक्रोशदेहमानाश्चतुर्थदिने तुअरीकणप्रमिताहाराः षट्पञ्चाशदधिकद्विशतपृष्ठिकरण्डका एकोनपञ्चाशद्दिनापत्यपालका युगलिका भवन्ति ।

† द्विपल्योपमायुष्का द्विक्रोशदेहास्तृतीयदिने बदरमानाहारा अष्टाविंशत्यधिकशतपृष्ठिकरण्डकवन्तश्चतुःषष्टिदिनापत्यपालका युगलिका भवन्त्यस्मिन् ।

× एकपल्योपमायुष्का एकक्रोशदेहा एकान्तरे आमलकप्रमाणाहाराश्चतुःषष्टिपृष्ठिकरण्डकवन्त एकोनाशीतिदिनापत्यपालका युगलिका भवन्त्यस्मिन् ।

\+ पूर्वकोटीवर्षायुष्काः पञ्चधनुःशतदेहमाना नित्यभोजिनो मनुजा भवन्त्यस्मिन् । लभ्यते शास्त्रेष्वारकत्रयभावियुगलिकस्वरूपनिरूपणमेवं, यथा—

"इह ति-दुग-इगकोसुच्चा, ति-दुग-इगपलीया अरतिगम्मि । कमा तुअरि-बोरा-मल—माणभोयणा ति-दुग-इगदिणेहिं ॥ १ ॥"

भवित्ता आगाराओ अणगारियं पव्वइए ४, हत्थुत्तराहिं अणंते अणुत्तरे निव्वाघाए निरावरणे कसिणे पडिपुण्णे केवलवरनाणदंसणे समुप्पन्ने ५, साइणा परिनिव्वुए भयवं ६ ॥ २ ॥

ते णं काले णं ते णं समएणं समणे भगवं महावीरे जे से गिम्हाणं चउत्थे मासे अट्ठमे पक्खे आसाढसुद्धे, तस्स णं आसाढसुद्धस्स छट्ठी( पक्खे णं )दिवसे णं, महाविजयपुप्फुत्तरपवरपुंडरीयाओ ( दिसासोवत्थिआओ वद्धमाणाओ ) महाविमाणाओ वीसं सागरोवमट्ठि-

---

विषयं 'अनुत्तरं' सर्वोत्कृष्टं, निरुपमत्वात्, 'निर्व्याघातं' कटकुड्यादिभिरप्रतिहतं 'निरावरणं' समस्तावरण-रहितं, ज्ञानदर्शनावरणीयसमूलक्षयेण क्षायिकत्वात्, 'कृत्स्नं' सकलपर्यायोपेतार्थग्राहकं 'प्रतिपूर्णं' पूर्णिमा-चन्द्रमण्डलवत्सकलस्वांशसमन्वितं 'वरं' प्रधानं केवलज्ञानं विशेषाववोधरूपं, केवलदर्शनं च सामान्याववोध-रूपं समुत्पन्नं ५। स्वातिनक्षत्रे 'परिनिर्वृतः' निर्वाणं प्राप्तो भगवानिति ६।

एवं जघन्यमध्यमवाचनाभ्यां षट्कल्याणकानि भगवतो महावीरस्य प्रदर्श्याधुना तानेव विस्तरवाचनयाऽऽह—

३—तस्मिन् काले तस्मिन्समये श्रमणो भगवान् महावीरो योऽसौ 'ग्रीष्मस्य' ग्रीष्मकालस्य चतुर्थो मासः अष्टमः पक्षः आषाढस्य 'शुद्धः' शुक्लपक्षः, तस्य—आषाढशुद्धस्य षष्ठीदिवसे, दिवसशब्दस्य तिथिवाचकत्वेन षष्ठ्यास्तिथे रात्रौ, महान् विजयो यत्र, तच्च तत्पुष्पोत्तरं च—पुष्पोत्तरनामकं, प्रवरेषु—श्रेष्ठेषु अन्यविमानेषु यत्पुण्डरीकं—श्वेतकमलं, तदिवोत्तमं, तस्मात् पुष्पोत्तरप्रवरपुण्डरीकान्महाविमानात्। "महाविमाणाओ" इत्यतोऽर्वाक् क्वचित् "दिसासोवत्थिआओ वद्धमाणाओ" इति पाठस्तत्र दिक्षु अवस्थितात्—आवलिकागतविमानमध्यस्थात्, सर्वप्रकारेण वर्द्धमानकादित्यर्थः कार्यः। विंशति-

आओ आउक्खएणं भवक्खएणं ठिइक्खएणं अणंतरं चयं चइत्ता, इहेव जंबुद्दीवे दीवे भारहे वासे दाहिणड्ढभरहे इमीसे ओसप्पिणीए सुसमसुसमाए समाए विइक्कंताए १ सुसमाए समाए विइक्कंताए २ सुसमदुसमाए समाए विइक्कंताए ३ दुसमसुसमाए समाए बहुविइ-

सागरोपमस्थितिकात्, तत्र हि देवानां विंशतिसागराण्युत्कृष्टा स्थितिर्भवति, भगवतोऽप्येतावत्येव स्थितिरासीत्, तस्माद्विमानात् आयुर्देवसत्कं, तस्य क्षयेण, भवो-देवगतिसत्कस्तस्य क्षयेण, स्थितिर्वैक्रियशरीरावस्थानं, तस्याः क्षयेण, अनन्तरं-अव्यवहितं "चयं" च्यवं-च्यवनं "चइत्ता" चित्वा-कृत्वा, अथवा "चयं" देहं देवसम्बन्धिनं "चइत्ता" त्यक्त्वा 'इहेव' अस्मिन्नेव, न पुनरन्यस्मिन्, जम्बूद्वीपाख्ये द्वीपे भारते 'वर्षे' क्षेत्रे दक्षिणार्धभरते, अस्यामवसर्पिण्यां सुषमसुषमाख्ये प्रथमारके * चतुःकोटाकोटीसागरप्रमाणे व्यतिक्रान्ते, सुषमानाम्नि द्वितीयारके † त्रिकोटाकोटीसागरप्रमाणे व्यतिक्रान्ते, सुषमदुःषमाभिधे तृतीयारके × द्विकोटाकोटीसागरप्रमाणे व्यतिक्रान्ते, दुःषमसुषमाख्ये चतुर्थारके + द्विचत्वारिंशद्वर्षसहस्रोनैककोटाकोटीसागरप्रमाणे बहुव्यतिक्रान्ते, किञ्चिदेवावशिष्टे, सार्द्धाष्टमासाधिकेषु पञ्चसप्ततिवर्षेषु शेषेषु सत्सु श्रीवीरोऽवतरितः, द्वासप्ततिवर्षाणि वीरस्यायुः; वीरनिर्वाणाच्च

* यस्मिंस्त्रिपल्यायुष्कास्त्रिक्रोशदेहमानाश्चतुर्थदिने तुअरीकणप्रमिताहाराः षट्पञ्चाशदधिकद्विशतपृष्ठिकरण्डका एकोनपञ्चाशद्दिनापत्यपालका युगलिका भवन्ति ।

† द्विपल्योपमायुष्का द्विक्रोशदेहास्तृतीयदिने बदरमानाहारा अष्टाविंशत्यधिकशतपृष्ठिकरण्डकवन्तश्चतुःषष्टिदिनापत्यपालका युगलिका भवन्त्यस्मिन् ।

× एकपल्योपमायुष्का एकक्रोशदेहा एकान्तरे आमलकप्रमाणाहाराश्चतुःषष्टिपृष्ठिकरण्डकवन्त एकोनाशीतिदिनापत्यपालका युगलिका भवन्त्यस्मिन् ।

+ पूर्वकोटीवर्षायुष्काः पञ्चधनुःशतदेहमाना नित्यभोजिनो मनुजा भवन्त्यस्मिन् । लभ्यते शास्त्रेष्वारकत्रयभावियुगलिकस्वरूपनिरूपणमेवं, यथा—

"इह ति-दुग-इगकोसुच्चा, ति-दुग-इगपलीया अरतिगम्मि । कमा तुअरि-बोरा-मल—माणभोयणा ति-दुग-इगदिणेहिं ॥ १ ॥"

कंताए सागरोवमकोडाकोडीए बायालीसाए वाससहस्सेहिं ऊणिआए पंचहत्तरिवासेहिं अद्धनवमेहि य मासेहिं सेसेहिं, इक्कवीसाए तित्थयरेहिं इक्खागकुलसमुप्पन्नेहिं कासवगुत्तेहिं, दोहि य हरिवंसकुलसमुप्पन्नेहिं गोअमसगुत्तेहिं, तेवीसाए तित्थयरेहिं विइक्कंतेहिं, समणे भगव महावीरे चरमतित्थयरे पुव्वतित्थयरनिद्दिट्ठे, माहणकुंडग्गामे नयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए पुव्वरत्तावरत्तकालसमयंसि हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं आहारवक्कंतीए भववक्कंतीए सरीरवक्कंतीए, कुच्छिंसि गब्भत्ताए वक्कंते ॥ ३ ॥

---

सार्द्धाष्टमासाधिकैस्त्रिभिर्वर्षैश्चतुर्थारकसमाप्तिः। या च पूर्वोक्ता कोटाकोटीसागरेषूना द्विचत्वारिंशद्वर्षसहस्त्री, सा एकविंशत्येकविंशतिवर्षसहस्रमानयोः पञ्चमषष्ठारकयोः सम्बन्धिनी ज्ञेया। पुनरेकविंशतिषु तीर्थङ्करेषु इक्ष्वाकुकुलसमुत्पन्नेषु काश्यपगोत्रेषु, द्वयोश्च मुनिसुव्रतनेम्योर्हरिवंशकुलसमुत्पन्नयोर्गौतमगोत्रयोः, एवं त्रयोविंशतिषु तीर्थङ्करेषु व्यतिक्रान्तेषु सत्सु श्रमणो भगवान् महावीरश्चरमतीर्थंकरः पूर्वतीर्थङ्करेण श्रीऋषभदेवस्वामिना भरताग्रे निर्दिष्टः—अयं मरीचिस्तवपुत्रश्चतुर्विंशतितमस्तीर्थङ्करो भावीति कथितः। ब्राह्मणकुण्डग्रामनाम्नि नगरे ऋषभदत्तस्य ब्राह्मणस्य "कोडालस" गोत्रस्य भार्याया देवानन्दाया ब्राह्मण्या "जालन्धरस" गोत्रायाः कुक्षौ गर्भतया 'व्युत्क्रान्तः' उत्पन्नः, कस्मिन् समये?—पूर्वरात्रापररात्रकालसमये, मध्यरात्रावित्यर्थः, हस्तोत्तरानक्षत्रेण चन्द्रस्य योगमुपागते सति 'आहारापक्रान्त्या' दिव्याहारत्यागेन 'भवापक्रान्त्या' देवभवत्यागेन 'शरीरापक्रान्त्या' वैक्रियशरीरत्यागेन, अथवा 'आहारव्युत्क्रान्त्या' अपूर्वाहारोत्पादेन—मनुष्योचिताहारग्रहणेनेत्यर्थः, कुक्षौ गर्भतयोत्पन्नः ॥

समणे भगवं महावीरे तिन्नाणोवगए आवि होत्था, 'चइस्सामि'त्ति जाणइ, चयमाणे न जाणइ, 'चुएमि'त्ति जाणइ। जं रयणिं च णं समणे भगवं महावीरे देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंते, तं रयणिं च णं सा देवणंदा माहणी सयणिज्जंसि सुत्तजागरा ओहीरमाणी २ इमे एयारूवे ओराले कल्लाणे सिवे धन्ने मंगल्ले सस्सिरीए चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा ॥ ४ ॥

---

अथ यद्यप्यन्यदेवानां षण्मासावशिष्टे आयुषि—"माल्यम्लानिः कल्पवृक्षप्रकम्पः, श्रीह्रीनाशो वाससां चोपरागः। दैन्यं तन्द्रा कामरागाङ्गभङ्गौ, दृष्टेर्भ्रान्तिर्वेपथुश्चारतिश्च ॥ १ ॥"

इत्याद्याश्चित्तोद्वेजका भावा जायन्ते, परं तीर्थकृत्सुराणां ते न जायन्ते, यतस्ते पूर्वपुण्योत्कर्षाद्विशिष्टज्ञान-कान्त्यादिगुणयुक्ता एव च्यवन्ति, अत आह—

४–श्रमणो भगवान् महावीरो यदा गर्भत्वेनोत्पन्नस्तदा 'त्रिज्ञानोपगतः' मत्यादिज्ञानत्रयोपेतोऽभवत्, तेन 'च्यविष्येऽहमित' इति च्यवनभविष्यत्कालं जानाति, च्यवमानस्तु न जानाति, च्यवनकालस्यैकसामयिकत्वेन सूक्ष्मत्वात्, छाद्मस्थिकज्ञानोपयोगस्य जघन्यतोऽपि चान्तर्मुहूर्त्तिकत्वात्, च्युतोऽस्मीति जानाति, पूर्वभवायातज्ञानत्रयसद्भावात्। यस्यां रजन्यां श्रमणो भगवान् महावीरो देवानन्दाया ब्राह्मण्या "जालन्धरस"गोत्रायाः कुक्षौ गर्भतया व्युत्क्रान्तस्तस्यां रजन्यां सा देवानन्दाब्राह्मणी शयनीये 'सुप्तजागरा' नातिसुप्ता नातिजाग्रती "ओहीरमाणी २"त्ति वारंवारं ईषन्निद्रां कुर्वती 'इमान्' वक्ष्यमाणान् एतद्रूपान्—एतदेव–व्यावर्णितमेव रूपं–स्वरूपं, न न्यूनमधिकं वा कविकृतं, येषां ते एतद्रूपाः, तान्, 'उदारान्' प्रशस्तान्, कल्याणान्, कल्याणानां–शुभसमृद्धिविशेषाणां, न त्वशुभासमृद्धिविशेषाणां, हेतुत्वादथवा कल्यं–नीरोगत्वं, न हि सरोगत्वं, अणन्ति–गमयन्ति ये ते

तं जहा—गय-वसह-सीह-अभिसेय-दाम-ससि-दिणयरं झयं कुंभं । पउमसर-सागर-विमाण-भवण-रयणुच्चय-सिहिं च ॥ १ ॥ ५ ॥

तए णं सा देवाणंदामाहणी इमे एयारूवे ओराले कल्लाणे सिवे धन्ने मंगल्ले सस्सिरीए चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा-समाणी हट्ठतुट्ठचित्तमाणंदिआ, पीइमणा, परमसोमणस्सिआ, हरिसवसविसप्पमाणहियया, धाराहयकयंबपुप्फगं पिव समुस्ससिअरोम-

कल्याणास्तान्, 'शिवान्' उपद्रवशमकान् 'धन्यान्' धर्मधनप्रापकान् 'माङ्गल्यान्' मङ्गलकारकान् 'सश्रीकान्' सशोभांश्चतुर्दशमहास्वप्नान् "पासित्ता णं"ति दृष्ट्वा 'प्रतिबुद्धा' जागरिता ।

५—तद्यथा—गजवृषभसिंहाः प्रसिद्धाः, अभिषेकः श्रीदेव्याः, "दाम"त्ति पुष्पमाला 'शशी' चन्द्रः 'दिनकरः' सूर्यः, ध्वजः प्रतीतः 'कुम्भः' जलपूर्णकलशः, पद्मोपशोभितं सरः 'सागरः' क्षीरसमुद्रः, विमानं देवसम्बन्धि, 'भवनं' गृहं देवानामेव, तत्र यः स्वर्गादवतरति तन्माता विमानं पश्यति, यस्तु श्रेणिकादिवन्नरकादायाति तन्माता भवनपतिदेवप्रासादं पश्यति, 'रत्नोच्चयो' रत्नराशिः 'शिखी' निर्धूमोऽग्निः ।

६—ततोऽनन्तरं सा देवानन्दाब्राह्मणी इमान् एतद्रूपान् उदारान् कल्याणान् शिवान् धन्यान् माङ्गल्यान् सश्रीकांश्चतुर्दशमहास्वप्नान् दृष्ट्वा प्रतिबुद्धा "समाणी"त्ति सती, हृष्टं-विस्मितं तुष्टं-सन्तोषवच्चित्तं यथा भवत्येवमानन्दिता, प्रीतिर्मनसि यस्याः सा तथा, प्रीतियुक्तचित्ता 'परमसौमनस्यिता' परमं सौमनस्यं-प्रसन्नमनस्त्वं प्राप्ता *, हर्षवशेन 'विसर्पत्' विस्तारयायि हृदयं यस्याः सा हर्षवशविसर्पद्हृदया, तथा धारया मेघसम्बन्धिन्या हतं-सिक्तं

* प्रायशः सर्वाण्येतानि एकार्थिकान्यपि प्रमोदप्रकर्षप्रतिपादनार्थत्वात्स्तुतिरूपत्वाच्च न पुनरुक्तदोषदुष्टानि, यत आह—

"वक्ता हर्षभयादिभि-र्व्याक्षिप्तमनास्तथा स्तुवन्निन्दन् । यत्पदमसकृद् ब्रूया-त्तत्पुनरुक्तं न दोषाय ॥ १ ॥"

क्रया सुमिणुग्गहं करेइ। सुमिणुग्गहं करित्ता सयणिज्जाओ अब्भुट्ठेइ, अब्भुट्ठित्ता अतुरियमचवलमसंभंताए अविलंबियाए रायहंससरि-
सीए गईए जेणेव उसभदत्ते माहणे, तेणेव उवागच्छइ। उवागच्छित्ता उसभदत्तं माहणं जएणं विजएणं वद्धावेइ। वद्धावित्ता सुहासणव-
रगया आसत्था वीसत्था करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी ॥ ६ ॥

एवं खलु अहं देवाणुप्पिया! अज्ज सयणिज्जंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एयारूवे ओराले जाव सस्सिरीए चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा, तं जहा–गय जाव सिहिं च ॥ ७ ॥ एएसिं णं देवाणुप्पिया! ओरालाणं जाव चउद्दसण्हं महा-

---

यत्कदम्बपुष्पं, तद्वत् समुच्छ्वसितानि—उल्लसितानि रोमाणि कूपेषु—रोमरन्ध्रेषु यस्याः सा समुच्छ्वसितरोमकूपा, एवंविधा सती 'स्वप्नावग्रहं' स्वप्नानां स्मरणं करोति, विशिष्टफललाभारोग्यराज्यादिकं विभावयतीत्यर्थः। स्वप्नावग्रहं कृत्वा शयनीयादभ्युत्तिष्ठति, अभ्युत्थाय 'अत्वरितया' मानसौत्सुक्यरहितया 'अचपलया' कायचापल्याभाववत्या 'असम्भ्रान्तया' अस्खलन्त्या 'अविलम्बितया' विलम्बरहितया राजहंससदृश्या गत्या यत्रैव ऋषभदत्तो ब्राह्मणः सुप्तोऽस्ति तत्रैवोपागच्छति, उपागत्य ऋषभदत्तं ब्राह्मणं जयेन विजयेन वर्द्धापयति, तत्र जयः—स्वदेशे विजयः—परदेशे, अथवा जयः—परैरनभिभवः प्रतापवृद्धिश्च; विजयः—परेषामसहमानानामभिभवः। वर्द्धापयित्वा सुखेन 'आसनवरं' भद्रासनं 'गता' प्राप्ता, तत आश्वस्ता—गतिजनितश्रमापनयनेन, विश्वस्ता—सङ्क्षोभाभावादनुत्सुका सती करतलाभ्यां परिगृहीतं दशनखं[1], शिरस्यावर्त्तं[2] कुर्वती मस्तकेऽञ्जलिं कृत्वा एवमवादीत्।

७—एवं 'खलु' निश्चयेनाहं हे देवानुप्रिय! स्वामिन्! अद्य शयनीये सुप्तजागरा वारंवारमल्पनिद्रां कुर्वती

---

१–संमुदिता दशनखा यस्मिन् स दशनखस्तम्। २–शिरसि–मस्तके आवर्त्तः प्रदक्षिणभ्रमणं शिरस्यावर्त्तस्तम्।

सुमिणाणं के मन्न कल्लाणे फलवित्तिविसेसे भविस्सइ ? । तए णं से उसभदत्ते माहणे देवाणंदाए माहणीए अंतिए एअमट्ठं सुच्चा निसम्म हट्ठतुट्ठ जाव हिअए धाराहयकयंबपुप्फगं पिव समुस्ससियरोमकूवे सुमिणुग्गहं करेइ, करित्ता ईहं अणुपविसइ, अणुपविसित्ता अप्पणो साभाविएणं मइपुव्वएणं बुद्धिविण्णाणेणं तेसिं सुमिणाणं अत्थुग्गहं करेइ, करित्ता देवाणंदं माहणिं एवं वयासी ॥ ८ ॥

---

इमान् एतद्रूपान् उदारान् यावत्सश्रीकान् चतुर्दशमहास्वप्नान् दृष्ट्वा 'प्रतिबुद्धा' जागरिता । तद्यथा–गजादितो निर्धूमाग्निं यावच्चतुर्दशापि स्वप्नाः पूर्वोक्ता ज्ञेयाः ।

८–एतेषां देवानुप्रिय ! उदाराणां यावच्चतुर्दशानां महास्वप्नानां, किं 'मन्ये' इति वितर्कार्थो निपातः, अथवा 'मन्ये' विचारयामि 'कल्याणः' कल्याणकारी, नाकल्याणकारी, फलवृत्तिविशेषो भविष्यति ?, तत्र फलं पुत्र-प्राप्त्यादि, वृत्तिः–जीवनोपायादिः । ततोऽनन्तरं स ऋषभदत्तो ब्राह्मणो देवानन्दाया ब्राह्मण्याः 'अन्तिके' समीपे 'एतं' स्वप्नविषयं अर्थं श्रुत्वा कर्णाभ्यां 'निशम्य' हृदयेऽवधार्य हृष्टतुष्टचित्तः, यावद्धर्षवशेन विसर्पद्-हृदयः, मेघधाराहतकदम्बपुष्पमिव समुच्छ्वसितरोमकूपः सन् 'स्वप्नावग्रहं' अर्थावग्रहतः स्वप्नधारणं करोति, कृत्वा 'ईहां' अर्थविचारणां अनुप्रविशति, अनुप्रविश्य आत्मनः स्वाभाविकेन मतिपूर्वकेण बुद्धिविज्ञानेन, तत्रानागतकालविषयामतिः, बुद्धिः प्रत्यक्षदर्शिनी, विज्ञानमतीतानागतवर्त्तमानार्थविमर्शः, यदुक्तं—

"मतिरप्राप्तविषया, बुद्धिः साम्प्रतदर्शिनी । अतीतार्था स्मृतिर्ज्ञेया, प्रज्ञा कालत्रयात्मिका ॥ १ ॥"

तेन तेषां स्वप्नानां 'अर्थावग्रहं' स्वप्नफलनिश्चयं करोति, कृत्वा देवानन्दां ब्राह्मणीं प्रति एवमवादीत् ।

ओराला णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, कल्लाणा सिवा धन्ना मंगल्ला सस्सिरिआ आरोग्ग–तुट्ठि–दीहाउ–कल्लाणमंगल्लकारगा णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, तं जहा–अत्थलाभो देवाणुप्पिए ! भोगलाभो देवाणुप्पिए ! पुत्तलाभो देवाणुप्पिए ! सुक्खलाभो देवाणुप्पिए !, एवं खलु तुमं देवाणुप्पिए ! नवण्हं मासाणं बहुपडिपुन्नाणं अद्धट्ठमाणं राइंदियाणं विइक्कंताणं सुकुमालपाणिपायं अहीणपडिपुण्णपंचिंदियसरीरं लक्खण–वंजण–गुणोववेयं माणुम्माण–पमाण–पडिपुन्नसुजायसव्वंगसुंदरंगं ससिसोमाकारं कंतं पिअदंसणं सुरूवं देवकुमारोवमं दारयं पयाहिसि ॥ ९ ॥

९–उदारास्त्वया देवानुप्रिये ! स्वप्ना दृष्टाः, एवं कल्याणाः शिवा धन्या माङ्गल्याः सश्रीकाः, यावदारोग्य–तुष्टि–दीर्घायुः–कल्याणमाङ्गल्यकारकास्त्वया देवानुप्रिये ! स्वप्ना दृष्टाः, तद्यथा–अर्थस्य लाभो देवानुप्रिये !, भोगानां लाभो देवानुप्रिये !, पुत्रस्य लाभो देवानुप्रिये !, सौख्यस्य लाभो देवानुप्रिये ! । एवं 'खलु' निश्चितं त्वं देवानुप्रिये ! ( अतः परसु पदेषु सप्तम्यर्थे षष्ठी, अतो ) नवसु मासेषु बहुषु प्रतिपूर्णेषु 'अर्द्धाष्टमेषु' सार्द्धसप्तसु 'रात्रिन्दिवेषु' अहोरात्रेषु व्यतिक्रान्तेषु सत्सु सुकुमालपाणिपादं अहीनानि–लक्षणतो हीनतारहितानि, प्रतिपूर्णानि च स्वरूपतः पञ्चापीन्द्रियाणि यत्रैवंविधं शरीरं यस्य स तथा, तम्, लक्षणव्यञ्जनगुणोपपेतं, तत्र—

"द्वात्रिंशत्–साष्टशतं, साष्टसहस्रं च लक्षणवराणि । क्रमशो वपुषि भवेयुः, सभाग्यनर–चक्रि–तीर्थकृताम् ॥ १ ॥"

द्वात्रिंशल्लक्षणानि चेमानि—

"प्रासाद[1]-पर्वत[2]-शुका[3]-ङ्कुश[4]-सुप्रतिष्ठ[5]–पद्मा[6]भिषेक[7]-यव[8]-दर्पण[9]–चामराणि[10] ।
कुम्भे[11]-पुं[12]-मत्स्य[13]-मकर[14]-द्विप[15]-सत्पताका[16]–सौदामिनी[17]-वसुमती[18]-रथ-तोरणानि[19] ॥ १ ॥ ( वसन्त० )

"छत्रध्वजस्वस्तिककूपवापी–कमण्डलुस्तूपमयूरकूर्माः । अष्टापदस्थालसमुद्रसिंहा, द्वात्रिंशदेवं नरलक्षणानि ॥ २ ॥" (वाणी)

अथवाऽपराणि द्वात्रिंशदिमानि—

"पञ्चदीर्घं चतुर्ह्रस्वं, चतुःसूक्ष्मं षडुन्नतं । ससरक्तं त्रिविस्तीर्णं, त्रिगम्भीरं प्रशस्यते ॥१॥ बाहू नेत्रान्तरं चैव, जानु–नासास्तथैव च । स्तनयोरन्तरं चैव, पञ्चदीर्घं प्रशस्यते ॥ २॥ ग्रीवा प्रजननं पृष्ठीः, ह्रस्वे जङ्घे च पूज्यते । ह्रस्वाणि यस्य चत्वारि, पूजामाप्नोति मानवः ॥३॥ सूक्ष्माण्यङ्गुलिपर्वाणि, केशा-स्थि-दशनास्तथा । चतुःसूक्ष्माणि येषां स्यात्, ते नरा दीर्घजीविनः ॥ ४ ॥ कक्षः कुक्षिश्च वक्षश्च, घ्राण–स्कन्ध–कृकाटिका । सर्वभूतेषु निर्दिष्टं, षडुन्नतं प्रशस्यकम् ॥५॥ पाणिपादतलौ रक्तौ, नेत्रान्तानि नखास्तथा । तालु–जिह्वा–ऽधरौ-ष्ठौ च, ससरक्तोऽर्थवान् भवेत् ॥ ६ ॥ उरः शिरो ललाटं च, त्रिविस्तीर्णं प्रशस्यते । स्वरं सत्त्वं च नाभिश्च, त्रिगम्भीरं प्रशस्यते ॥७॥"+

+ किञ्च–"मुखमर्धं शरीरस्य, सर्वं वा मुखमुच्यते । ततोऽपि नासिका श्रेष्ठा, श्रेष्ठे तत्रापि लोचने ॥ १ ॥ यथा नेत्रे तथा शीलं, यथा नासा तथाऽऽर्जवम् । यथा रूपं तथा वित्तं, यथा शीलं तथा गुणाः ॥ २ ॥ गतेः प्रशस्यते वर्ण–स्ततः स्नेहोऽमुतः स्वरः । अतस्तेज इतः सत्त्व–मिदं द्वात्रिंशतोऽधिकम् ॥ ३ ॥ सात्त्विकः सुकृती दानी, राजसो विषयी भ्रमी । तामसः पातकी लोभी, सात्त्विकोऽमीषु सत्तमः ॥ ४ ॥ यः सात्त्विकस्तस्य दयास्थिरत्वं, सत्यं ध्रुवं देवगुरुप्रभक्तः । सत्त्वाधिकः काव्यशतक्रतुश्च, स्त्रीसक्तचित्तः पुरुषेषु शूरः ॥ ५ ॥ अतिह्रस्वेऽतिदीर्घे च, स्थूले चातिकृशे तथा । अतिकृष्णेऽतिगौरे च, षट्सु सत्त्वं निगद्यते ॥६॥ सद्धर्मः सुभगो नीरुक्, सुस्वप्नः सुनयः कविः । सूचयत्यात्मनः श्रीमान्, नरः स्वर्गगमागमौ ॥ ७ ॥ निर्दम्भः सदयो दानी,

दान्तो दक्षः सदा ऋजुः । मर्त्त्ययोनेः समुद्भूतो, भविता च पुनस्तथा ॥८॥ मायालोभक्षुधाऽऽलस्य—बह्वाहारादिचेष्टितैः । तिर्यग्योनिसमुत्पत्तिं, ख्यापयत्यात्मनः पुमान् ॥ ९ ॥ सरागः स्वजनद्वेषी, दुर्भगो मूर्खसङ्गकृत् । शास्ति स्वस्य गतायातं, नरो नरकवर्त्मनि ॥ १० ॥ नासिकानेत्रदन्तौष्ठ—करकर्णाङ्घ्रिणा नराः । समाः समेन विज्ञेया, विषमा विषमेन तु ॥ ११ ॥ अस्थिष्वर्थाः सुखं मांसे, त्वचि भोगाः स्त्रियोऽक्षिषु । गतौ यानं स्वरे चाज्ञा, सर्वं सत्त्वे प्रतिष्ठितम् ॥ १२ ॥ आवर्तो दक्षिणे भागे, दक्षिणः शुभकृन्नृणां । वामो वामेऽतिनिन्द्यः स्या—द्दिगन्यत्वे तु मध्यमः ॥ १३ ॥ अकर्मकठिनः पाणि—र्दक्षिणो वीक्ष्यते नृणाम् । वामभ्रुवां पुनर्वामः, शुभशस्तोऽतिकोमलः ॥ १४ ॥ पाणेस्तलेन शोणेन, धनी नीलेन मद्यपः । पीतेनागम्यनारीगः, कल्मषेण धनोज्झितः ॥ १५ ॥ दातोन्नते तले पाणे—र्निम्ने पितृधनोज्झितः । धनी संवृत्तनिम्ने स्या—द्विषमे निर्द्धनः पुमान् ॥ १६ ॥ अरेखं बहुरेखं वा, येषां पाणितलं नृणां । ते स्युरल्पायुषो निःस्वा, दुःखिता नात्र संशयः ॥ १७ ॥ दीर्घनिर्मांसपर्वाणः, सूक्ष्मा दीर्घाः सुकोमलाः । सुघनाः सरला वृत्ताः, स्त्रीणोरङ्गुलयः श्रिये ॥ १८ ॥ मध्यमाप्रान्तरेखाया, अधिका यदि तर्जनी । प्रचुरस्तत्पितुः पक्षः, श्रियश्च विपदोऽन्यथा ॥ १९ ॥ अनामिकाऽन्त्यरेखायाः, कनिष्ठा स्याद्यदाऽधिका । धनवृद्धिस्तदा पुंसां, मातृपक्षो बहुस्तथा ॥ २० ॥ मध्यमायां तु दीर्घायां, भार्याहानिर्विनिर्दिशेत् । अनामिकायां दीर्घायां, विद्याभोगी भवेन्नरः ॥ २१ ॥ मणिबन्धात्पितुर्लेखा, करभाद्विभवायुषोः । लेखे द्वे यान्ति तिस्रोऽपि, तर्जन्यङ्गुष्ठकान्तरम् ॥२२॥ येषां रेखा इमास्तिस्रः, सम्पूर्णा दोषवर्जिताः । तेषां गोत्रधनायूंषि, सम्पूर्णान्यन्यथा न तु ॥ २३ ॥ उल्लङ्घ्यन्ते च यावन्त्यो—ऽङ्गुल्यो जीवितरेखया । पञ्चविंशतयो ज्ञेया—स्तावत्यः शरदां बुधैः ॥ २४ ॥ मणिबन्धोन्मुखा आयु-र्लेखायां येऽत्र पल्लवाः । सम्पदस्ते बहिर्ये ता, विपदोऽङ्गुलिसम्मुखाः ॥ २५ ॥ ऊर्ध्वरेखा मणि-

व्यञ्जनानि—मष-तिलक-लशुनादीनि, तेषां गुणाः-प्रशस्ततादयः, अथवा गुणा—धैर्यौदार्यादयस्तैरुपपेतं-युक्तं। मानोन्मानप्रमाणप्रतिपूर्णसुजातसर्वाङ्गसुन्दराङ्गं, तत्र पुरुषप्रमाणजलभृतकुण्डान्तःप्रविष्टे यस्मिन्नरे द्रोणमानं × जलं बहिः पतति, स मानोपेतः, यस्तु तुलारूढोऽर्धभारं तुलति, स उन्मानप्राप्तः। तत्र भारमानं त्वेवं—

"षट्सर्षपैर्यवस्त्वेको, गुञ्जैका च यवैस्त्रिभिः।"

"गुञ्जात्रयेण वल्लः स्याद्, गद्याणे ते च षोडश। पले च दश गद्याणा-स्तेषां (पलानां) सार्द्धशतं मणे ॥१॥"

---

बन्धा-दूर्ध्वगा सा तु पञ्चधा। अङ्गुष्ठाश्रयणी सौख्य-राज्यलाभाय जायते ॥ २६ ॥ राजा राजसदृक्षो वा, तर्जनीं गतयाऽनया। मध्यमां गतयाऽऽचार्यः, ख्यातो राजाऽथ सैन्यपः ॥२७॥ अनामिकां प्रयान्त्या तु, सार्थवाहो महाधनः। कनिष्ठां गतया श्रेष्ठः, सप्रतिष्ठो भवेद्ध्रुवम् ॥ २८ ॥ यवैरङ्गुष्ठमध्यस्थै-र्विद्याख्यातिविभूतयः। शुक्लपक्षे तथा जन्म, दक्षिणाङ्गुष्ठगैश्च तैः ॥ २९ ॥ न स्त्री त्यजति रक्ताक्षं, नार्थः कनकपिङ्गलम्। दीर्घबाहुं न चैश्वर्यं, न मांसोपचितं सुखम् ॥ ३० ॥ उरोविशालो धनधान्यभोगी, शिरोविशालो नृपपुङ्गवश्च। कटीविशालो बहुपुत्रदारो, विशालपादः सततं सुखी स्यात् ॥ ३१ ॥ अतिमेधाऽतिकीर्तिश्च, विख्यातोऽतिसुखी तथा। अतिस्निग्धा च दृष्टिश्च, स्तोकमायुर्विनिर्दिशेत् ॥ ३२ ॥ चक्षुःस्नेहेन सौभाग्यं, दन्तस्नेहेन भोजनम्। वपुःस्नेहेन सौख्यं स्यात्, पादस्नेहेन वाहनम् ॥ ३३ ॥ वामभागे तु नारीणां, दक्षिणे पुरुषस्य च। विलोक्यं लक्षणं विज्ञैः, पुंसस्त्वायुःपुरस्सरम् ॥३४॥ पुष्टं यदेव देहे स्या-ल्लक्षणं चाप्यलक्षणम्। इतरद्बाध्यते तेन, बलवत्फलदं भवेत् ॥ ३५ ॥"

× "द्विशतषट्पञ्चाशत्पलप्रमाणं द्रोणमानं" इति कल्पलतायामुक्तत्वात्पलानां सार्द्धशतैर्मणस्य व्यवहृतत्वाच्चैकत्रिंशत्पलाधिकं सार्द्धैकमणं द्रोणमानम्।

से वि अ णं दारए उम्मुक्कबालभावे विन्नायपरिणयमित्ते जोव्वणगमणुपत्ते रिउव्वेअ-जउव्वेअ-सामवेअ-अथव्वणवेअ, इतिहासपंच-

"मणैर्दशभिरेका च, धटिका कथिता बुधैः । धटीभिर्दशभिस्ताभि-रेको भारः प्रकीर्त्तितः ॥ २ ॥"

तथा यः स्वाङ्गुलेनाष्टोत्तरशताङ्गुलोच्चः स प्रमाणप्राप्तः, सामान्योत्तमपुरुषप्रमाणमेतत्, तीर्थङ्कराणां तु चूलारूपद्वादशाङ्गुलोष्णीषसद्भावाद्विंशत्यधिकशताङ्गुलोच्चत्वं भवति, कालचूलेत्यधिकमासाविवक्षकैर्न विवक्षितव्यमेतदपि। ततो मानोन्मानप्रमाणैः प्रतिपूर्णानि 'सुजातानि' सुनिष्पन्नानि सर्वाण्यङ्गानि यत्र, एवंविधं सुन्दरमङ्गं यस्य स तथा, तं, शशिवत्सौम्याकारं 'कान्तं' कमनीयं प्रियदर्शनं सुरूपं देवकुमारोपमं 'दारकं' पुत्रं प्रजनिष्यसि।

१०–सोऽपि च दारक उन्मुक्तबालभावः–सञ्जाताष्टवर्षः सन् 'विज्ञातं' विज्ञानं परिणतमात्रं यस्य स तथा, क्वचित् "विण्णय"त्ति पाठस्तत्र विज्ञ एव विज्ञकः, स चासौ परिणतश्च–बुद्ध्यादिपरिणामवान्, यौवनमेव यौवनकस्तं यौवनकमनुप्राप्तः सन् "रिउव्वेअ" इत्यत्र लुप्तषष्ठ्यन्तत्वात् ऋग्वेद-यजुर्वेद-सामवेदा-थर्वणवेदानां इतिहासपञ्चमानां × निघण्टुर्नामकोशः, स षष्ठो येषु ते तथा, तेषाम् निघण्टुषष्ठानां साङ्गोपाङ्गानां, अङ्गानि–शिक्षा-कल्प-व्याकरण–छन्दो–ज्योति-र्निरुक्तयः, उपाङ्गानि-तदुक्तार्थप्रपञ्चनपराः प्रबन्धाः, तैः सहितानां, 'सरहस्यानां' आम्नायसहितानां

× इतिहासः–पुराणं पञ्चलक्षणो यथा–"सर्गश्च प्रतिसर्गश्च, वंशो मन्वन्तराणि च । वंशानुवंशचरितं, पुराणं पञ्चलक्षणम् ॥ १ ॥" स पञ्चमो येषु ते तथा, तेषाम् । "ब्रह्मा[१०००]-म्भोरुह[५००००]-विष्णु[२३०००]-(शम्भु)-वायु[२४०००]-भगवत्संज्ञं[१८०००] ततो नारदं[२५०००], मार्कण्डेय[१५०००]-मथाग्नि[२१०००] दैवतमिति प्रोक्तं भविष्यं[११०००] तथा । तस्माद्-ब्रह्मविवर्तसंज्ञ[१८०००]मुदितं लिंगं[११०००] वराहः[१४०००] स्मृतं, स्कन्दं[८१०००] वामन[१००००]-मत्स्य[१४०००]-कूर्म[१७०००]-गरुडं[१९०००] ब्रह्माण्ड[१२०००]मष्टादशं ॥ १ ॥" इत्यष्टादशपुराणनामानि ग्रन्थमानं च ॥

माणं निघंटुछट्ठाणं संगोवंगाणं सरहस्साणं चउण्हं वेआणं सारए पारए धारए, सडंगवी, सट्ठितंतविसारए, संखाणे सिक्खाणे सिक्खा-कप्पे वागरणे छंदे निरुत्ते जोइसामयणे, अन्नेसु अ बहुसु बंभणएसु परिव्वायएसु नएसु सुपरिनिट्ठिए आवि भविस्सइ ॥ १० ॥

तं ओराला णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, जाव आरुग्ग-तुट्ठि-दीहाउय-कल्लाण-मंगल्लकारगा णं तुमे देवाणुप्पिए ! सुमिणा

---

चतुर्णां वेदानां 'सारकः' अध्यापनादौ प्रवर्तकः, सारको वाऽन्येषां विस्मृतानां, 'पारगः' पर्यन्तगामी 'धारकः' अधीतानविस्मरणाद्धारयितुं क्षमः 'षडङ्गवित्' षण्णां शिक्षादीनां प्रागुक्तानां अङ्गानां ज्ञाता, प्रधानास्तित्वाद्याः षष्टिरर्थाः तन्त्रिताः—सूत्रिता अत्रेति 'षष्टितन्त्रं' कापिलीयशास्त्रं, तस्मिन् विशारदः, 'सङ्ख्याने' गणितशास्त्रे, यथा पृष्टं केनचित्—

"अर्धं तोये कर्दमे द्वादशांशः, षष्ठो भागो वालुकायां निमग्नः ।
सार्धो हस्तो दृश्यते यस्य तस्य, स्तम्भस्याऽऽशु ब्रूहि मानं विचिन्त्य ॥ १ ॥" { हस्तषण्मित इत्युत्तरितं गणितज्ञेन }

पुनः शिक्षां अणति–प्रतिपादयतीति 'शिक्षाणं' आचारोपदेशशास्त्रं, तस्मिन् तथा शिक्षायां–अक्षरस्वरूपनिरूपके शास्त्रे, कल्पे–यज्ञादिसामाचारीप्रतिपादके शास्त्रे, 'व्याकरणे' ऐन्द्र–चान्द्र–जैनेन्द्र–पाणिनीयादिशब्दलक्षण-शास्त्रे 'छन्दसि' पद्यलक्षणनिरूपके शास्त्रे 'निरुक्ते' पदभञ्जने 'ज्योतिषां' ग्रहादीनां 'अयने' ज्ञाने, ज्योतिः-शास्त्रे इत्यर्थः । अन्येषु च बहुषु 'ब्राह्मण्येषु' ब्राह्मणसत्केषु हितेषु वा वेदव्याख्यारूपेषु, परिव्राजकसत्केषु 'नयेषु' आचारेषु न्यायशास्त्रेषु वा 'सुपरिनिष्ठितः' सुनिष्णातश्चापि भविष्यति ।

११–तस्मादुदारास्त्वया देवानुप्रिये ! स्वप्ना दृष्टाः, यावत् आरोग्य-तुष्टि-दीर्घायुष्ककल्याण-माङ्गल्यकारका-स्त्वया देवानुप्रिये ! स्वप्ना दृष्टाः, इति 'कृत्वा' भणित्वा भूयोभूयः 'अनुबृंहति' अनुमोदयति ।

दिट्ठत्ति कट्टु भुज्जो भुज्जो अणुवूहइ ॥ ११ ॥ तए णं सा देवाणंदा माहणी उसभदत्तस्स माहणस्स अतिए एअमट्ठं सुच्चा निसम्म हट्ठ-तुट्ठ जाव हियया, जाव करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु उसभदत्तं माहणं एवं वयासी ॥ १२ ॥

एवमेयं देवाणुप्पिया !, तहमेयं देवाणुप्पिया !, अवितहमेयं देवाणुप्पिया !, असंदिद्धमेयं देवाणुप्पिया !, इच्छियमेयं देवाणुप्पिया ! पडिच्छियमेयं देवाणुप्पिया !, इच्छियपडिच्छियमेयं देवाणुप्पिया ! सच्चे णं एसमट्ठे, से जहेयं तुब्भे वयह त्ति कट्टु ते सुमिणे सम्मं पडिच्छइ, पडिच्छित्ता उसभदत्तेणं माहणेणं सद्धिं उरालाइं माणुस्सगाइं भोगभोगाइं भुंजमाणी विहरइ ॥ १३ ॥

ते णं काले णं ते णं समए णं सक्के देविंदे देवराया वज्जपाणी पुरंदरे सयक्कऊ सहस्सऽक्खे मघवं पागसासणे दाहिणऽड्ढलोगाहिवई

---

१२-ततः सा देवानन्दा ब्राह्मणी ऋषभदत्तस्य ब्राह्मणस्यान्तिके एनमर्थं-स्वप्नफलरूपं श्रुत्वा 'निशम्य' चित्तेऽवधार्य हृष्टा तुष्टा यावद्विसर्पद् हृदया सती यावत्करतलपरिगृहीतं दशनखं शिरस्यावर्त्तं यथा स्यात्तथा मस्तकेऽञ्जलिं कृत्वा ऋषभदत्तं ब्राह्मणं प्रत्येवमवादीत् ।

१३-एवमेतद्देवानुप्रिय !, तथैवैतद्देवानुप्रिय ! यथा भवद्भिरुक्तं, 'अवितथं' असत्यताशून्यं एतद्देवानुप्रिय !, 'असन्दिग्धं' सन्देहरहितमेतद्देवानुप्रिय ! 'इच्छितं' इष्टमेतन्मम देवानुप्रिय ! 'प्रतीच्छितं' युष्मन्मुखात्पतदेव गृहीतं मयैतद्देवानुप्रिय !, इच्छितप्रतीच्छितमेतद्देवानुप्रिय !, धर्मद्वययोगोऽत्यादरख्यापकः । सत्य एषोऽर्थः "से" इति वाक्योपन्यासे, यथेमं यूयं वदथ, इति 'कृत्वा' भणित्वा तान् स्वप्नान् सम्यक् 'प्रतीच्छति' अङ्गीकरोति । प्रतीच्छ्य ऋषभदत्तेन ब्राह्मणेन सार्द्धं 'मानुष्यकान्' मनुष्यसत्कान् उदारान् भोगार्हान् भोगान् भुञ्जाना विहरति ।

१४-तस्मिन् काले तस्मिन् समये शक्रनामसिंहासनस्वामी शक्रः, देवेषु परमैश्वर्येण शोभते इति देवेन्द्रः,

बत्तीसविमाणसयसहस्साहिवई एरावणवाहणे सुरिंदे अरयंबरवत्थधरे आलइअमालमउडे नवहेमचारुचित्तचंचलकुंडलविलिहिज्जमाणगल्ले महिड्ढिए महज्जुइए महाबले महायसे महाणुभावे महासुक्खे भासुरबुंदी पलंबवणमालधरे, सोहम्मे कप्पे सोहम्मवडिंसए विमाणे

---

देवेषु छत्रचामरादिराजचिह्नै राजते इति देवराजा 'वज्रपाणि' करधृतवज्रः 'पुरन्दरः' दैत्यनगरविदारकः, क्रतूनां—अभिग्रहविशेषाणां श्राद्ध(पञ्चम)प्रतिमारूपाणां वा शतं कृतमिति शतक्रतुः, कार्त्तिकश्रेष्ठिभवापेक्षिकमिदं नाम।

तथाहि—"पृथिवीविभूषणपुरेऽभवत्प्रजापालभूपतिस्तत्र। शतवारकृतश्रावक—सत्प्रतिमः कार्त्तिकश्रेष्ठी ॥१॥"

"नृपवचसा नृपगेहे, गैरिकतापसमभोजयत। पश्चात्संविग्नमना, दीक्षां द्वादशवर्षाणि पालितवान् ॥ २ ॥"

"इन्द्रोऽजनि सौधर्मे, तापसोऽप्यस्य वाहनगजोऽभूत्। नाम शतक्रतुरेवं, पूर्वभवापेक्षयेन्द्रस्य ॥ ३ ॥"

सहस्राक्षः—पञ्चशतमन्त्रिनेत्राणामिन्द्रकार्यप्रवृत्तत्वात्, मघा—महामेघा देवविशेषा वा वशे यस्य स मघवान्, पाका-बलवन्तोऽरयस्तान्, यद्वा पाको-दैत्यविशेषस्तं शास्तीति पाकशासनः 'दक्षिणार्द्धलोकाधिपतिः' मेरुरुचकाद्दक्षिणार्द्धलोकस्य स्वामी, द्वात्रिंशद्विमानानां शतसहस्रा—लक्षास्तेषामधिपतिः, ऐरावणो नाम गजरूपकर्त्ता देवविशेषो वाहनो यस्य स तथा, 'अरजोऽम्बरवस्त्रधरः' आकाशवन्निर्मलवस्त्रधारकः 'आलगितौ' यथास्थानं स्थापितौ मालामुकुटौ येन स आलगितमालामुकुटः, नवाभ्यां हेमसत्काभ्यां 'चारुभ्यां' मनोज्ञाभ्यां 'चित्राभ्यां' आश्चर्यकृद्भ्यां 'चञ्चलाभ्यां' इतस्ततश्चलनपराभ्यां कुण्डलाभ्यां विलिख्यमानौ गल्लौ यस्य स तथा, महती ऋद्धिश्छत्रादिराजचिह्नरूपा यस्य स महर्द्धिकः, एवं महाद्युतिको, द्युतिराभरणादीनां देहस्य च कान्तिः। महाबलो महायशा

सुहम्माए सभाए सक्कंसि सीहासणंसि। से णं तत्थ बत्तीसाए विमाणावाससयसाहस्सीणं, चउरासीए सामाणिअसाहस्सीणं, तायत्तीसाए तायत्तीसगाणं, चउण्हं लोगपालाणं, अट्ठण्हं अग्गमहिसीणं सपरिवाराणं, तिण्हं परिसाणं, सत्तण्हं अणीआणं, सत्तण्हं अणीयाहिवईणं, चउण्हं चउरासीणं आयरक्खदेवसाहस्सीणं, अन्नेसिं च बहूणं, सोहम्मकप्पवासीणं वेमाणियाणं देवाणं देवीण य, आहेवच्चं पोरेवच्चं

महानुभावो, अनुभावो–महिमा। महासौख्यः "भासुरबुन्दि" देदीप्यमानवपुः 'प्रलम्बवनमालाधरः' पादान्तावलम्बिनीपुष्पमालाधारकः, ईदृशः सुरेन्द्रः सौधर्मे कल्पे सौधर्मावतंसके विमाने सुधर्मायां सभायां शक्रनाम्नि सिंहासने, विहरतीति गम्यं। किं कुर्वन् विहरतीत्याह–स इन्द्रस्तत्र–सौधर्मदेवलोके द्वात्रिंशद्विमानावासशतसहस्राणां–(विमाना एव आवासा विमानावासा, अर्थात्) द्वात्रिंशल्लक्षविमानानां, चतुरशीतिशक्रसामानिक*देवसहस्राणां, त्रयस्त्रिंशत्त्रायस्त्रिंशानां ×, चतुर्णां लोकपालानां–सोम–यम–वरुण–कुबेराख्यानां, अष्टानामग्रमहिषीणां§ 'सपरिवाराणां' प्रत्येकं षोडशसहस्रदेवीपरिवारसहितानां, तिसृणां–बाह्यमध्याभ्यन्तराणां पर्षदां, सप्तानां 'अनीकानां' सैन्यानां +, सप्तानां अनीकाधिपतीनां हरिणैगमेषिप्रभृतीनां, चतुर्णां चतुरशीतीनामात्मरक्षकदेवसाहस्रीणां, अर्थात्षट्त्रिंशत्सहस्राधिकलक्षत्रयमितानामङ्गरक्षकदेवानां, अन्येषां च बहूनां सौधर्मकल्पवासिनां वैमानिकानां देवानां देवीनां च, आधिपत्यं–अधिपतेः कर्म–रक्षा, तां। 'पौरोवर्त्यं' सर्वाग्रेसरत्वं

* इन्द्रसमानया शक्त्यायुर्ज्ञानादिकया ऋद्ध्या चरन्तीति सामानिकाः। × महत्तरकल्पाः–शक्रस्यापि पूज्याः मन्त्रिकल्पा वा। § पद्मा–शिवा शची चाञ्जू–रप्सरा अमला तथा। नवमी रोहिणी चाग्र-महिष्योऽष्टौ सुरेशितुः ॥ १ ॥" + गन्धर्व–नाट्या–श्व–गज–रथ–सुभट–वृषभ(भवनपत्यादिषु महिष) संज्ञकानां,

सासित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे, महयाहयनट्ट-गीअ-वाइअ-तंती-तल-ताल-तुडिअ-घणमुइंग-पडुपडहवाइअरवेणं दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ ॥ १४ ॥

इमं च णं केवलकप्पं जंबुद्दीवं दीवं विउलेणं ओहिणा आभोएमाणे आभोएमाणे विहरइ। तत्थ णं समणं भगवं महावीरं जंबुद्दीवे दीवे भारहे वासे दाहिणड्ढभरहे माहणकुंडग्गामे नयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए

'स्वामित्वं' नायकत्वं 'भर्तृत्वं' पोषकत्वं 'महत्तरकत्वं' गुरुतरत्वं, आज्ञया ईश्वरः–प्रधानो यः सेनापतिः, तस्य कर्म आज्ञेश्वरसेनापत्यं, अद्भुतमाज्ञाप्राधान्यमित्यर्थः। कारयन्नियुक्तैः पालयन्स्वयमेव, महता शब्देनाऽहतं–अविच्छिन्नं यन्नाट्यं, तत्र यद्गीतं यानि च 'वादितानि' वादित्राणि वक्ष्यमाणानि 'तन्त्री' वीणा 'तलताला' हस्तास्फोटरवाः, यद्वा तला–हस्तास्तालाः–कांसिकाः, तथा 'त्रुटितानि' अन्यवादित्राणि यथा–'घनमृदङ्गो' मेघध्वनिमर्दलः, तथा पटुपटहः, तेषां यद्वादितं–वादनं, तेषां 'रवेण' शब्देन दिव्यान् भोगार्हान् भोगान् भुञ्जानो विहरति। पुनः किं कुर्वन् विहरति ? इत्याह—

१५ इमं च 'केवलकल्पं' सम्पूर्णं जम्बूद्वीपाभिधं द्वीपं 'विपुलेन' विस्तीर्णेनावधिना 'आभोगयन् २' विलोकयन् विलोकयन् विहरति। तत्र–प्रस्तावे श्रमणं भगवन्तं महावीरं जम्बूद्वीपे द्वीपे भारते वर्षे दक्षिणार्द्धभरते ब्राह्मणकुण्डग्रामे नगरे ऋषभदत्तस्य ब्राह्मणस्य "कोडालस"गोत्रस्य भार्याया देवानन्दाया ब्राह्मण्या "जालन्धरस"गोत्रायाः कुक्षौ गर्भतया व्युत्क्रान्तं पश्यति, दृष्ट्वा हृष्टतुष्टचित्तेन आनन्दितः, 'नन्दितः' हर्षधनेन समृद्धतां प्राप्तः 'परमानन्दितः' अतीव समृद्धोऽभूत् 'प्रीतमनाः' प्रीतियुक्तचित्तः 'परमसौमनस्यितः' परमसन्तोषं प्राप्तः,

आलंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंतं पासइ, पासित्ता हट्ठ-तुट्ठ-चित्तमाणंदिए णंदिए परमाणंदिए पीअमणे परमसोमणस्सिए हरिसवसविसप्पमाणहियए धाराहयनीवसुरभिकुसुमचंचुमालइयऊससियरोमकूवे विकसियवरकमलनयणवयणे पयलियवरकडगतुडिय-केऊरमउडकुंडलहारविरायंतवच्छे पालंबपलंबमाणघोलंतभूसणधरे ससंभमं तुरिअं चवलं सुरिंदे सीहासणाओ अब्भुट्ठेइ, अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ, पच्चोरुहित्ता वेरुलियवरिट्ठरिट्ठंजणनिउणोवियमिसिमिसिंतमणिरयणमंडियाओ पाउयाओ ओमुयइ, ओमुइत्ता एगसाडिअं उत्तरासंगं करेइ, करित्ता अंजलिमउलिअग्गहत्थे तित्थयराभिमुहे सत्तट्ठपयाइं अणुगच्छइ, अणुगच्छित्ता वामं जाणुं अंचेइ,

हर्षवशाद्विसर्पद्हृदयः, मेघधाराहतं यन्नीपस्य-कदम्बस्य कुसुमं, तद्वत् 'चुञ्चुमालितः' पुलकितः सन्नुच्छ्वसितरोमकूपः, विकसितवरकमलनयनवदनः 'प्रचलितानि' सम्भ्रमात्कम्पितानि वराणि 'कटकानि' कङ्कणानि 'त्रुटिकाः' बाहुरक्षका "वहिरखा" इति लोके, 'केयूराणि' अङ्गदानि "वाजूबंध" इति लोके, मुकुट-कुण्डले च प्रसिद्धे, एतानि प्रचलितानि यस्य, तथा हारेण विराजद्वक्षस्थलः 'प्रालम्बो' मुक्तामयं झुम्बनकं, तच्च प्रलम्बमानं तथा 'घोलत्' दोलायमानं यद्भूषणं, तद्धारयति यः स तथा, 'ससम्भ्रमं' सादरं 'त्वरितं' सौत्सुक्यं 'चपलं' कायचापल्योपेतं, एवं यथा स्यात्तथा सुरेन्द्रः सिंहासनादभ्युत्तिष्ठति, अभ्युत्थाय पादपीठात्प्रत्यवतरति, प्रत्यवतीर्य पादुकेऽवमुञ्चति, ते किंविशिष्टे ?, वैडूर्य-मरकताख्यं नीलरत्नं, वरिष्ठे-प्रधाने रिष्ठाञ्जननाम्नी श्यामरत्ने, एतैर्निपुणेन शिल्पिना "ओविअ"त्ति रचिते इव, पुनः किंविशिष्टे ?, "मिसिमिसिंत"त्ति देदीप्यमानैर्मणिभिश्चन्द्रकान्ताद्यै रत्नैः-कर्केतनाद्यैश्च 'मण्डिते' भूषिते ये पादुके, तेऽवमुञ्चति, अवमुच्य 'एकशाटिकं' एकपटं उत्तरासङ्गं करोति, कृत्वा अञ्जलिमुकुलिताग्रहस्तस्तीर्थकराभिमुखः ससाष्टपदान्यनुगच्छति, अनुगम्य वामं जानुं 'अञ्चति' आकुञ्च-

अंचित्ता दाहिणं जाणुं धरणियलंसि साहट्टु तिक्खुत्तो मुद्धाणं धरणियलंसि निवेसेइ, निवेसित्ता ईसिं पच्चुण्णमइ, पच्चुण्णमित्ता कडगतुडिअथंभिआओ भुआओ साहरेइ, साहरित्ता करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी ॥ १५ ॥

नमुत्थु णं अरहंताणं भगवंताणं १, आइगराणं तित्थयराणं सयंसंबुद्धाणं २, पुरिसुत्तमाणं पुरिससीहाणं पुरिसवरपुंडरीयाणं पुरिस-

यति-भूमावलग्नं स्थापयतीत्यर्थः। अञ्चित्वा दक्षिणं जानुं धरणितले 'संहृत्य' निवेश्य 'त्रिःकृत्वः' त्रिवारं 'मूर्द्धानं' मस्तकं धरणितले निवेशयति, निवेश्य 'ईषत्' मनाक् प्रत्यवनमति, प्रत्यवनम्य कटकत्रुटिकाद्यैराभरणैः स्तम्भिते भुजे 'संहरति' वालयति, संहृत्य करतलपरिगृहीतं दशनखं यथा स्यात्तथा शिरस्यावर्त्तपूर्वं मस्तकेऽञ्जलिं कृत्वा एवमवादीत्—

१६—नमोऽस्तु इति सर्वपादान्तेषु सम्बध्यते, अत्र णंकारो वाक्यालङ्कारे, प्राकृतत्वात्सर्वत्र चतुर्थ्यर्थे षष्ठी, ततोऽर्हद्भ्यः—त्रिभुवनजनकृतपूजायोग्येभ्यः, कर्मारिहननाद् "अरिहंताणं" भवेऽप्ररोहणाद् "अरुहंताणं" इत्यपि पाठौ। बहुवचनमद्वैतवादोच्छेदेनार्हद्बहुत्वख्यापनार्थं नमस्कर्तुः फलातिशयख्यापनार्थं च, 'भगवद्भ्यः'।

"× भगोऽर्क-ज्ञान-माहात्म्य-यशो-वैराग्य-मुक्तिषु। रूप-वीर्य-प्रयत्ने-च्छा-श्री-धर्मै-श्वर्य-योनिषु ॥ १ ॥"

इत्येतेष्वाद्यान्तार्थवर्जद्वादशभगशब्दार्थयुक्तेभ्यः, आदिकरेभ्यः—श्रुतधर्मस्यार्थापेक्षया नित्यत्वेऽपि शब्दा-

× ज्ञानवान्—समस्तवस्तववबोधककैवल्यज्ञानयुतत्वात्। माहात्म्यवान्—समस्तेति—मार्यादिक्षुद्रोपद्रवशामकत्वात्। यशस्वी—सहजवैराणामहिमयूरादीनां वैरोपशमनात्। वैराग्यवान्—"यदा मरुन्नरेन्द्रश्री—स्त्वया नाथोपभुज्यते; यत्र तत्र रतिर्नाम, विरक्तत्वं तदाऽपि ते ॥ १ ॥" इत्युक्तेः। वीर्यवान्—अपरिमितबलवत्त्वात्। प्रयत्नवान्—तपःकर्मादावुत्साहवत्त्वात्। इच्छा—भावतो जन्तूनामुद्दिधीर्षा। श्रीश्चतुस्त्रिंशदतिशयरूपा। ऐश्वर्यं—अनेकेन्द्रादिकोटिदेवसेव्यत्वं। मुक्तिरूपधर्मवत्त्वं तु व्यक्तमेव।

नरगंधहत्थीणं ३, लोगुत्तमाणं लोगनाहाणं लोगहियाणं लोगपईवाणं लोगपज्जोअगराणं ४, अभयदयाणं चक्खुदयाणं मग्गदयाणं सरण-

पेक्षया स्वस्वतीर्थेत्वादिकरणात् । 'तीर्थकरेभ्यः' तीर्थ—सङ्घ आद्यगणधरो वा, तत्स्थापकेभ्यः । स्वयं, न तु परोपदेशात् 'सम्बुद्धेभ्यः' प्राप्ततत्त्वावबोधेभ्यः । 'पुरुषोत्तमेभ्यः' पुरुषेषु परार्थप्राधान्यस्वार्थगौणत्वाद्यनल्पगुणगणाकीर्णत्वात्सर्वोत्तमेभ्यः । पुरुषसिंहेभ्यः, कर्मशत्रुषु क्रूरत्वात् परीषहेषु सावज्ञत्वात् उपसर्गेभ्यो निर्भयत्वाच्च । पुरुषवरपुण्डरीकेभ्यः, पुरुषेषु वरं—प्रधानं यत्पुण्डरीकं—श्वेतकमलं, तत्तुल्येभ्यः, यतः—कर्मपङ्के जाता भोगजलैर्वृद्धा जिनास्त्यक्तोभया जगल्लक्ष्मीनिवासा नृपादिसेव्याश्च । पुरुषवरगन्धहस्तिभ्यः, ईति-भीति-दुर्भिक्षाद्युपद्रवगजानां भगवद्विहारपवनगन्धादेव भङ्गात् । लोकेषु—भव्यसमूहेषु चतुस्त्रिंशदतिशयोपेतत्वादुत्तमेभ्यः । लोकनाथेभ्यः, लोकस्य—भव्यजनस्यालब्धानां सम्यक्त्वादीनां प्रापणाद्योगस्य, प्राप्तानां रक्षणात्क्षेमस्य च कारकत्वात् । 'लोकहितेभ्यः' एकेन्द्रियादिसर्वप्राणिगणस्य हितकारकेभ्यः 'लोकप्रदीपेभ्यः' लोकस्य—देशनायोग्यनरादिरूपस्य देशनांशुभिर्मिथ्यात्वतमोऽपनयनेन प्रदीपा इव प्रदीपास्तेभ्यः । लोकप्रद्योतकरेभ्यः, लोकस्य—लोकालोकरूपस्य प्रवचनप्रवर्त्तनेन सूर्यवत्प्रकाशकेभ्यः । अभयदयेभ्यः—प्राणान्तकारिष्वप्यभयदायकत्वादिहलोकादिसप्तभयहरणाद्वा । चक्षुरिव चक्षुः—श्रुतज्ञानं, तद्दायकेभ्यः × । मार्गः—सम्यग्दर्शनादिमोक्ष-

× यथा किल चौरैर्धनं लुण्टित्वा लोचने च पट्टं बध्वोन्मार्गपातितानां जनानां कोऽपि पट्टापनयनपूर्वकं धनार्पणेन मार्गदर्शनेन चोपकारी भवति तथा भगवन्तोऽपि कषायैर्लुण्टितधर्मधनानां मिथ्यात्वाच्छादितविवेकनेत्राणां श्रुतसद्धर्ममुक्तिमार्गदानेनोपकारिणो भवन्ति ।

शक्रस्तवः धर्मसारथित्वे मेघकुमारोदाहरणम्

दयाणं जीवदयाणं बोहिदयाणं ५, धम्मदयाणं धम्मदेसयाणं धम्मनायगाणं धम्मसारहीणं धम्मवरचाउरंतचक्कवट्टीणं ६, दीवो ताणं सरणं

पथस्तद्दायकेभ्यः। भवभीतानां शरण दायकेभ्यः। जीवनं जीवो-ऽमरणधर्मत्वं, तद्दायकेभ्यः। बोधिर्जिनधर्मप्राप्तिस्तद्दायकेभ्यः। धर्मः-देश-सर्वचारित्ररूपस्तद्दायकेभ्यः। धर्मदेशकेभ्यः, धर्मदेशकत्वं चैतेषां धर्मस्वामित्वे सति, न तु नटवत्कथनमात्रं, अत एवाह-'धर्मनायकेभ्यः' धर्मस्य-क्षायिकज्ञानादिरूपस्य नायका-स्तद्वशीकरणात्। 'धर्मसारथिभ्यः' यथा सारथिरश्वान्प्रवर्त्तयति सन्मार्गे रक्षति चोन्मार्गादेवं भगवन्तोऽपि धर्मरथस्य सारथयो रथ-रथिक-तुरङ्गमकल्पानां संयमा-त्म-प्रवचनानां प्रवर्त्तन-रक्षणाभ्यां, मेघकुमारवत्तथाहि—

"राजगृहे श्रेणिकनृप-धारिणीनन्दनो युवा मेघः। अष्टौ प्रिया विहाया-श्रयद्व्रतं वीरजिनपार्श्वे ॥ १ ॥"

"शय्यादिपरीषहतो, भग्नमना बोधितः प्रगे प्रभुणा ×। वैताढ्ये विन्ध्यगिरौ, करिजन्मकृतक्षमादयाज्ञातात् ॥२॥"

"स्मृत्वा निजपूर्वभवौ, संवेगात्संयमाध्वनि समागात्। श्रीमेघमुनिश्चैवं, जिना मता धर्मसारथयः ॥ ३ ॥"

इति श्रीपर्युषणाकल्पावचूर्यन्तर्वाच्यादिविविधव्याख्यातः समुद्धृत्य श्रीखरतरगच्छगगनाङ्गणनभोमणि-परमशासनप्रभावक-क्रियोद्धारक-श्रीमन्मोहनमुनीश्वरविनेयान्तेवास्यनुयोगाचार्य-श्रीमत्केशरमुनिजीगणिवरसंगृहीतकल्पार्थबोधिनीनामपर्युषणाकल्पवृत्तौ प्रमोविप्रकुले प्रथमगर्भाधानकल्याणकेऽकल्याणकवादिमतनिरसनपूर्वकं षट्कल्याणकस्य शास्त्रोक्तताव्यवस्थापनबन्धुरं प्रथमं व्याख्यानम्।

ग्रं० ९०॥ मूलं, ६५५ वृत्तिः, २४१॥ टिप्पणी। सर्वाग्रेण ९८७।

× "वरं प्रवेष्टुं ज्वलितं हुताशनं, न चापि भग्नं चिरसञ्चितव्रतम्। वरं हि मृत्युः सुविशुद्धकर्मणो, न चापि शीलस्खलितस्य जीवितम् ॥ १ ॥" इत्याद्युपदेशात्तथा ॥

# अथ द्वितीयं व्याख्यानम्-

गई पइट्ठा, अप्पडिहयवरनाणदंसणधराणं विअट्टछउमाणं ७, जिणाणं जावयाणं तिन्नाणं तारयाणं बुद्धाणं बोहयाणं मुत्ताणं मोअगाणं ८, सव्व-

त्रयः समुद्राश्चतुर्थो हिमवानिति चत्वारो भारतक्षितेरन्तास्तेषु प्रभुतया भवाश्चातुरन्ता-श्चतुरन्तस्वामिनः, ईदृशा ये चक्रवर्त्तिनस्ते चातुरन्तचक्रवर्त्तिनः, धर्मेषु वराः-प्रधानाश्चातुरन्तचक्रवर्त्तिन इव धर्मवरचातुरन्त-चक्रवर्त्तिनः, यथा हि चक्रवर्त्तिनः शेषराजातिशायिनो भवन्ति तथा भगवन्तोऽपि शेषधर्मप्रणेतृषु सातिशयाः कथ्यन्ते। "दीवो ताणं" इत्यादीनि प्रथमान्तान्यपि चतुर्थ्यर्थे षष्ठ्यन्ततया योज्यानि, तत्र दीप इव दीपः, समस्तवस्तु प्रकाशकत्वात्, द्वीपो वा, भवाम्बुधौ दुःखकल्लोलाभिहतानामाश्वासहेतुत्वात्, 'त्राणं' अनर्थप्रतिघातहेतुः। 'शरणं' अर्थसम्पादनहेतुः। गम्यते-सुस्थित्यर्थं दुःस्थितैराश्रियत इति गतिः। 'प्रतिष्ठा' भवकूपपतत्प्राणिगणस्या-धारः। अप्रतिहते-कटादिभिरस्खलिते वरे-प्रधाने, क्षायिकत्वात्, ईदृशे ज्ञानदर्शने केवलाख्ये ये धरन्ति तेभ्यः। 'व्यावृत्तं' गतं 'छद्म' घातिकर्म संसारो वा येभ्यस्ते व्यावृत्तछद्मानस्तेभ्यः। 'जिनेभ्यो' रागद्वेषजेतृभ्यः। जापके-भ्योऽन्येषामुपदेशादिना। स्वयं संसारात्तीर्णेभ्योऽन्येषां च तारकेभ्यः। बुद्धेभ्यो-ज्ञाततत्त्वेभ्योऽन्येषां च बोध-केभ्यः। मुक्तेभ्यो भवचारकात्, सेवकानां मोचकेभ्यः। एतानि भवावस्थामाश्रित्योक्तानि विशेषणानि, अथ सिद्धावस्थामाश्रित्योच्यन्ते-'सर्वज्ञेभ्यो' विशेषतः सर्वार्थावबोधवद्भ्यः 'सर्वदर्शिभ्यः' सामान्यतः सर्वार्थाव-

ण्णूणं सव्वदरिसीणं सिवमयलमरुअमणंतमक्खयमव्वाबाहमपुणरावित्तिसिद्धिगइनामधेयं ठाणं संपत्ताणं, नमो जिणाणं जियभयाणं ९। नमुत्थु णं समणस्स भगवओ महावीरस्स आइगरस्स चरमतित्थयरस्स पुव्वतित्थयरनिद्दिट्ठस्स जाव संपाविउकामस्स। वंदामि णं भगवंतं तत्थ गयं इह गए, पासउ मे भगवं तत्थ गए इह गयं ति कट्टु समणं भगवं महावीरं वंदइ नमंसइ। वंदित्ता नमंसित्ता सीहासणवरंसि पुरत्थाभिमुहे सन्निसन्ने। तएणं तस्स सक्कस्स देविंदस्स देवरन्नो अयमेयारूवे अज्झत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था ॥१६॥

---

बोधवद्भ्यः। 'शिवं' निरुपद्रवं 'अचलं' स्वभावप्रयोगकृतचलनरहितं 'अरुजं' रोगरहितं 'अनन्तं' अनन्तार्थपरिज्ञानविषयं 'अक्षयं' क्षयरहितं 'अव्याबाधं' व्याबाधारहितं 'अपुनरावृत्तिः' पुनर्भवागमनशून्यं, एवंविधं यत्सिद्धिगतिनामधेयं स्थानं, तत्सम्प्राप्तेभ्यः। नमो जिनेभ्यो जितभयेभ्यः। एवं सामान्येन सर्वार्हतः स्तुत्वा पुनरधिकृतं वीरं स्तौति—नमोऽस्तु मम श्रमणाय भगवते महावीराय आदिकराय चरमतीर्थकराय पूर्वतीर्थकरनिर्दिष्टाय यावत् सिद्धिगतिनामकं स्थानं सम्प्राप्तुकामाय, यद्यपि भगवतो "मोक्षे भवे च सर्वत्र, निस्पृहो मुनिसत्तमः" इत्युक्तेः सिद्धौ नास्ति कामस्तथापि तदनुरूपचेष्टनात्सम्प्राप्तुकाम इव, नाद्यापि सम्प्राप्त इत्यर्थः। वन्दामि भगवन्तं 'तत्र' देवानन्दाकुक्षौ 'गतं' स्थितं 'अत्र' देवलोके गतोऽहं, अतः पश्यतु मां भगवान् तत्र गत इह गतं, इति कृत्वा श्रमणं भगवन्तं महावीरं वन्दते पूर्वोक्तस्तुत्या, नमस्यति शिरोनमनेन। वन्दित्वा नमस्यित्वा सिंहासनवरे 'पौरस्त्याभिमुखः' पूर्वदिक्सम्मुखः 'सन्निषण्णः' उपविष्टः। ततस्तस्य शक्रस्य देवेन्द्रस्य देवराज्ञः अयमेतद्रूपः 'आध्यात्मिकः' आत्मविषयः 'चिन्तितः' श्चिन्तात्मको, न ध्यानात्मकः, 'प्रार्थितो'ऽभिलाषात्मकः, मनोगतो, नाद्यापि वाचा प्रकाशितः, ईदृशः 'सङ्कल्पो' विचारः 'समुदपद्यत' उत्पन्नः।

न खलु एयं भूअं, न एयं भव्वं, न एयं भविस्सं, जं णं अरहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा, अंतकुलेसु वा पंतकुलेसु वा तुच्छकुलेसु वा दरिद्दकुलेसु वा किवणकुलेसु वा भिक्खागकुलेसु वा माहणकुलेसु वा, आयाइंसु वा आयाइंति वा आयाइस्संति वा ॥१७॥

एवं खलु अरहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा, उग्गकुलेसु वा भोगकुलेसु वा राइण्णकुलेसु वा इक्खागकुलेसु वा खत्तियकुलेसु वा हरिवंसकुलेसु वा, अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइ-कुलवंसेसु, आयाइंसु वा आयाइंति वा आयाइस्संति वा ॥ १८ ॥

---

१७–न खल्वेतद्भूतमतीतकाले, नैतद्भवति वर्त्तमानकाले, नैतद्भविष्यत्यनागतकाले, यदर्हन्तो वा चक्रवर्त्तिनो वा बलदेवा वा वासुदेवा वा, 'अन्त्यकुलेषु' शूद्रकुलेषु वा 'प्रान्तकुलेषु' अधमकुलेषु वा 'तुच्छकुलेषु' अल्पकुटुम्बर्द्धिकेषु वा 'दरिद्रकुलेषु' सर्वथानिर्धनकुलेषु वा 'कृपणा' अदातारस्तेषां कुलेषु वा, भिक्षाचराः प्रतीतास्तेषां कुलेषु वा, ब्राह्मणकुलेषु वा, भिक्षुकत्वात्, आगता अतीतकाले आगच्छन्ति वर्त्तमानकाले आगमिष्यन्त्यनागतकाले, एतन्न भूतमित्यादिः। तर्ह्यर्हदादयः क उत्पद्यन्ते? इत्याह—

१८–एवं खलु–निश्चयेनार्हन्तो वा चक्रवर्त्तिनो वा बलदेवा वा वासुदेवा वा, 'उग्राः' श्रीआदिदेवेनारक्षकत्वे ये नियुक्तास्तेषां कुलेषु वा 'भोगाः' ये गुरुत्वे नियुक्तास्तेषां कुलेषु वा 'राजन्याः' ये मित्रत्वे स्थापितास्तेषां कुलेषु वा 'इक्ष्वाकवः' श्रीऋषभजिनवंशोद्भवास्तेषां कुलेषु वा 'क्षत्रियाः' श्रीऋषभजिनेन शेषप्रकृतितया स्थापिता राजकुलीनास्तेषां कुलेषु वा, 'हरिवंशो' हरिवर्षक्षेत्रानीतयुगलिकोद्भवस्तत्कुलेषु वा, अन्यतरेषु वा ज्ञात-मल्लकी-लेच्छकी-कौरव्यादिषु तथाप्रकारेषु विशुद्धजाति-कुल-वंशेषु, तत्र 'जाति'र्मातृपक्षः 'कुलं' पितृपक्षः,

अत्थि पुण एसे वि भावे लोगऽच्छेरयभूए अणंताहिं उस्सप्पिणीहिं ओसप्पिणीहिं विइक्कंताहिं ( कयाइ ) समुप्पज्जइ ( ग्रं० १०० )। नाम गुत्तस्स वा कम्मस्स अक्खीणस्स अवेइयस्स अणिज्जिण्णस्स उदएणं, जं णं अरहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा, अंतकुलेसु वा पंतकुलेसु वा तुच्छकुलेसु वा दरिद्दकुलेसु वा भिक्खागकुलेसु वा किवणकुलेसु वा माहणकुलेसु वा आयाइंसु वा आयाइंति वा आयाइस्संति वा, कुच्छिंसि गब्भत्ताए वक्कमिंसु वा वक्कमंति वा वक्कमिस्संति वा, नो चेव णं जोणीजम्मणनिक्खमणेणं निक्खमिंसु वा निक्खमंति वा निक्खमिस्संति वा ॥ १९ ॥

अयं च णं समणे भगवं महावीरे जंबुद्दीवे दीवे भारहे वासे माहणकुंडग्गामे नयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंते ॥ २० ॥

---

इदृशेषु कुलेषु आयाता अतीतकाले आयान्ति वर्त्तमानकाले आयास्यन्त्यनागतकाले, न तु पूर्वोक्तेषु । तर्हि भगवान् कथमुत्पन्नः ? इत्याह—

१९—अस्ति पुनरेषोऽपि भावो भवितव्यताख्यो लोके आश्चर्यभूतोऽनन्ताभिरुत्सर्पिणीभिरवसर्पिणीभिर्व्यतिक्रान्ताभिः ( कदाचित् ) समुत्पद्यते। कथं ?, नाम्ना गोत्रं इति प्रसिद्धस्य कर्मणः 'अक्षीणस्य' स्थितेरक्षयेण 'अवेदितस्य' रसस्यापरिभोगेन 'अनिर्जीर्णस्य' जीवप्रदेशेभ्योऽपरिशटितस्य उदयेन, यदर्हन्तो वा चक्रवर्त्तिनो वा बलदेवा वा वासुदेवा वा, अन्त्यकुलेषु वा प्रान्तकुलेषु वा तुच्छ० दरिद्र० भिक्षाचर० कृपण० ब्राह्मणकुलेषु वा आयाता वा आयान्ति वा आयास्यन्ति वा, कुक्षौ गर्भतया व्युत्क्रान्ता वा व्युत्क्रामन्ति वा व्युत्क्रमिष्यन्ति वा, परं नैव योन्या जन्मार्थं निष्क्रमणेन निष्क्रान्ता वा निष्क्रामन्ति वा निष्क्रमिष्यन्ति वा ।

२०—अयं प्रत्यक्षः श्रमणो भगवान् महावीरः जम्बूद्वीपाख्ये द्वीपे भारते वर्षे ब्राह्मणकुण्डग्रामे नगरे

तं जीअमेअं तीअ-पच्चुप्पन्न-मणागयाणं सक्काणं देविंदाणं देवरायाणं, अरहंते भगवंते तहप्पगारेहिंतो अंतकुलेहिंतो पंत० तुच्छ० दरिद्द० भिक्खाग० किवण० माहणकुलेहिं तो वा तहप्पगारेसु उग्गकुलेसु वा भोगकुलेसु वा रायन्न० नाय० खत्तिय० हरिवंसकुलेसु वा, अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइ-कुल-वंसेसु जाव रज्जसिरिं कारेमाणेसु पालेमाणेसु साहराविंत्तए । तं सेयं खलु मम वि समणं भगवं महावीरं चरमतित्थयरं पुव्वतित्थयरनिद्दिट्ठं माहणकुंडग्गामाओ नयराओ उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ खत्तियकुंडग्गामे नयरे नायाणं खत्तियाणं सिद्धत्थस्स खत्तियस्स कासवगुत्तस्स भारियाए

ऋषभदत्तस्य ब्राह्मणस्य "कोडालस" गोत्रस्य भार्याया देवानन्दाया ब्राह्मण्या "जालन्धरस" गोत्रायाः कुक्षौ गर्भतया व्युत्क्रान्तः ।

२१-ततो जीतं-आचरणीय(कर्त्तव्य) मेतदतीतप्रत्युत्पन्नानागतानां शक्राणां देवेन्द्राणां देवराजानां, यदर्हन्तो भगवन्तस्तथाप्रकारेभ्योऽन्तकुलेभ्यः प्रान्तकुलेभ्यस्तुच्छकुलेभ्यो दरिद्रकुलेभ्यो भिक्षाचरकुलेभ्यः कृपणकुलेभ्यो ब्राह्मणकुलेभ्यस्तथाप्रकारेषु उग्रकुलेषु वा भोगकुलेषु वा राजन्य० ज्ञात० क्षत्रिय० हरिवंशकुलेषु वा, अन्यतरेषु वा तथाप्रकारेषु विशुद्धजाति-कुल-वंशेषु यावद्राज्यश्रियं कुर्वत्सु पालयत्सु च 'संहर्तुं' मोचयितुं। ततः श्रेयः ×खलु ममाप्येतत्-यच्छ्रमणं भगवन्तं महावीरं चरमतीर्थकरं पूर्वतीर्थकरनिर्दिष्टं ब्राह्मणकुण्डग्रामान्नगरात् ऋषभदत्तस्य ब्राह्मणस्य "कोडालस" गोत्रस्य भार्याया देवानन्दाया ब्राह्मण्याः "जालन्धरस" गोत्रायाः कुक्षितः

× नाऽत्रोऽशुभोऽतिनिन्द्यो वा, चेदत्रैवमश्रेयत्वादिविशेषणविशिष्टताऽत्र तर्हि वाच्यमभूत् "तमसेयं खलु ममे"ति सूत्रकारैरिन्द्रेणापि चात्र ।

अत्थि पुण एसे वि भावे लोगऽच्छेरयभूए अणंताहिं उस्सप्पिणीहिं ओसप्पिणीहिं विइक्कंताहिं (कयाइ) समुप्पज्जइ (ग्रं० १००)। नाम गुत्तस्स वा कम्मस्स अक्खीणस्स अवेइयस्स अणिज्जिण्णस्स उदएणं, जं णं अरहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा, अंतकुलेसु वा पंतकुलेसु वा तुच्छकुलेसु वा दरिद्दकुलेसु वा भिक्खागकुलेसु वा किवणकुलेसु वा माहणकुलेसु वा आयाइंसु वा आयाइंति वा आयाइस्संति वा, कुच्छिंसि गब्भत्ताए वक्कमिंसु वा वक्कमंति वा वक्कमिस्संति वा, नो चेव णं जोणीजम्मणनिक्खमणेणं निक्खमिंसु वा निक्खमंति वा निक्खमिस्संति वा ॥ १९ ॥

अयं च णं समणे भगवं महावीरे जंबुद्दीवे दीवे भारहे वासे माहणकुंडग्गामे नयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंते ॥ २० ॥

---

इदृशेषु कुलेषु आयाता अतीतकाले आयान्ति वर्त्तमानकाले आयास्यन्त्यनागतकाले, न तु पूर्वोक्तेषु। तर्हि भगवान् कथमुत्पन्नः ? इत्याह—

१९—अस्ति पुनरेषोऽपि भावो भवितव्यताख्यो लोके आश्चर्यभूतोऽनन्ताभिरुत्सर्पिणीभिरवसर्पिणीभिर्व्यतिक्रान्ताभिः (कदाचित्) समुत्पद्यते। कथं ?, नाम्ना गोत्रं इति प्रसिद्धस्य कर्मणः 'अक्षीणस्य' स्थितेरक्षयेण 'अवेदितस्य' रसस्यापरिभोगेन 'अनिर्जीर्णस्य' जीवप्रदेशेभ्योऽपरिशटितस्य उदयेन, यदर्हन्तो वा चक्रवर्त्तिनो वा बलदेवा वा वासुदेवा वा, अन्त्यकुलेषु वा प्रान्तकुलेषु वा तुच्छ० दरिद्र० भिक्षाचर० कृपण० ब्राह्मणकुलेषु वा आयाता वा आयान्ति वा आयास्यन्ति वा, कुक्षौ गर्भतया व्युत्क्रान्ता वा व्युत्क्रामन्ति वा व्युत्क्रमिष्यन्ति वा, परं नैव योन्या जन्मार्थं निष्क्रमणेन निष्क्रान्ता वा निष्क्रामन्ति वा निष्क्रमिष्यन्ति वा।

२०—अयं प्रत्यक्षः श्रमणो भगवान् महावीरः जम्बूद्वीपाख्ये द्वीपे भारते वर्षे ब्राह्मणकुण्डग्रामे नगरे

तं जीअमेअं तीअ-पचुप्पन्न-मणागयाणं सक्काणं देविंदाणं देवरायाणं, अरहंते भगवंते तहप्पगारेहिंतो अंतकुलेहिंतो पंत० तुच्छ० दरिद्द० भिक्खाग० किवण० माहणकुलेहिं तो वा तहप्पगारेसु उग्गकुलेसु वा भोगकुलेसु वा रायन्न० नाय० खत्तिय० हरिवंसकुलेसु वा, अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइ-कुल-वंसेसु जाव रज्जसिरिं कारेमाणेसु पालेमाणेसु साहराविंत्तए । तं सेयं खलु मम वि समणं भगवं महावीरं चरमतित्थयरं पुव्वतित्थयरनिद्दिट्ठं माहणकुंडग्गामाओ नयराओ उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ खत्तियकुंडग्गामे नयरे नायाणं खत्तियाणं सिद्धत्थस्स खत्तियस्स कासवगुत्तस्स भारियाए

ऋषभदत्तस्य ब्राह्मणस्य "कोडालस"गोत्रस्य भार्याया देवानन्दाया ब्राह्मण्या "जालन्धरस"गोत्रायाः कुक्षौ गर्भतया व्युत्क्रान्तः ।

२१–ततो जीतं–आचरणीय(कर्त्तव्य) मेतदतीतप्रत्युत्पन्नानागतानां शक्राणां देवेन्द्राणां देवराजानां, यदर्हन्तो भगवन्तस्तथाप्रकारेभ्योऽन्तकुलेभ्यः प्रान्तकुलेभ्यस्तुच्छकुलेभ्यो दरिद्रकुलेभ्यो भिक्षाचरकुलेभ्यः कृपणकुलेभ्यो ब्राह्मणकुलेभ्यस्तथाप्रकारेषु उग्रकुलेषु वा भोगकुलेषु वा राजन्य० ज्ञात० क्षत्रिय० हरिवंशकुलेषु वा, अन्यतरेषु वा तथाप्रकारेषु विशुद्धजाति–कुल–वंशेषु यावद्राज्यश्रियं कुर्वत्सु पालयत्सु च 'संहर्त्तुं' मोचयितुं। ततः श्रेयः × खलु ममाप्येतत्–यच्छ्रमणं भगवन्तं महावीरं चरमतीर्थकरं पूर्वतीर्थकरनिर्दिष्टं ब्राह्मणकुण्डग्रामान्नगरात् ऋषभदत्तस्य ब्राह्मणस्य "कोडालस"गोत्रस्य भार्याया देवानन्दाया ब्राह्मण्याः "जालन्धरस"गोत्रायाः कुक्षितः

× नाग्नेयोऽशुभोऽतितिग्मो वा, नेन्द्रवेदेयमश्रेयत्वादिविशेषणविशिष्टताऽत्र तर्हि वाच्यमभूत् "तमसेयं खलु ममे"ति सूत्रकारैरिन्द्रेणापि चात्र ।

तिसलाए खत्तियाणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहराविक्तए। जे वि य णं से तिसलाए खत्तियाणीए गब्भे, तं पि य णं देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए साहराविक्तए त्ति कट्टु एवं संपेहेइ, एवं संपेहित्ता हरिणेगमेसिं पायत्ताणि-याहिवई देवं सद्दावेइ, सद्दावित्ता एवं वयासी ॥ २१ ॥

एवं खलु देवाणुप्पिया! न एअं भूअं न एअं भव्वं न एअं भविस्सं, जं णं अरहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा, अंत० पंत० किवण० दरिद्द० तुच्छ० भिक्खागकुलेसु वा आयाइंसु वा ३०। एवं खलु अरहंता वा चक्क० बल० वासुदेवा वा उग्गकुलेसु वा

क्षत्रियकुण्डग्रामे नगरे 'ज्ञातानां' श्रीनाभेयजिनवंशोद्भवानां क्षत्रियाणां मध्ये सिद्धार्थस्य क्षत्रियस्य काश्यप-गोत्रस्य भार्यायास्त्रिशलायाः क्षत्रियाण्या "वाशिष्ठस"गोत्रायाः कुक्षौ गर्भतया—गर्भनालेन संयोज्य गर्भा-धानतया 'संहर्त्तुं' स्थापयितुं+। योऽपि च तस्यास्त्रिशलायाः क्षत्रियाण्या गर्भः पुत्रीरूपस्तमपि च देवानन्दाया ब्राह्मण्या "जालन्धरस"गोत्रायाः कुक्षौ गर्भतया संहर्त्तुं, इति कृत्वा एवं 'सम्प्रेक्षते' पर्यालोचयति, सम्प्रेक्ष्य हरिणैगमेषीनामकं पादात्यनीकाधिपतिं देवं 'शब्दयति' आकारयति, शब्दयित्वा एवं अवादीत्—

२२—एवं खलु देवानुप्रिय? नैतद्भूतं नैतद्भवति नैतद्भविष्यति, यदर्हन्तो वा चक्रवर्त्तिनो वा बलदेवा वासुदेवा वा अन्त्य० प्रान्त० कृपण० दरिद्र० तुच्छ० भिक्षाचरकुलेषु वा आयाता वा आयान्ति वा आयास्यन्ति वा।

+ सत्यपि "गर्भस्य-श्रीवर्द्धमानरूपस्य हरणं-त्रिशलाकुक्षौ सङ्क्रामणं" इति स्वपूर्वजोक्तेः स्वस्यापि च "मोचनार्थकेन संहरणेनान्वयः श्रेयः शब्दस्य" इत्यनेन कल्पसुबोधिकाटिप्पणीवाक्येन संहरणशब्दस्य मोचनार्थकत्वस्वीकृतेः सङ्क्रमापहारयोर्भिन्नार्थतामुक्त्वाऽपहारस्याकल्याणकाशुभतया प्रथनं वक्तुः पृथुस्थूलबुद्धेरेवानुमापकम्। न व्यभिचरन्ति वस्तुस्थानादिकानि कल्याणकत्वं इति तु सुप्रतीतमेव।

भोग० राइन्न० नाय० खत्तिय० इक्खाग० हरिवंसकुलेसु वा, अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइकुलवंसेसु आयाइंसु वा० ३ ॥ २२ ॥

अत्थि पुण एसे वि भावे लोगऽच्छेरयभूए अणंताहिं उस्सप्पिणीओसप्पिणीहिं विइक्कंताहिं समुप्पज्जति, नाम गुत्तस्स वा कम्मस्स

एवं खलु अर्हन्तो वा चक्रवर्त्तिनो वा वल० वासु० उग्रकुलेषु वा भोग० राजन्य० ज्ञात० क्षत्रिय० इक्ष्वाकु० हरिवंशकुलेषु वा, अन्यतरेषु वा तथा प्रकारेषु विशुद्धजातिकुलवंशेषु आयाता वा आयान्ति वा आयास्यन्ति वा।

२३–अस्ति पुनरेषोऽपि भावो लोके आश्चर्यभूतोऽनन्ताभिरुत्सर्पिण्यवसर्पिणीभिर्व्यतिक्रान्ताभिः समुत्पद्यते, तत्रास्यामवसर्पिण्यां अत्र भरते दशाश्चर्याणीदृशानि जातानि, यदुक्तं स्थानाङ्गे–

"उवसग्ग-गब्भहरणं, इत्थीतित्थं अभाविया परिसा। कण्हस्स अवरकंका, अवयरणं चंदसूराणं ॥ १ ॥"

"हरिवंसकुलुप्पत्ती, चमरुप्पाओ अ अट्ठसयसिद्धा। अस्संजयाण पूआ, दसवि अणंतेण कालेण ॥ २ ॥"

व्याख्या—'उपसर्गा' उपद्रवाः, ते हि श्रीवीरजिनस्याग्रे वक्ष्यमाणाश्छद्मस्थकाले त्वनेकेऽभूवन्, परं केवलिकालेऽपि प्रशमिताखिलोपद्रवस्यापि स्वशिष्याभासेन गोशालेनापि* कृत उपसर्गस्तदाश्चर्यम् १।

* स चैवं-ग्रामानुग्रामं विहरन्नन्यदा श्रीवीरः श्रावस्त्यां समवसृतः, इतो गोशालोऽपि जने स्वस्य जिनत्वं ख्यापयंस्तत्रागतः। ततः 'श्रावस्त्यां द्वौ जिनौ स्तः' इति लोके प्रसिद्धिर्जाता, तद्विज्ञाय श्रीगौतमेन पृष्टो भगवान्-'स्वामिन्! कोऽयमन्यः स्वं जिन इति ख्यापयति लोके?'। भगवतोक्तं-गौतम! नायं जिनः, किन्तु शरवणग्रामवासी मङ्खलिनामैको मङ्खोऽभूत्, सुभद्रा तस्य भार्या। तयोः पुत्रो गोबहुलविप्रगोशालायां जातत्वात्कृतगोशालाभिधोऽस्माकमेव शिष्यीभूतोऽसत्त एव च किंचिद्बहुश्रुतीभूतो मुधा स्वं जिन इति ख्यापयति। ततः सर्वतः प्रसृतां इमां वार्त्तां श्रुत्वा रुष्टो गोशालो गोचरचर्यागतं आनन्दाख्यं भगवच्छिष्यमुवाच-रे आनन्द! एकं दृष्टान्तं शृणु, यथा–

गर्भस्य-उदर सत्त्वस्य हरणं-उदरान्तरसङ्क्रामणं गर्भहरणं, एतदपि तीर्थकरापेक्षयाऽभूतपूर्वं सद्भगवतो महावीरस्य जातं पुरन्दरादिष्टेन हरिणैगमेषिदेवेन देवानन्दाब्राह्मण्युदरात्रिशलाऽभिधानाया राजपत्न्या उदरे

केचिद्वणिजोऽर्थोपार्जनाय नानाविधक्रयाणकभृतशकटाः परदेशं गच्छन्तोऽटव्यां प्रविष्टास्तत्र जलाभावात्तृषाकुलैर्जलं गवेषयद्भिश्चत्वारि वल्मीकशिखराणि दृष्टानि, तन्मध्यादेकं स्फोटितं तैः, तस्माद्विपुलं शीतलं जलं निर्गतं, तेनापगततृषाः पयःपात्राणि भृतवन्तः। ततः 'सिद्धं नः समीहितं, अतो मा स्फोटयन्तु द्वितीयं शिखरं' इत्येकेन वृद्धेन निवारिता अपि जना द्वितीयं स्फोटितवन्तस्तस्माच्च सुवर्णं प्राप्तवन्तः, तथैव वृद्धवारिता अपि तृतीयं स्फोटितवन्तस्तस्माद्रत्नानि प्राप्य तथैव बहु वारिता अपि लोभान्धास्ते चतुर्थमपि स्फोटयामासुः। तस्माच्च विनिर्गतदृष्टिविषाहिदृष्टिपातात्सर्वेऽपि पञ्चत्वं प्राप्ताः। स हितोपदेशको वृद्धस्तु न्यायित्वादासन्नवनसुरेण स्वस्थाने मुक्तः। एवं तव धर्माचार्यो वर्द्धमानोऽपि इयत्या स्वसम्पदाऽसन्तुष्टो यथा तथा जल्पनेन मां रोषयति, तेनाऽहं स्वतपस्तेजसैनं भस्मसात्करिष्यामि, अतस्त्वं तूर्णं गत्वैनमर्थं तस्मै निवेदय, त्वां तु वृद्धवणिजमिव हितोपदेशकत्वाज्जीवन्तं रक्षिष्यामीति श्रुत्वा भीतोऽसौ मुनिर्भगवत्समीपे गत्वा सर्वं यथास्थितमुक्तवान्। ततो भगवतोक्तं-'भो आनन्द! शीघ्रं त्वं गौतमादीन् मुनीन् कथय-यदेष गोशालः समायाति, न केनाप्ययं सम्भाष्यः, सर्वेऽपीतस्ततोऽपसरन्तु'। ततस्तैस्तथा कृते गोशाल आगत्य प्रभुमवादीत्-'भोः काश्यप! किमेवं जल्पसि? त्वं यदयं गोशालो मङ्खलिपुत्र इत्यादि, स तव शिष्यस्तु मृतः, अहं तु अन्य एव, परीषहसहनसमर्थं ज्ञात्वा तच्छरीरमधिष्ठितोऽस्मि'। एवं भगवत्पराभवमसहमानौ सुनक्षत्र-सर्वानुभूतिनामानौ श्रमणौ मध्ये प्रत्युत्तरं कुर्वाणौ तेन तेजोलेश्यया दग्धौ स्वर्गं गतौ। ततो भगवता प्रोक्तं-'भो गोशाल! स एव त्वं, नान्यः, मुधा किमात्मानं गोपयसि?, आरक्षकेण दृष्टेऽङ्गुल्या तृणेन वाऽऽत्मानमाच्छादयंश्चौर इव न ह्येवं आत्मानं गोपयितुं शक्यः'। एवं च यथास्थिते भगवतोक्ते तेन दुरात्मना प्रभोरप्युपरि तेजोलेश्या मुक्ता, सा च प्रभुं त्रिःप्रदक्षिणीकृत्य गोशालकशरीरमेवानुप्रविष्टा, तया च दग्धदेहो विविधां पीडामनुभूय सप्तमरात्रौ मृतः स्वाकृत्ये पश्चात्तापपरत्वादच्युते कल्पे देवत्वेन समुत्पन्नः। प्रभुरपि तस्यास्तापेन षण्मासं यावल्लोहितवर्चोबाधामनुभूतवान्। ततो रेवतीश्राविकागृहात् सिंहानगारानीतेनाश्वनैमित्तिकेनौषधेन शान्तिर्जाता। तदेवं नामस्मरणमात्रेणापि प्रशमिताखिलदुःखस्य भगवतः कैवल्यावस्थायामपि यदुपसर्गस्तदाश्चर्यम् १।

सङ्क्रामणाद्, एतदप्यनन्तकालभावित्वादाश्चर्यमेवेति २।

तीर्थङ्करा हि भगवन्तः सदा पुरुषोत्तमा एव भवन्ति, परमस्यामवसर्पिण्यां मिथिलाधिपकुम्भराजस्य सुता मल्लिनाम्नी प्राग्भवे माययोपार्जितस्य स्त्रीवेदनामकर्मणस्तपसाऽर्जितस्य च तीर्थकरनामकर्मण× उदयादेकोनविंशतितमजिनत्वेनोत्पन्ना तीर्थं प्रवर्त्तितवतीत्याश्चर्यम् ३।

अभाविता पर्षत्, तीर्थकृतां हि देशना सदाऽनिष्फलैव भवति, परं श्रूयते—जृम्भिकग्रामनगराद्बहिरुत्पन्नकेवलेन भगवता श्रीवर्द्धमानेन कल्पपरिपालनायैव प्रथमसमवसरणे या देशना दत्ता, न तत्र केनापि विरतिर्गृहीता। न चैतत्तीर्थकृतः कस्यापि भूतपूर्वमितीदमाश्चर्यम् ४।

कृष्णस्य—नवमवासुदेवस्य अपरकङ्काराजधान्यां गमनमभूदेतदप्यजातपूर्वत्वादाश्चर्यम् *५।

---

× यथा मायया स्त्रीवेदं तपसा च तीर्थकरनामकर्म समुपार्जितं यथा च पूर्वभवमित्रान् प्रतिबोध्य दीक्षाग्रहणोन्मुखीकृतास्तत्सर्वं विस्तृतं चरितं मल्लिचरित्रादिभ्यः सुज्ञेयं प्रतीतं चेति नेह प्रपञ्चितम्।

* श्रूयते हि पाण्डवभार्या द्रौपदी असंयत इत्यभ्युत्थानाद्यकरणाद्रुष्टस्य नारदस्य प्रयोगाद्धातकीखण्डभरतक्षेत्रापरकङ्कापुरीशेन पद्मोत्तरेण स्वमित्रदेवसामर्थ्येनापहृता, द्वारकावतीशश्च कृष्णो वासुदेवो नारदादुपलब्धवृत्तान्तः समाराधितसुस्थिताभिधानदेवदत्तमार्गः पञ्चभिः पाण्डवैस्सह द्विलक्षयोजनमानं लवणाब्धिमतिक्रम्य अपरकङ्कां गतस्तत्र तर्जितपाण्डवं पद्मोत्तरं रणे निर्जित्य द्रौपदीमानीतवान्। ततः पश्चाद्गलमानेन कृष्णेन पूरितं पाञ्चजन्यं शङ्खं श्रुत्वा कपिलवासुदेवो तत्रत्यान्मुनिसुव्रतजिनात्कृष्णवासुदेवागमनवार्त्तामुपलभ्य सबहुमानं कृष्णदर्शनार्थमागतो जलधितीरे, कृष्णश्च तदा समुद्रमुल्लङ्घयति, ततस्तेन पाञ्चजन्यः पूरितः, कृष्णेनापि तथैव, परस्परं शङ्खशब्दौ मिलितौ, ततः कृष्णस्यापरकङ्कागमनादिकं सर्वमिदमाश्चर्यम् ५॥

चन्द्रसूर्ययोरवतरणं–यत्कौशाम्ब्यां श्रीवीरजिनस्य वन्दनार्थं चन्द्रसूर्यौ मूलविमानेनागतौ तदप्याश्चर्यमेव ६। हरेः–पुरुषविशेषस्य वंशः–पुत्रपौत्रादिपरम्परा हरिवंशस्तल्लक्षणं यत्कुलं,तस्योत्पत्तिर्हरिवंशकुलोत्पत्तिः×७। चमरस्य–असुरकुमारेन्द्रस्य उत्पातः–ऊर्ध्वगमनं चमरोत्पातः* ८। एकस्मिन् समयेऽष्टाधिकशतमिता उत्कृष्टावगाहनावन्तो न सिध्यन्ति, ते चास्यामवसर्पिण्यां सिद्धाः,

× सा चैवं–कौशाम्ब्यां नगर्यां सुमुखेन राज्ञा वीरकशालापतिभार्या वनमालानाम्नी सुरूपेति स्वान्तःपुरे क्षिप्ता। स च शालापतिस्तस्या वियोगेन ग्रथिलो जातः, यं कञ्चन पश्यति तं 'वनमाला वनमाले'ति कथयति। एवं च कौतुकाक्षिप्तैरनेकैर्जनैः परिवृतः स पुरे भ्रमन् वनमालया समं क्रीडता नृपेण दृष्टः। ततो'ऽस्माभिरनुचितं कृत'मिति चिन्तयन्तौ तौ दम्पती तत्क्षणादेव विद्युत्पातेन मृतौ हरिवर्षक्षेत्रे युगलिकत्वेनोत्पन्नौ। शालापतिश्च तौ मृतौ श्रुत्वा 'आः पापिनोः पापं लग्न'मिति सावधानो भूत्वा वैराग्यात्तपस्तप्त्वा व्यन्तरो जातः। विभङ्गज्ञानेन च तौ दृष्ट्वा चिन्तितवान्–'अहो!! इमौ मद्वैरिणौ युगलसुखमनुभूय देवौ भविष्यतस्तत इमौ दुर्गतौ पातयामी'ति विचिन्त्य स्वसामर्थ्यात्संक्षिप्तदेहायुषौ ताविहानीतवान्। आनीय च चम्पायां राज्यं दत्त्वा सप्तापि व्यसनानि शिक्षितौ, तथाभूतौ च तौ नरकं गतौ। अत्र युगलिकस्येहाऽऽनयनं देहायुःसंक्षेपणं नरकगमनं चेति सर्वमजातपूर्वत्वादाश्चर्यम् ७॥

* स चैवं–विभेलकसन्निवेशवास्तव्यः पूरणनामा गाथापतिर्वैराग्यात्तापसो जातः, द्वादशवर्षं यावदज्ञानतपः कृत्वा शुभध्यानेन मृतश्चमरेन्द्रत्वेनोत्पन्नः, स च नवीनत्वात् शिरस्थं सौधर्मेन्द्रं विलोक्य क्रोधारुणः परिघं गृहीत्वा छद्मस्थभावे विहरन्तं श्रीवीरं शरणीकृत्य सौधर्मेन्द्रात्मरक्षकांस्त्रासयन् सौधर्मावतंसकविमानवेदिकान्यस्तपादः सौधर्मेन्द्रमाक्रोशयामास। ततः क्रुद्धेन शक्रेण तं प्रति स्फुरत्तेजोवज्रं प्रमुक्तं, तेन भीतः सः प्रतिनिवृत्त्य भगवत्पादयोर्निलीनः। शक्रोऽप्यवधिनाऽवगतस्वरूपस्तीर्थकृदाशातनाभयात्सहसाऽऽगत्य चतुरङ्गुलाप्राप्तं वज्रमुपसंजहार बभाण च–मुक्तोऽस्यहो! भगवतः प्रसादात्, नास्ति मत्तस्ते भयं। एवं चमरस्योर्ध्वगमनमभूतपूर्वत्वादाश्चर्यम् ८

अक्खीणस्स अवेइअस्स अणिज्जिण्णस्स उदएणं, जण्णं अरहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा अंतकुलेसु वा पंतकुलेसु वा

ते चामी—"वृषभो वृषभस्य सुताः, भरतेन विवर्जिता नवनवतिः। अष्टौ भरतस्य सुताः, शिवङ्गता एकसमयेन ॥१॥"

इदमप्यनन्तकालजातत्वादाश्चर्यम् ९।

असंयता—असंयमवन्त आरम्भपरिग्रहप्रसक्ता अब्रह्मचारिणस्तेषां 'पूजा' सत्कारः, सर्वदा हि किल संयता एव पूज्यन्ते, अस्यां त्ववसर्पिण्यां नवमदशमजिनयोरन्तरे असंयतानामपि विप्रादीनां पूजा प्रवृत्तेत्येतदाश्चर्यम् १०।

इमानि दशाप्याश्चर्याणि अनन्तकालातिक्रमेऽस्यामवसर्पिण्यां जातानि, अत एवैषा हुण्डाऽवसर्पिणीत्युच्यते। एवमेव कालसाम्यादन्येष्वपि चतुर्षु भरतेषु पञ्चसु ऐरवतेषु च प्रकारान्तरेण दशाश्चर्याणि ज्ञातव्यानि।

अथ दशानामप्याश्चर्याणां तीर्थव्यक्तिः—अष्टाधिकशतसिद्धिगमनं श्रीऋषभजिनतीर्थे १, असंयतपूजा सुविधिजिनतीर्थे २, हरिवंशकुलोत्पत्तिः शीतलजिनतीर्थे ३, स्त्रीतीर्थं मल्लिजिनतीर्थे ४, कृष्णवासुदेवस्यापरकङ्कागमनं नेमिजिनतीर्थे ५, शेषाणि (उपसर्ग—गर्भहरण—अभावितपर्षत्—चमरोत्पात—चन्द्रसूर्यावतरणरूपाणि) पञ्चाश्चर्याणि श्रीवीरजिनतीर्थे।

तत इदमप्याश्चर्यं, केन हेतुना?, नाम्ना गोत्रस्य, नाम्नो गोत्रस्य वा कर्मणो 'अक्षीणस्य' कालस्थित्याऽसमासस्य 'अवेदितस्य' रसपरिभोगेनाननुभूतस्य 'अनिर्जीर्णस्य' जीवप्रदेशेभ्योऽपृथग्भूतस्योदयेनेदृशं वस्तु जायते, यदर्हन्तो वा चक्रवर्त्तिनो वा बलदेवा वा वासुदेवा वाऽन्त्यकुलेषु वा प्रान्तकुलेषु वा तुच्छकुलेषु वा कृपणकुलेषु वा दरिद्रकुलेषु वा भिक्षाचरकुलेषु वा आगता अतीतकाले आगच्छन्ति वर्त्तमानकाले आगमिष्यन्त्यनागतकाले, कुक्षौ

तुच्छ० किवण० दरिद्द० भिक्खागकुलेसु वा आयाइंसु वा आयाइंति वा आयाइस्संति वा, कुच्छिंसि गब्भत्ताए वक्कमिंसु वा वक्कमंति वा वक्कमिस्संति वा, नो चेव णं जोणीजम्मणनिक्खमणेणं निक्खमिंसु वा निक्खमंति वा निक्खमिस्संति वा ॥ २३ ॥

अयं च णं समणे भगवं महावीरे जंबुद्दीवे दीवे भारहे वासे माहणकुंडग्गामे नयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंते ॥ २४ ॥

---

गर्भतया 'व्युत्क्रान्ता' उत्पन्ना वा 'व्युत्क्रामन्ति' उत्पद्यन्ते वा 'व्युत्क्रमिष्यन्ति' उत्पत्स्यन्ते वा, परं नैव योन्या जन्मार्थं निष्क्रमणेन कृत्वा निष्क्रान्ता वा निष्क्रामन्ति वा निष्क्रमिष्यन्ति वा ।

२४–अयं च प्रत्यक्षः श्रमणो भगवान् महावीरो जम्बूद्वीपाख्ये द्वीपे भारते वर्षे ब्राह्मणकुण्डग्रामे नगरे ऋषभदत्तस्य ब्राह्मणस्य "कोडालस"गोत्रस्य भार्याया देवानन्दाया ब्राह्मण्या "जालन्धरस"गोत्रायाः कुक्षौ गर्भतया 'व्युत्क्रान्त' उत्पन्नस्तच्च गोत्रकर्म भगवता स्थूलसप्तविंशतिभवापेक्षया तृतीयभवे बद्धं, ते च भवा इमे–

"ग्रामेश[1]स्त्रिदशो[2] मरीचि[3]रमरः[4] षोढा परिव्राट्सुरः[16], संसारो बहु[(1)] विश्वभूति[17]रमरो[18] नारायणो[19] नारकः[20] ।"

"सिंहो[21] नेरयिको[22] भवेषु[(2)] बहुशश्चक्री[23] सुरो[24] नन्दनः[25], श्रीपुष्पोत्तरनिर्जरो[26]ऽवतु भवाद्वीरस्त्रिलोकीगुरुः[27] ॥ १ ॥" ×

---

× विस्तृतवर्णनं त्वेवं–प्रथमे भवे पश्चिममहाविदेहे नयसाराभिधो ग्रामपतिः, स चान्यदा काष्ठनिमित्तं वनं गतस्तत्र मध्याह्न भोजनावसरे समागतान् सार्थभ्रष्टान् क्षुत्तृड्बाधिततनून् मुनीन् विलोक्य हृष्टोऽहो मे भाग्यं ! ! यदस्मिन्समयेऽत्राटव्यां अतिथिसमागम इति रोमाञ्चिततनुरतिप्रमोदेन साधूनाहूय शुद्धाहारादिना प्रत्यलाभयत्, भोजनानन्तरं साधून्नत्वा उवाच–चलन्तु महाभागाः !

मार्गं दर्शयामि, मार्गे चलद्भिरेव साधुभिर्योग्योऽयमिति ज्ञात्वा देशनया शुद्धदेवगुरुधर्मस्वरूपं ज्ञापयित्वा सम्यक्त्वं प्रापितः, स चात्मानं धन्यं मन्यानः निजं स्थानं गतः, प्रान्ते च पञ्चनमस्कृतिस्मृतिपूर्वं मृत्वा द्वितीये भवे प्रथमे कल्पे पल्योपमायुर्देवो जातः २।

ततश्च्युतस्तृतीये भवे मरीचिनामा भरतसुतो जातस्तत्र प्राप्तवैराग्यो नाभेयजिनान्तिके प्रव्रजितोऽधीता चैकादशाङ्गी स्थविरान्तिके, कदाचिद्ग्रीष्मे तापादिपीडितः संयमाद्भग्नमनोऽचिन्तयत्—अतिदुष्करोऽयं संयमभारः, न निर्वोढुं शक्यते मया, गृहे गमनं तु सर्वथाऽनुचितं इति चिन्तापरः स्वं स्वरूपं प्रकटयन्नेवैतत्कुलिंगं कल्पितवान्, तद्यथा—श्रमणास्त्रिदण्डविरता अहं न तथा, अतो मे त्रिदण्डं चिह्नमस्तु, श्रमणा द्रव्यभावाभ्यां मुण्डा नाहमेवमतो मे क्षुरमुण्डनं शिरसि शिखा चास्तु, श्रमणाः सर्वतः प्राणातिपातादिभ्यो विरता अहं तु न शक्नोमि तथा कर्त्तुमतो मे स्थूलेभ्यस्तेभ्यो विरतिरस्तु, शीलसुगन्धा मुनयो नाहं तथेति मे चन्दनादिना विलेपनं भवतु, विगतमोहाः श्रमणा अहं तु मोहाच्छादितमतिरिति मे छत्रमस्तु, अनुपानच्चरणाः श्रमणा मम चोपानहौ भवतां, कषायविरहितास्साधवोऽहं तु कषायकलुषितान्तःकरणोऽतो मे धातुरक्तानि वस्त्राणि भवन्तु, स्नानाद्विरताः श्रमणा अहं तु न तथा स्नातुं शक्नोमि अतः परिमितजलेन स्नानादिकमस्तु, एवं निजमत्या पारिव्राज्यं वेषं विकल्पितवान्। ततस्तं विभिन्नवेषं विलोक्य सर्वे लोका धर्मं पृच्छन्ति, तत्पुरः श्रमणधर्मं प्ररूपयति, किमिति भवताऽयं नाद्रियत इति प्रश्ने कृते श्रमणास्त्रिदण्डविरता इत्यादिकमेवोपदिशति, एवं च देशनयाऽनेकान् राजपुत्रादीनपि प्रतिबोध्य भगवते शिष्यत्वेन ददाति प्रभुणा सहैव च विहरति।

अन्यदा भगवानयोध्यायां समवसृतस्तदा वन्दनार्थमागतेन भरतेन पृष्टं—प्रभो! अस्यां पर्षदि अत्र भरतेऽस्यामेव जिनचतुर्विंशतिकायां कोऽपि भाविजिनजीवोऽस्ति ?, स्वामिनोक्तं—तव पुत्रोऽयं मरीचिरस्यामेवावसर्पिण्यां वीरनामाऽन्त्यस्तीर्थकृत् ?, वासुदेवोऽपि

चाद्यः २, विदेहे तु मूकायां राजधान्यां प्रियमित्राख्यश्चक्री ३ भविष्यतीति श्रुत्वा हर्षितो भरतो गत्वा त्रिःप्रदक्षिणीकृत्य वन्दित्वा च मरीचिमवदत्–भो मरीचे ! यावन्तो जगति लाभास्ते त्वयैव लब्धाः, यतस्त्वं तीर्थकरो वासुदेवश्चक्र्यपि च भविष्यसि, न तव पारिव्राज्यं वन्देऽहं, किन्तु भावितीर्थंकरत्वेन त्वां वन्दे, एवं स्तुत्वा नत्वा च स्वस्थानं गतो भरतः ।

"एतद्वचःसंश्रवणान्मरीचिः, समुच्छलन्वा [ इवार्थे ] मरुताऽब्धिवीचिः। चित्तोन्नतिं मंक्षु स वावहीति, त्रिर्बाहुमास्फाल्य स वावदीति ॥ [ १ ॥"

"आद्योऽहं वासुदेवानां, पिता मे चक्रवर्तिनाम् । पितामहो जिनेन्द्राणां, ममाहो !! उत्तमं कुलम् ॥ २ ॥"

"भाव्यस्म्यहं भाग्यवशादिहैव, प्रान्त्यो जिनश्चक्र्यपि वासुदेवः। कुलं ममैवोत्तममद्य सारं, स प्राप तन्नीचकुलावतारम् ॥३॥"

यतः–"जाति-लाभ-कुलै-श्वर्य–बल-रूप-तपः-श्रुतैः । कुर्वन्मदं पुनस्तानि, हीनानि लभते जनः ॥ ४ ॥"

ततो निर्वृते भगवति प्राग्वज्जनान् प्रतिबोध्य श्रमणानां शिष्यान्कुर्वंस्तैस्सह विहरति । कदाचिद्ग्लानीभूतस्य तस्य न कोऽपि वैयावृत्त्यं करोति श्रमणस्तदा सोऽचिन्तयत्–अहो !! बहुपरिचिता अपि परकीया एवैते श्रमणाः, अतः परं यदा नीरोगो भवामि तदैकं वैयावृत्त्यकरं शिष्यं करोमीति । क्रमेण नीरोगोऽभूत् । अन्यदा देशनया प्रतिबुद्धं कपिलाख्यं राजपुत्रं प्रत्युक्तं मरीचिना–भोः कपिल ! गच्छ साध्वन्तिके गृहाण श्रामण्यं । तेनोक्तं–भवद्दर्शन एव ग्रहिष्ये व्रतं । ततो 'भोः कपिल ! श्रमणास्त्रिदण्डविरता अहं तु न तथे' त्यादि सर्वं स्वरूपं मरीचिनोक्तं, तथापि स गुरुकर्मा चारित्रपराङ्मुखः प्रोवाच–किं भवद्दर्शने सर्वथा नास्त्येव धर्मः ?, ततो 'मम योग्य एवैष शिष्य' इति विचिन्त्योक्तं मरीचिना–"कविला ! इत्थंपि इहयंपि" कपिल ! अस्ति धर्मो जैनमार्गे

मम मार्गेऽपि च इति। प्रव्रजितः कपिलस्तदन्तिके। मरीचिनाऽप्यनेनोत्सूत्रभाषितेन × कोटाकोटिसागरप्रमितं संसारमुपार्जितम्।

ततोऽनालोचिततत्कर्मा चतुरशीतिलक्षपूर्वायुः प्रपाल्य मृत्वा चतुर्थे भवे पञ्चमे ब्रह्मकल्पे दशसागरोपमायुर्देवो जातः। ततश्च्युत्वा पञ्चमे भवे कोल्लाकसन्निवेशे अशीतिलक्षपूर्वायुः कौशिकनामा विप्रो जातः। प्रान्ते त्रिदण्डित्वमाश्रित्य मृतः, बहुकालं भवे भ्रान्तस्ते हि भवाः स्थूलभवमध्ये न गण्यन्ते। कल्पलताऽनुसारेण कौशिकभवादीशाने पद्मानन्दकाव्यानुसारेण च सौधर्मे कल्पे देवो जातस्तदपेक्षयाऽष्टाविंशतिभवा भवन्ति वीरस्य, परं तत्र चक्रीभवादर्वाग्वर्त्ती मनुजभवो गणनायां न गणित इति न भवाधिकत्वशङ्का। ततः षष्ठे भवे स्थूणानगर्यां द्वासप्ततिलक्षपूर्वायुः पुष्पमित्राभिधो द्विजस्त्रिदण्डीभूय सप्तमे भवे सौधर्मे कल्पे मध्यस्थितिर्देवो जातः। ततश्च्युतो अष्टमे भवे चैत्यसन्निवेशे षष्टिलक्षपूर्वायुः अग्निद्योताभिधो विप्रस्त्रिदण्डित्वं प्रपाल्य नवमे भवे ईशाने कल्पे मध्यमायुर्देवः। ततश्च्युतो दशमे भवे मन्दरसन्निवेशे षट्पञ्चाशल्लक्षपूर्वायुरग्निभूतिनामा विप्रस्त्रिदण्डित्वं प्राप्य एकादशे भवे तृतीये कल्पे मध्यस्थितिको देवः। ततश्च्युतो द्वादशे भवे श्वेताम्बीपुर्यां चतुश्चत्वारिंशल्लक्षपूर्वायुर्भारद्वाजाख्यो विप्रस्त्रिदण्डित्वं परिपाल्य मृतस्त्रयो-

---

× "यत्तु किरणावलीकारेण प्रोक्तं—कविला! 'इत्थंपि इहयंपी'ति वचनं उत्सूत्रमिश्रितमिति, तदु'त्सूत्रभाषिणां नियमादनन्तः संसार' इति स्वमतस्थापनरसिकतयेति ज्ञेयं। इदं हि तन्मतं—उत्सूत्रभाषिणस्तावन्नियमादनन्त एव संसारः स्यात्, यदि च इदं मरीचिवचनमुत्सूत्रमित्युच्यते तदा अस्यापि अनन्तः संसारः प्रसज्यते, न चासौ सम्पन्नस्तदिदं उत्सूत्रमिश्रितमिति। तच्चायुक्तं, उत्सूत्रभाषिणां अनन्त एव संसार इति नियमाभावात्, श्रीभगवत्यादिबहुग्रन्थानुसारेण उत्सूत्रभाषिशिरोमणेर्जमालिनिह्नवस्यापि परिमितभवत्वदर्शनात्। न चोत्सूत्रमिश्रत्वकथनेऽपि अस्य मरीचिवचनस्य उत्सूत्रत्वं अपगच्छति, विषमिश्रितान्नस्यापि विषत्वमेवेत्यलं प्रसंगेने"ति कल्पसुबोधिकायाम्।

दशो भवे चतुर्थे कल्पे मध्यमायुर्देवो जातः। ततश्च्युत्वा कियद्भवं भ्रान्त्वा चतुर्दशो भवे राजगृहे चतुस्त्रिंशल्लक्षपूर्वायुः स्थावराख्यो विप्रस्त्रिदण्डीभूय मृतः पञ्चदशो भवे पञ्चमे कल्पे मध्यमायुर्देवः। ततश्च्युत्वा बहुभवं परिभ्रम्य षोडशो भवे राजगृहे कोटिवर्षायुर्विश्वभूतिनामा युवराजपुत्रः, पितृव्यवञ्चनया प्राप्तवैराग्यः सम्भूतिमुनिसमीपे दीक्षां प्रपद्योग्रं तपस्तपन्मासोपवासपारणे मथुरायां भिक्षार्थं गतस्तत्रैकया धेन्वा तपःकृशत्वाद्भुवि पातितः, तद्दृष्ट्वा परिणयनार्थमागतेन पितृव्यपुत्रेण विशाखनन्दिनोपहसितः क्रुद्धस्तां गां शृङ्गाभ्यां गृहीत्वा आकाशे भ्रमयित्वा 'अनेनोग्रतपसा भवान्तरे भूयिष्ठवीर्यो भूयास'मिति निदानं कृत्वा मृतः सप्तदशो भवे सप्तमे स्वर्गे सप्तदशसागरायुर्देवः। ततश्च्युतोऽष्टादशो भवेऽत्रैव भरते पोतनपुरे स्वपुत्रीकामुकस्य प्रजापतिनृपतेः कृतपत्नीपुत्र्याः पुत्रश्चतुरशीतिलक्षवर्षायुस्त्रिपृष्ठाभिध आद्यो वासुदेवो जातः। बाल्येऽपि प्रतिवासुदेवक्षेत्रविघ्नकारिणं विशाखनन्दिजीवं सिंहं विमुक्तशस्त्रो हस्ताभ्यां विदारितवान्, क्रमशो वासुदेवत्वं प्राप्तः, एकदा शय्यापालकं प्रत्यादिष्टवान्—यदस्मासु निद्राणेषु एते गायना गीतगानान्निवारणीयास्तेन च गीतरसासक्तेन वासुदेवे निद्राणेऽपि न निवारितास्ततः क्षणाज्जागृतेन वासुदेवेन 'आः पाप! मदाज्ञापालनादपि तव गीतश्रवणं प्रियं? तर्हि लभस्व तत्फलं' इत्युक्त्वा तत्कर्णयोस्तप्तं त्रपुः प्रक्षिप्तवान्। तेनैव कर्णयोः कीलकप्रक्षेपहेतुकं कर्मोपार्जितवान्। एवं हि कृतानेकदुष्कर्मा मृत एकोनविंशो भवे सप्तमनरके नारको जातस्तत उद्धृत्य विंशो भवे सिंहो भूत्वैकविंशो भवे चतुर्थनरके नारकः। ततो निर्गत्य बहुभवं परिभ्रम्य द्वाविंशो भवे रथनूपुरे प्रियमित्रनृपनन्दनो विमलश्री(?)नामा जातः, यौवने राज्यं प्राप्तः, एकदा वने क्रीडन् पाशबद्धं मृगं मोचितवांस्तयाऽनुकम्पया भद्रकतया च मनुजायुर्बद्धं, प्रान्ते प्रव्रज्योग्रं तपस्तप्त्वा चक्रीपदं निकाच्य मासिकया संलेखनया मृतस्त्रयोविंशो भवे पश्चिमविदेहेषु मूकायां नगर्यां धनञ्जय-

॥ ३४ ॥

तं जीअमेअं तीअपच्चुप्पन्नमणागयाणं सक्काणं देविंदाणं देवराईणं, अरहंते भगवंते तहप्पगारेहिंतो अंतकुलेहिंतो पंतकुलेहिंतो

२५–यस्मादेतादृशेष्वन्त्यप्रान्तादिकुलेष्वर्हदादीनां जन्म न भवत्येव तस्मात् 'जीतं' आचरणार्हमेतदतीतप्रत्युत्पन्नानागतानां शक्राणां देवेन्द्राणां देवराजानां, यदर्हन्तो भगवन्तस्तथाप्रकारेभ्योऽन्तकुलेभ्यः प्रान्तकुलेभ्य-

नृपनन्दनश्चतुरशीतिलक्षपूर्वायुः प्रियमित्रनामा चक्रवर्त्ती जातः ×। पोट्टिलाचार्यान्तिके + प्रव्रज्य कोटिवर्षं यावद्दीक्षां प्रपाल्य मृतश्चतुर्विंशे भवे सप्तमे कल्पे सप्तदशसागरायुर्देवो जातः। ततश्च्युतः पञ्चविंशे भवे इहैव भरते छत्राग्रायां नगर्यां जितशत्रुनृपभद्रादेवीसूनुः पञ्चविंशतिलक्षवर्षायुर्नन्दनाख्यो जातः, पोट्टिलाचार्यान्तिके प्रव्रज्य वर्षलक्षं यावन्मासक्षपणैर्विंशतिस्थानान्याराध्य मासिकया संलेखनया मृतः षड्विंशे भवे दशमे प्राणते कल्पे पुष्पोत्तरप्रवरपुण्डरीकाभिधे विमाने विंशतिसागरायुर्देवो जातः। ततश्च्युत्वा मरीचिभववद्धेन भुक्तशेषेण नीचैर्गोत्रकर्मविपाकेन सप्तविंशे भवे श्रीमन्महावीरदेवो देवानन्दाया ब्राह्मण्याः कुक्षावुत्पन्नः।

× "अत्राह शिष्यः–'सुरनरेइएहिं चिय, हवंति हरि-अरिह-चक्कि-बलदेवा' इत्युक्तत्वात्कथं मनुष्यो मृत्वा चक्रवर्त्ती जातः?, तत्रोत्तरं–यथा अस्मिन् क्षेत्रे दश आश्चर्याणि जातानि तथा तस्मिन् क्षेत्रेऽपि इदमाश्चर्यमध्ये गणितमस्ति। पुनस्तत्र नागकुमारतस्तीर्थङ्करोऽपि जातोऽस्ति, तीर्थङ्करस्तु देवगतिमाश्रित्य वैमानिकदेवेभ्य एवागच्छति। पुनर्विस्तरार्थिना देवभद्रकृतं वीरचरित्रं द्रष्टव्यं" इति कल्पलतायाम् १४ पत्रे।

+ प्रव्रजितस्तु भवद्वये, परं न हि कुत्रापि भवे पोट्टिलेत्याख्याऽभूद्भगवतस्तथापि "समणे भगवं महावीरे तित्थगरभवग्गहणाओ छट्ठे पोट्टिलभवग्गहणे एगं वासकोडिं सामण्णपरियागं पाउणित्ता" इत्यादिना समवायाङ्गसूत्रे वृत्तावपि च "किल भगवान् पोट्टिलाभिधानो राजपुत्रो बभूव" तदनेन यदुक्तं पोट्टिलाभिधानं तत्प्रियमित्रचक्रिण एव नामान्तरमन्यं वा कमपि कारणमपेक्ष्योक्तं स्यादित्यभ्यूह्यं तत्त्वज्ञैः।

सूत्रं २५ इन्द्राणां जीतमर्हदादीनामुग्रादिकुलेषु संक्रामणं

तुच्छ० किविण० दरिद्द० वणीमग० जाव माहणकुलेहिंतो तहप्पगारेसु उग्गकुलेसु वा भोगकुलेसु वा राइण्ण० नायं० खत्तिय० इक्खाग० हरिवंसकुलेसु वा, अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइकुलवंसेसु वा साहरावित्तए ॥ २५ ॥

सूत्रं २६ नैगमेषिं प्रति गर्भ-संहरणादेश इन्द्रस्य

तं गच्छ णं तुमं देवाणुप्पिया! समणं भगवं महावीरं माहणकुंडग्गामाओ नयराओ उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ खत्तियकुंडग्गामे नयरे नायाणं खत्तियाणं सिद्धत्थस्स खत्तियस्स कासवगुत्तस्स भारियाए तिसलाए खत्तियाणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहराहि, जे वि अ णं से तिसलाए खत्तियाणीए गब्भे तं पि अ णं देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए साहराहि, साहरित्ता ममेअमाणत्तिअं खिप्पामेव पच्चप्पिणाहि ॥२६॥

---

स्तुच्छकुलेभ्यः कृपणकुलेभ्यो दरिद्रकुलेभ्यो वनीपक(भिक्षाचर)कुलेभ्यो यावद्ब्राह्मणकुलेभ्यस्तथाप्रकारेषु उग्रकुलेषु वा भोगकुलेषु वा राजन्यकुलेषु वा ज्ञातकुलेषु वा क्षत्रियकुलेषु वा इक्ष्वाकुकुलेषु वा हरिवंशकुलेषु वा अन्यतरेषु वा तथाप्रकारेषु विशुद्ध–जाति–कुल–वंशेषु 'साहरावित्तए'त्ति सङ्क्रामयितुम्।

२६–यस्मादिन्द्राणामेष आचारस्तस्माद्गच्छ! त्वं देवानुप्रिय हरिणैगमेषिन्! श्रमणं भगवन्तं महावीरं ब्राह्मणकुण्डग्रामान्नगरात् ऋषभदत्तस्य ब्राह्मणस्य "कोडालस"गोत्रस्य भार्याया देवानन्दाया ब्राह्मण्या "जालंधरस"गोत्रायाः कुक्षितो लात्वा क्षत्रियकुण्डग्रामे नगरे ज्ञातजातीयानां क्षत्रियाणां मध्ये सिद्धार्थस्य क्षत्रियस्य काश्यपगोत्रस्य भार्यायास्त्रिशलायाः क्षत्रियाण्या वाशिष्ठगोत्रायाः कुक्षौ गर्भतया 'संहर' सङ्क्रामय, योऽपि च तस्यास्त्रिशलायाः क्षत्रियाण्या गर्भस्तमपि च देवानन्दाया ब्राह्मण्या "जालन्धरस"गोत्रायाः कुक्षौ गर्भतया संहर, संहृत्य ममेतां 'आज्ञप्तिकां' आज्ञां क्षिप्रमेव प्रत्यर्पय–मयैतद्युष्मदुक्तं कार्यं कृतमिति शीघ्रं निवेदयेत्यर्थः।

तए णं से हरिणेगमेसी अग्गाणीयाहिवई देवे सक्केणं देविंदेणं देवरन्ना एवं वुत्ते समाणे हट्ठे, जाव हयहियए करयल जावत्ति कट्टु एवं 'जं देवो आणवेइ'त्ति आणाए विणएणं वयणं पडिसुणेइ, पडिसुणित्ता [ सक्कस्स देविंदस्स देवरन्नो अंतिआओ पडिनिक्खमइ, पडिनिक्खमित्ता ] उत्तरपुरच्छिमं दिसिभागं अवक्कमइ, अवक्कमित्ता वेउव्विअसमुग्घाएणं समोहणइ, समोहणित्ता संखिज्जाइं जोयणाइं दंडं निसिरइ, तं जहा-रयणाणं वइराणं वेरुलिआणं लोहिअक्खाणं मसारगल्लाणं हंसगब्भाणं पुलयाणं सोगंधियाणं जोईरसाणं अंजणाणं अंजण-

२७-ततः स हरिणैगमेषी अग्र्या[मुख्या]नीकाधिपतिर्देवः शक्रेण देवेन्द्रेण देवराजेन एवमुक्तः सन् हृष्टो यावन्मेघधाराहतकदम्बपुष्पवद्धर्षवशाद्विसर्पद्धृदयः करतलाभ्यां यावदञ्जलिं कृत्वैवं 'यद्देव आज्ञापयति-कथयति' इत्युक्त्वा आज्ञाया-उक्तरूपाया यद्वचनं, तद्विनयेन 'प्रतिशृणोति' कर्त्तुमभ्युपगच्छति, प्रतिश्रुत्य [ शक्रस्य० (३) अन्तिकात्प्रतिनिष्क्रामति, प्रतिनिष्क्रम्य ] उत्तरपौरस्त्यं दिग्विभागं-ईशानकोणं 'अपक्रामति' गच्छति, 'अपक्रम्य' गत्वा वैक्रियरूपकरणाय समुद्घातः-प्रयत्नविशेषस्तेन 'समुद्धन्ति' जीवप्रदेशान् देहाद्बहिर्विक्षिपति, विक्षिप्य सङ्ख्येयानि योजनानि यावद्दण्डं-दण्डाकारं शरीरबाहल्यं ऊर्ध्वाध आयतं जीवप्रदेश-कर्मपुद्गलौघं 'निस्सृजति' निष्कासयति। तत्र विविधान्विशिष्टपुद्गलानादत्ते, तद्यथा-रत्नानां ×-कर्केतनादीनां १, वज्राणां-हीरकाणां २, वैडूर्याणां ३, लोहिताक्षाणां ४, मसारगल्लानां ५, हंसगर्भाणां ६, पुलकानां-मणिविशेषाणां ७, सौगन्धिकानां ८, ज्योतीरसानां ९, अञ्जनानां-श्यामरत्नानां १०, अञ्जनपुलकानां ११,

× यद्यप्यौदारिका एव रत्नादिपुद्गला, वैक्रिय समुद्घाते च वैक्रिया एव ग्राह्या भवन्ति, तथापि तेषां रत्नादिपुद्गलानामिव सारताख्यापनार्थं रत्नानामिवेति द्रष्टव्यं, यद्वा औदारिका अपि वैक्रियत्वेन गृहीता वैक्रियपरिणता भवन्तीति ।

पुलयाणं जायरूवाणं सुभगाणं अंकाणं फलिहाणं रिट्ठाणं अहावायरे पुग्गले परिसाडेइ, परिसाडित्ता अहासुहुमे पुग्गले परिआदियइ ॥ २७ ॥

परियाइत्ता दुच्चंपि वेउव्विअसमुग्घाएणं समोहणइ, समोहणित्ता उत्तरवेउव्विअरूवं विउव्वइ, विउव्वित्ता ताए उक्किट्ठाए तुरियाए चवलाए चंडाए जइणाए उद्धुआए सिग्घाए [छेआए] दिव्वाए देवगईए वीईवयमाणे वीईवयमाणे तिरिअमसंखिज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं जेणेव जंबुद्दीवे दीवे, जेणेव भारहे वासे, जेणेव माहणकुंडग्गामे नयरे, जेणेव उसभदत्तस्स माहणस्स गिहे, जेणेव देवाणंदामाहणी, तेणेव उवागच्छइ। उवागच्छित्ता आलोए समणस्स भगवओ महावीरस्स पणामं करेइ, करित्ता देवाणंदाए माहणीए सपरिजणाए ओसो-

---

जातरूपाणां १२, सुभगानां—सौभाग्यकराणां रत्नविशेषाणां १३, अङ्कानां १४, स्फटिकानां १५, रिष्टानां—श्यामवर्णानामेव रत्नजातीयानां १६, एतेषां 'यथाबादरान्' असारान् पुद्गलान् 'परिशाटयति' त्यजति, परिशाट्य 'यथासूक्ष्मान्' सारतरान् पुद्गलान् 'पर्यादत्ते' गृह्णाति।

२८—'पर्यादाय' गृहीत्वा द्वितीयमपि वारं वैक्रियसमुद्घातेन समुद्धन्ति, समुद्धत्य उत्तरं—भवधारणीयापेक्षयाऽन्यद्वैक्रियरूपं विकुर्वति, विकुर्व्य तया—देवजनप्रसिद्धया 'उत्कृष्टया' अन्येषां गतिभ्यो मनोहरया 'त्वरितया' चित्तौत्सुक्यवत्या 'चपलया' कायचापल्यवत्या 'चण्डया' अतितीव्रया 'जयनया' अन्यगतिजयनशीलया 'उद्धूतया' समस्तदेहावयवकम्पिकया, अतः शीघ्रया [ 'छेकया' विघ्नहरणदक्षया ] 'दिव्यया' देवजनोचितया, एतादृश्या देवगत्या व्यतिव्रजन् व्यतिव्रजन् तिर्यगसङ्ख्येयानां द्वीपसमुद्राणां 'मध्यंमध्येन' मध्यभागेन भूत्वा यत्रैव जम्बूद्वीपाख्यो द्वीपः, यत्रैव भारतो वर्षः, यत्रैव ब्राह्मणकुण्डग्रामाख्यं नगरं, यत्रैव ऋषभदत्तस्य ब्राह्मणस्य गृहं, यत्रैव देवानन्दाब्राह्मणी, तत्रैवोपागच्छति। उपागत्य 'आलोके' दर्शनमात्रे

यणिं दलइ, दलित्ता असुभे पुग्गले अवहरइ, अवहरित्ता सुभे पुग्गले पक्खिवइ, पक्खिवित्ता 'अणुजाणउ मे भयवं'ति कट्टु समणं भगवं महावीरं अव्वाबाहं अव्वाबाहेणं दिव्वेणं पहावेणं करयलसंपुडे णं गिण्हइ, गिण्हित्ता जेणेव खत्तियकुंडग्गामे नयरे, जेणेव सिद्धत्थस्स खत्तियस्स गिहे, जेणेव तिसलाखत्तियाणी, तेणेव उवागच्छइ, तेणेव उवागच्छित्ता तिसलाए खत्तियाणीए सपरिजणाए ओसोवणिं दलइ, ओसोवणिं दलित्ता असुभे पुग्गले अवहरइ, अवहरित्ता सुभे पुग्गले पक्खिवइ, पक्खिवित्ता समणं भगवं महावीरं अव्वाबाहं अव्वाबाहेणं दिव्वेणं पहावेणं तिसलाए खत्तिआणीए कुच्छिंसि गब्भत्ताए साहरइ। जे वि अ णं से तिसलाए खत्तिआणीए गब्भे तं पि अ णं

श्रमणस्य भगवतो महावीरस्य प्रणामं करोति, कृत्वा देवानन्दाया ब्राह्मण्याः सपरिजनाया अवस्वापिनीं निद्रां ददाति, दत्त्वा 'अशुभान्' अशुचीन् पुद्गलान् अपहरति, अपहृत्य 'शुभान्' पवित्रान् पुद्गलान् प्रक्षिपति, प्रक्षिप्य 'अनुजानातु मह्यं भगवान्' इति 'कृत्वा' उक्त्वा श्रमणं भगवन्तं महावीरं 'अव्याबाधं पीडारहितं 'अव्याबाधेन' सुखेन दिव्येन प्रभावेण योनिद्वारतो निष्कास्य करतलसम्पुटे गृह्णाति, गृहीत्वा यत्रैव क्षत्रियकुण्डग्रामाख्यं नगरं, यत्रैव सिद्धार्थस्य क्षत्रियस्य गृहं, यत्रैव त्रिशलाक्षत्रियाणी, तत्रैवोपागच्छति, तत्रैवोपागत्य त्रिशलायाः क्षत्रियाण्याः सपरिजनाया अवस्वापिनीं निद्रां ददाति, अवस्वापिनीं दत्त्वा अशुभान्पुद्गलान् अपहरति, अपहृत्य शुभान्पुद्गलान्प्रक्षिपति, प्रक्षिप्य श्रमणं भगवन्तं महावीरं 'अव्याबाधं' पीडारहितं यथा स्यात्तथा 'अव्याबाधेन' सुखेन दिव्येन प्रभावेण त्रिशलायाः क्षत्रियाण्याः कुक्षौ गर्भाशयद्वारेण गर्भतया संहरति *—गर्भनालेन संयोज्य स्थापयति। योऽपि च तस्याः त्रिशलायाः क्षत्रियाण्या गर्भः

* अत्र गर्भाशयाद्गर्भाशये १ गर्भाशयाद्योनौ २ योनेर्गर्भाशये ३ योनेर्योनौ ४ इति भङ्गचतुष्के तृतीयो भङ्गोऽनुज्ञातो भगवत्यङ्गे।

देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए साहरइ, साहरित्ता जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगए ॥ २८ ॥

ताए उक्किट्ठाए तुरियाए चवलाए चंडाए जइणाए उद्धुआए सिग्घाए दिव्वाए देवगईए तिरिअमसंखिज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं जोअणसयसाहस्सिएहिं विग्गहेहिं उप्पयमाणे २ जेणामेव सोहम्मे कप्पे सोहम्मवडिंसए विमाणे सक्कंसि सीहासणंसि सक्के देविंदे देवराया, तेणामेव उवागच्छइ, उवागच्छित्ता सक्कस्स देविंदस्स देवरन्नो तमाणत्तिअं खिप्पामेव पच्चप्पिणइ ॥ २९ ॥

ते णं काले णं ते णं समए णं समणे भगवं महावीरे जे से वासाणं तच्चे मासे पंचमे पक्खे आसोअबहुले, तस्स णं आसोअबहुलस्स तेरसीपक्खे णं बासीइराइंदिएहिं विइक्कंतेहिं, तेसीइमस्स राइंदिअस्स अंतरा वट्टमाणे, हिआणुकंपएणं देवेणं हरिणेगमेसिणा सक्कवयण-

पुत्रिकारूपः, तमपि देवानन्दाया ब्राह्मण्या "जालन्धरस"गोत्रायाः कुक्षौ गर्भतया संहरति, संहृत्य यस्या एव दिशः सकाशात्प्रादुर्भूत–आगतस्तस्यामेव दिशि प्रतिगतः ।

२९–तया उत्कृष्टया त्वरितया चपलया चण्डया जयनया उद्धूतया शीघ्रया दिव्यया देवगत्या तिर्यगसङ्ख्येयानां द्वीपसमुद्राणां मध्यंमध्येन भूत्वा 'योजनशतसाहस्रिकैः' लक्षयोजनप्रमाणै'र्विग्रहैः' पादन्यासान्तरैः 'उत्पतन्नुत्पतन्' ऊर्ध्वमुच्छलन् यत्रैव सौधर्मे कल्पे सौधर्मावतंसके विमाने शक्राख्ये सिंहासने शक्रो देवेन्द्रो देवराजोऽस्ति, तत्रैवोपागच्छति । उपागत्य शक्रस्य देवेन्द्रस्य देवराजस्य तां–पूर्वोक्तां आज्ञप्तिकां क्षिप्रमेव प्रत्यर्पयति ।

३०–तस्मिन्काले तस्मिन्समये श्रमणो भगवान् महावीरः योऽसौ 'वर्षाणां' वर्षाकालस्य तृतीयो मासः पञ्चमः पक्ष आश्विनस्य बहुलः–कृष्णः, तस्याश्विनबहुलस्य त्रयोदश्याः 'पक्षे' दिने पाश्चात्यार्द्धरात्रौ द्व्यशीतिरात्रिन्दिवेषु व्यतिक्रान्तेषु, त्र्यशीतितमस्य रात्रिन्दिवस्य अन्तराले–रात्रिलक्षणे वर्त्तमाने सति 'हितेन'

संदिट्ठेणं माहणकुंडग्गामाओ नयराओ उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिओ खत्तिअकुंडग्गामे नयरे नायाणं खत्तियाणं सिद्धत्थस्स खत्तिअस्स कासवगुत्तस्स भारियाए तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए पुव्वरत्तावरत्तकालसमयंसि हत्थुत्तराहिं नक्खत्तेणं जोगमुवागए णं अव्वाबाहं अव्वाबाहेणं दिव्वेणं पहावेणं कुच्छिंसि गब्भत्ताए साहरिए ॥

ते णं काले णं ते णं समए णं समणे भगवं महावीरे तिन्नाणोवगए आवि होत्था, 'साहरिज्जिस्सामि'त्ति जाणइ, साहरिज्जमाणे

---

स्वस्येन्द्रस्य च हितकारिणा, तथा 'अनुकम्पकेन' भगवतो भक्तेन × देवेन हरिणैगमेषिणा शक्रवचनसन्दिष्टेन ब्राह्मणकुण्डग्रामान्नगरात् ऋषभदत्तस्य ब्राह्मणस्य "कोडालस"गोत्रस्य भार्याया देवानन्दाया ब्राह्मण्या "जालन्धरस"गोत्रायाः कुक्षितः क्षत्रियकुण्डग्रामे नगरे 'ज्ञातानां' ज्ञातजातीयानां क्षत्रियाणां मध्ये सिद्धार्थस्य क्षत्रियस्य काश्यपगोत्रस्य भार्यायास्त्रिशलायाः क्षत्रियाण्या वाशिष्ठगोत्रायाः कुक्षौ पूर्वरात्रापररात्रकालसमये–मध्यरात्राविलर्थः, हस्तोत्तरानक्षत्रेण चन्द्रस्य योगमुपागते सति अव्याबाधं यथा स्यात्तथा अव्याबाधेन दिव्येन प्रभावेण गर्भतया संहृतः–गर्भाधानतया स्थापितः ।

अत्र कविः–"दानं कुलेऽस्मिन्न जिनस्त्रिलोकी–मनीषितं पूरयते जिनोऽतः ।
सङ्केतगृह्णन् द्युपतिर्विमृश्य, जहार तं विप्रकलत्रकुक्षेः ॥ १ ॥"

३१–तस्मिन्काले तस्मिन्समये श्रमणो भगवान् महावीरस्त्रिभिर्मतिश्रुतावध्याख्यैर्ज्ञानैरुपगतः स्फुटमभवत्, अत

---

× भक्तयर्थोऽनुकम्पाशब्दः, यथा "आयरियअणुकंपाए, गच्छो अणुकंपिओ महाभागो" आचार्यानुकम्पया गच्छोऽनुकम्पितो महाभागः इत्योघनि० भा०।

न जाणइ, 'साहरिएमि'त्ति जाणइ ॥ ३१ ॥ जं रयणिं च णं समणे भगवं महावीरे देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिओ तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहरिए, तं रयणिं च णं सा देवाणंदामाहणी सयणिज्जंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एयारूवे उराले कल्लाणे सिवे धन्ने मंगल्ले सस्सिरीए चउद्दस महासुमिणे तिसलाए खत्तियाणीए[मे] हडेत्ति पासित्ता णं पडिबुद्धा, तं जहा-गयवसह० गाहा ॥ ३२ ॥

जं रयणिं च णं समणे भगवं महावीरे देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिओ तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए

---

'इतोऽहं संहरिष्ये' इति जानाति, संह्रियमाणं स्वं न जानाति, असङ्ख्यसामयिकत्वेऽपि संहरणकालस्य कर्त्तुः कौशल्यज्ञापकमिदं वाक्यं, तथा तेन प्रभोः संहरणं कृतं यथा प्रभुणा ज्ञातमप्यज्ञातमिवाभूत्, यथा च वदति कश्चित्-तथा मे कण्टकस्त्वयोद्धृतो यथा मया ज्ञात एव नेति, तथा च "साहरिज्जमाणे वि जाणइ" इत्याचाराङ्गोक्तेन विरोधोऽपि न स्यात्। संहरणभवनानन्तरं च संहृतोऽस्मीति जानाति।

३२–यस्यां च रजन्यां श्रमणो भगवान् महावीरो देवानन्दाया ब्राह्मण्या "जालन्धर"सगोत्रायाः कुक्षितस्त्रिशलायाः क्षत्रियाण्या वाशिष्ठगोत्रायाः कुक्षौ गर्भतया संहृतस्तस्यां रजन्यां सा देवानन्दा ब्राह्मणी शयनीये सुप्तजागरा "ओहीरमाणी २"त्ति ईषन्निद्रां कुर्वती इमे एतद्रूपा उदारादिविशेषणविशिष्टाश्चतुर्दशमहास्वप्नाः त्रिशलया क्षत्रियाण्या[मम] हृता इति दृष्ट्वा 'प्रतिबुद्धा' जागरिता, तद्यथा–"गयवसह" इति गाथाऽत्र वाच्या।

३३–यस्यां रजन्यां श्रमणो भगवान् महावीरो देवानन्दाया ब्राह्मण्या "जालन्धरस"गोत्रायाः कुक्षितस्त्रिशलायाः क्षत्रियाण्या वाशिष्ठगोत्रायाः कुक्षौ गर्भतया संहृतस्तस्यां रजन्यां सा त्रिशला क्षत्रियाणी तस्मिंस्ता-

सूत्रं ३१ गर्भपरावृत्तिकाले ज्ञानत्रयं, सूत्रं ३२ १४ स्वप्नाहृतास्त्रिशलयेति-मो, देवानन्दायाः

कुच्छिंसि गब्भत्ताए साहरिए, तं रयणिं च णं सा तिसलाखत्तिआणी तंसि तारिसगंसि वासघरंसि अब्भिंतरओ सचित्तकम्मे बाहिरओ दूमिअघट्ठमट्ठे विचित्तउल्लोअचिल्लिअतले मणिरयणपणासिअंधयारे, बहुसमसुविभत्तभूमिभागे पंचवन्नसरससुरहिमुक्कपुप्फपुंजोवयारकलिए कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघंतगंधुद्धुआभिरामे, सुगंधवरगंधिए गंधवट्टिभूए, तंसि तारिसगंसि सयणिज्जंसि सालिंगणवट्टिए उभओ बिब्बोअणे उभओ उन्नए मज्झे णयगंभीरे गंगापुलिणवालुआउद्दालसालिसए ओअविअखोमिअदुगुल्लपट्टपडिच्छन्ने

---

दृशे–वक्तुमशक्यस्वरूपे पुण्यवतां योग्ये 'वासगृहे' शयनमन्दिरे, किंविशिष्टे?, 'अभ्यन्तरतो' मध्यतः 'सचित्रकर्मणि' विविधचित्रे रम्ये, बाह्यतो 'दूमिते' धवलिते, घृष्टे कोमलपाषाणादिना, अतो 'मृष्टे' सुकोमले, पुनः 'विचित्रो' विविधचित्रयुत 'उल्लोच' ऊर्ध्वभागो यत्र, तथा "चिल्लिअ"त्ति देदीप्यमानस्तलो–ऽधोभागो यत्र, तस्मिन्। मणिरत्नप्रणाशितान्धकारे, 'बहु' अत्यन्तं समः सुविभक्तश्च–स्वस्तिकादिविविधरचनामनोहरो भूमिभागो यत्र, तस्मिन्, पञ्चवर्णसरससुरभिमुक्तपुष्पपुञ्जोपचारकलिते, कृष्णागुरु प्रतीतं, प्रवरं 'कुन्दुरुक्कं' चीडाख्यं गन्धद्रव्यं 'तुरुष्कं' सिल्हकाभिधानं गन्धद्रव्यं, दह्यमानो धूपो–दशाङ्गाद्यनेकविधः, एतेषां सम्बन्धी 'मघमघायमानो'ऽतिशयेन गन्धवान् 'उद्धूतः' प्रकटितो यो गन्धस्तेनाभिरामे 'सुगन्धवरगन्धिके' सुगन्ध्युत्तमचूर्णानां गन्धयुते 'गन्धवर्त्तिभूते' गन्धगुटिकाकल्पेऽतिसुगन्धे, एतादृशे वासभवने, तस्मिंस्तादृशे–वक्तुमशक्यस्वरूपे शयनीये 'सालिङ्गनवर्त्तिके' शरीरप्रमाणदीर्घगण्डोपधानसहिते, उभयतः–शिरोऽन्तपादान्तयोः "बिब्बोअणे"त्ति उच्छीर्षकयुक्ते, अत एवोभयत उन्नते, मध्ये नते गम्भीरे च, गङ्गापुलिनवालुकापादविन्याससदृशे–यथा गङ्गापुलिनवालुकायां न्यस्तः पादोऽधो व्रजति, तथाऽतिकोमलत्वात्स शयनीयोऽपीति ज्ञेयं। "ओअविअ"त्ति उपचितं–परिकर्मितं यत्

सुविरइअरयत्ताणे रत्तंसुयसंवुए सुरम्मे आईणग-रूय-बूर-नवणीय-तूल-तुल्लफासे सुगंधवरकुसुमचुन्नसयणोवयारकलिए, पुव्वरत्तावरत्त-कालसमयंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एयारूवे उराले जाव चउद्दसमहासुमिणे पासित्ता णं पडिबुद्धा, तं जहा-गय-वसह-सीह-अभिसेअ—दाम-ससि-दिणयरं झयं कुंभं । पउमसर सागर-विमाण-भवण-रयणुच्चय-सिहिं च ॥ १ ॥ ३३ ॥

तए णं सा तिसलाखत्तिआणी तप्पढमयाए तओअचउद्दंतमूसिअ-गलिअ-विपुलजलहर-हारनिकर-खीरसागर-ससंककिरण-दगरय-

---

'क्षौमिकं' अतसीमयं 'दुकूलं' वस्त्रं, तस्य यः 'पट्टो' युगलापेक्षया एकपट्टस्तेन 'प्रतिच्छन्ने' आच्छादिते—अपरिभोगावस्थायां सुविरचितरजस्त्राणे, तथा 'रक्तांशुकसंवृते' मशकगृहाख्यरक्तवस्त्रेणाच्छादिते 'सुरम्ये' अतिरमणीये, 'आजिनकं' चर्ममयं वस्त्रं 'रूतं' प्रतीतं 'बूरो' वनस्पतिविशेषः 'नवनीतं' म्रक्षणं 'तूलं' अर्करूतं, एभिस्तुल्यस्पर्शे, सुगन्धवरकुसुमचूर्णशयनोपचारकलिते—अतिसुगन्धैः पुष्पैश्चूर्णैश्च यः शयनोपचारस्तेन युक्ते, एतादृशे शयनीये पूर्वरात्रापररात्रकालसमये सुप्तजागरा अल्पनिद्रां कुर्वती इमान् एतद्रूपान् उदारान् यावच्चतुर्दशमहास्वप्नान् दृष्ट्वा 'प्रतिबुद्धा' जागरिता तद्यथा—"गयवसहे"त्यादि गाथा स्पष्टा ।

३४—ततः सा त्रिशला क्षत्रियाणी तत्प्रथमतया 'ततौजसो' महाबलवन्तश्चत्वारो दन्ता यस्येति ततौजश्चतुर्दन्तस्तं, तथा 'उच्छ्रित' उत्तुङ्गस्तथा 'गलितो' निर्जलीभूतो यो 'विपुलजलधरो' महामेघस्तथा पुञ्जीकृतो मुक्ताहारः, क्षीरसागरः शशाङ्ककिरणाः 'दकरजांसि' जलकणास्तथा 'रजतस्य' रूप्यस्य महाशैलो वैताढ्यस्तद्वत् 'पाण्डुरतरं' अतिशुभ्रं; तथा समागता—गन्धलोभेन मिलिता 'मधुकरा' भ्रमरा यत्र, तादृशं यत्सुगन्धं 'दानं' मदजलं,

रययमहासेलपंडुरतरं समागयमहुयरसुगंधदाणवासिअकपोलमूलं देवरायकुंजरं(व) वरप्पमाणं, पिच्छइ, सजलघणविपुलजलहरगज्जिअ-गंभीरचारुघोसं, इभं, सुभं, सव्वलक्खणकयंबिअं वरोरुं १ ॥ ३४ ॥

तओ पुणो धवलकमलपत्तपयराइरेगरूवप्पभं पहासमुदओवहारेहिं सव्वओ चेव दीवयंतं अइसिरिभरपिल्लणाविसप्पंतकंतसोहंत-चारुककुहं तणुसुद्धसुकुमाललोमनिद्धच्छविं थिरसुबद्धमंसलोवचिअलट्ठसुविभत्तसुंदरंगं पिच्छइ घण-वट्ट-लट्ठ-उक्किट्ठ-विसिट्ठ-तुप्पग्ग-

---

तेन 'वासितं' सुरभीकृतं 'कपोलमूलं' गण्डस्थलं यस्य, तं। 'देवराज' इन्द्रस्तस्य 'कुञ्जरो' हस्ती-ऐरावणः, तद्व-'द्वरप्रमाणं' शास्त्रोक्तदेहमानं, तथा 'सजलो' जलभृतो यो 'घनो' निविडो 'विपुलजलधरो' महामेघस्तस्य गर्जितवद्गम्भीरचारुघोषं, तथा 'शुभं' प्रशस्यं सर्वलक्षणैः 'कदम्बितं' समलङ्कृतं वरः-प्रधानः सन्नुरु-विशालं, 'इभं' हस्तिनं प्रथमे स्वप्ने प्रेक्षते। यद्यपि ऋषभमाता वृषभं वीरमाता च सिंहमाद्यस्वप्ने ददर्श, परं बहुजिनजननीभिस्तथा दृष्टत्वादत्रापि प्रथमं इभं पश्यतीत्युक्तं सूत्रकारैः।

३५-ततः पुनर्हस्तिदर्शनानन्तरं वृषभं पश्यति, कीदृशं ?, 'धवलकमलपत्रप्रकरातिरेकरूपप्रभं' श्वेतकमलपत्रेभ्योऽधिकरूपश्रियं, 'प्रभासमुदयोपहारैः' कान्तिसमूहविस्तारैः 'सर्वतो' दशापि दिशो निश्चयेन 'दीपयन्तं' शोभयन्तं, अतिशयितः 'श्रीभरः' शोभासमूहस्तस्य प्रेरणयैव 'विसर्पत्' उल्लसत् 'कान्तं' दीप्तिमत् शोभमानं 'चारु' मनोहरं ककुदं ['खूंध' इति लोके] यस्य, तं, 'तनूनि' सूक्ष्माणि 'शुद्धानि' निर्मलानि सुकुमाराणि च यानि रोमाणि, तेषां स्निग्धा, न तु रूक्षा, 'छविः' कान्तिर्यस्य, तं, 'स्थिरं' दृढं, अत एव सुबद्धं 'मांसलं' मांसयुक्तं, उपचितं-पुष्टं 'लष्टं' प्रधानं 'सुविभक्तं' यथास्थानस्थितसर्वावयवं सुन्दरमङ्गं यस्य, तं।

तिक्खसिंगं दंतं सिवं समाणसोहंतसुद्धदंतं वसहं अमियगुणमंगलमुहं २ ॥ ३५ ॥

तओ पुणो हारनिकर-खीरसागर-ससंककिरण-दगरय-रययमहासेलपंडुरंगं (ग्रं० २००) रमणिज्जपिच्छणिज्जं, थिरलट्ठपउट्ठं, वट्ट-पीवर-सुसिलिट्ठ-विसिट्ठ-तिक्खदाढा-विडंबिअमुहं, परिकम्मिअजच्चकमलकोमलपमाणसोहंतलट्ठउट्ठं, रत्तुप्पलपत्तमउअसुकुमालतालु-निल्लालियग्गजीहं, मूसागय-पवर-कणग-ताविअ-आवत्तायंत-वट्ट-तडियविमलसरिसनयणं, विसालपीवरवरोरुं, पडिपुन्नविमलखंधं, मिउ-विसय-

---

पुनः 'घने' निचिते 'वृत्ते' वर्त्तुले, लष्टात्-प्रधानादपि उत्कृष्टे-अतिप्रधाने विशिष्टे यथा स्यात्तथा "तुप्पग्गे" त्ति म्रक्षिताग्रे तीक्ष्णे शृङ्गे यस्य, तं। तथा 'दान्तं' अक्रूरं 'शिवं' निरुपद्रवं, तथा समानतया शोभमानाः 'शुद्धा' उज्ज्वला दन्ता यस्य, तं। अमितगुणवतां मङ्गलानां 'मुखं' द्वारं, एतादृशं वृषभं द्वितीयस्वप्ने प्रेक्षते २।

३६-ततः पुनर्वृषभदर्शनानन्तरं सा-त्रिशला सिंहं पश्यति, कीदृशं ?, हारनिकर-क्षीरसागर-शशाङ्क-किरण-दकरजो-रजतमहाशैलाः प्राग्व्याख्यातास्तद्वत् 'पाण्डुराङ्गं' उज्ज्वलदेहं । रमणीयतया प्रेक्षणीयं । स्थिरौ-दृढौ, अत एव 'लष्टौ' प्रधानौ प्रकोष्ठौ ('पञ्जा' इति लोके) यस्य, तं। तथा वृत्ताः पीवराः सुश्लिष्टा-अन्योऽन्यान्तररहिताः, अत एव विशिष्टास्तीक्ष्णा या दंष्ट्रास्ताभिर्'विडम्बितं' अलङ्कृतं मुखं यस्य, तं। परिकर्मितौ-संस्कारिताविव जात्यकमलवत्कोमलौ प्रमाणन्वितत्वाच्छोभमानौ लष्टौ ओष्ठौ यस्य, तं। रक्तोत्पलपत्रवन्मृदु सुकुमारं तालु, तथा 'निर्लालिता' लपलपायमाना 'अग्र्या' प्रधाना जिह्वा यस्य, तं। मूषागतं यत्प्रवरकनकं, तदपि तापितं सदावर्त्तायमानं, तदिव वृत्ते, विमलतडित्सदृशे दीप्यमाने नयने यस्य, तं। पुनर्विशालौ पीवरौ

मदुम-लक्खणपसत्थ-विच्छिन्न-केसराडोवसोहिअं, ऊसिअ-सुनिम्मिअ-सुजाय-अप्फोडिअलंगूलं, सोमं, सोमाकारं, लीलायंतं, नहयलाओ ओवयमाणं, नियगवयणमइवयंतं, पिच्छइ, सा, गाढतिक्खग्गनहं, सीहं, वयणसिरीपल्लवपत्तचारुजीहं ३ ॥ ३६ ॥

तओ पुणो पुन्नचंदवयणा, उच्चागयठाणलट्ठसंठियं, पसत्थरूवं, सुपइट्ठिअकणगकुम्मसरिसोवमाणचलणं, अच्चुन्नयपीणरइअमंसलो-

वरौ ऊरू यस्य, तं। प्रतिपूर्णविमलस्कन्धं, मृदूनां विशदानां सूक्ष्माणां लक्षणेन प्रशस्तानां विस्तीर्णानां च केसराणां आटोपेन शोभितं। 'उच्छ्रितं' उन्नतं 'सुनिर्मितं' कुण्डलीकृतं 'सुजातं' सशोभं यथा स्यात्तथा आस्फोटितं 'लाङ्गूलं' पुच्छं येन, तं। तथा 'सौम्यं' अरौद्रं 'सौम्याकारं' सुन्दराकृतिं 'लीलायन्तं' सविलासगतिं, नभस्तलाद् 'अवपतन्तं' उत्तरन्तं निजकवदनं 'अतिव्रजन्तं' अनुप्रविशन्तं प्रेक्षते सा त्रिशला। पुनः किंविशिष्टं सिंहं ?, 'गाढं' अत्यन्तं तीक्ष्णानि अग्राणि येषां, एतादृशा नखा यस्य, तं। वदनस्य 'श्रिये' शोभार्थं पल्लववत् 'प्रात्ता' प्रसारिता 'चार्वी' मनोहरा जिह्वा येन, तं। एतादृशं सिंहं तृतीये स्वप्ने प्रेक्षते ३।

३७–ततः–सिंहदर्शनानन्तरं पुनः पूर्णचन्द्रवदना, त्रिशलेति गम्यं, 'श्रियं' श्रीदेवतां पश्यतीति सम्बन्धः। किंविशिष्टां ?, उच्चो यो'ऽगः' पर्वतो हिमवान्, तत्र जातं–उच्चागजं, तथा 'लष्टं' प्रधानं यत्स्थानं कमललक्षणं ×, तत्र संस्थितां, तथा प्रशस्तरूपां, सुप्रतिष्ठितौ यौ कनकमयकूर्मौ, तयोः सदृशोपमानौ चरणौ यस्याः,

× तच्चैवंविधमस्ति–योजनशतोच्चो द्वादशकलाधिकद्विपञ्चाशदुत्तरयोजनसहस्रपृथुः स्वर्णमयो हिमवन्नामा पर्वतस्तदुपरि दशयोजनावगाढः, पञ्चशतयोजनपृथुलः, सहस्रयोजनदीर्घो, वज्रमयतलभागः, पद्महदाख्यो ह्रदः। तस्य मध्यभागे जलात्क्रोशद्वि-

वचियतणुतंबनिद्धनहं, कमलपलाससुकुमालकरचरणकोमलवरंगुलिं, कुरुविंदावत्तवट्टाणुपुव्वजंघं, निगूढजाणुं, गयवरकरसरिसपीवरोरुं,

तां। अत्युन्नतं, अत एव 'पीनं' पुष्टं यदङ्गुष्ठाद्यङ्गं, तत्रस्था "रइअ"त्ति लाक्षादिना रञ्जिता इव, 'मांसला' मांसा-

कोच्चं, योजनायामपृथुलं, नीलरत्नमयदशयोजननालं, वज्रमयमूलं, रिष्टरत्नमयकन्दं, रक्तकनकमयबाह्यपत्रं, कनकमयमध्यपत्रमेकं बृहत्कमलं। तस्मिन्कमले क्रोशद्वयायामपृथुला, एकक्रोशोच्चा, रक्तसुवर्णमयकेसराविराजिता कनकमयी कर्णिका। तस्या मध्येऽर्ध-क्रोशपृथुलं, क्रोशैकदीर्घं, किञ्चिदूनैकक्रोशोच्चं श्रीदेवीभवनं। तस्य पञ्चधनुःशतोच्चानि, तदर्धमानपृथुलानि, पूर्वदक्षिणोत्तरदिक्स्थितानि त्रीणि द्वाराणि। अथ तस्य भवनस्य मध्यभागे धनुःसार्द्धशतद्वयमिता रत्नमयी वेदिका। तदुपरि च श्रीदेवीयोग्या शय्या।

अथ तस्मान्मुख्यकमलात्परितश्च तन्मानादर्द्धमानोच्चदीर्घपृथुलानि वलयाकाराण्यष्टोत्तरशतकमलानि श्रीदेव्या आभरणभूतानि। एवं सर्वेष्वपि वलयेषु मूलकमलेनार्धार्धमानत्वं बोध्यं। इति प्रथमं वलयम्। द्वितीयवलये वायव्येशानोत्तरदिक्षु चतुःसहस्रसामानिकदेवानां चतुःसहस्रकमलानि, पूर्वदिशि चत्वारि महत्तरादेवीनां कमलानि, आग्नेय्यां गुरुस्थानीयाभ्यन्तरपर्षद्देवानां अष्टसहस्रकमलानि, दक्षिणस्यां मित्रस्थानीयमध्यमपर्षद्देवानां दशसहस्रकमलानि, नैर्ऋत्यां किङ्करस्थानीयबाह्यपर्षद्देवानां द्वादशसहस्रकमलानि, पश्चिमायां गज-तुरग-रथ-पदाति-महिष-गन्धर्व-नाट्यलक्षणसप्तानीकाधिपतीनां सप्तकमलानि। इति द्वितीयं वलयम्।

ततस्तृतीये वलये अङ्गरक्षकदेवानां षोडशसहस्रकमलानि। चतुर्थे वलये अभ्यन्तरपर्षदाभियोगिकदेवानां द्वात्रिंशल्लक्षकमलानि। पञ्चमे वलये मध्यमाभियोगिकदेवानां चत्वारिंशल्लक्षकमलानि। षष्ठे वलये बाह्याभियोगिकदेवानां अष्टचत्वारिंशल्लक्षकमलानि। सर्वसङ्ख्यया च मूलकमलेन सहैका कोटिर्विंशतिर्लक्षाः पञ्चाशत्सहस्राः शतमेकं विंशतिश्च कमलानामिति।

नाभीकररइअमेहलाजुत्त-कंत-विच्छिन्न-सोणिचक्कं, जच्चंजण-भमर-जलयपयर-उज्जुअ-सम-संहिअ-तणुअ-आइज्ज-लडह-सुकुमाल-मउअ-रमणिज्जरोमराइं, नाभीमंडल-सुंदर-विसाल-पसत्थजघणं, करयलमाइअपसत्थतिवलियमज्झं, नाणामणिकणगरयणविमलमहातवणिज्जा-

न्विता, अत एव 'उपचिताः' पुष्टा'स्तनवः' सूक्ष्माः, न तु स्थूलाः, 'ताम्राः' रक्ताः स्निग्धाश्च नखा यस्याः, तां। पुनः कमलस्य 'पलाशानि' पत्राणि, तद्वत्सुकुमारौ करचरणौ यस्याः, तथा कोमला अत एव 'वराः' प्रधाना अङ्गुलयो यस्याः तां। कुरुविन्दावर्त्त–आवर्त्तविशेषो भूषणविशेषो वा, तद्वद्वृत्तानुपूर्वे जङ्घे यस्याः, तां। पुन- 'र्निगूढजानुं' गुप्तजानुं, गजवरकरो-गजेन्द्रशुण्डा, तत्सदृशे पीवरे ऊरू (साथल इति लोके) यस्याः, तां। 'चामीकररचिता' सुवर्णघटिता या मेखला, तया युक्तं, अतः 'कान्तं' मनोहरं विस्तीर्णं च 'श्रोणिचक्रं' कटितटं यस्याः, तां। पुनर्जात्याञ्जनं–तैलादिमर्दिताञ्जनं, भ्रमराः–प्रतीताः 'जलदा' मेघास्तेषां यः 'प्रकरः' समूहस्तद्व-त्कृष्णा तथा 'ऋजुका' सरला 'समा' अविषमा 'संहिता' निरन्तरा 'तनुका' सूक्ष्मा 'आदेया' सुभगा 'लटभा' सुन्दरा, सुकुमारेभ्यः शिरीषपुष्पादिभ्योऽपि मृदुका, अत एव रमणीया रोमराजिर्यस्याः, तां। पुनर्नाभिमण्डलेन सुन्दरं विशालं प्रशस्तं च जघनं–अग्रेतनकट्यधोभागो यस्याः, तां। 'करतलमेयो' मुष्टिग्राह्यस्तथा प्रशस्ता तिस्रो वल्यो यत्रैवंविधो मध्यभाग उदरलक्षणो यस्याः, तां। पुनर्नानाप्रकारा मणयश्चन्द्रकान्ताद्याः, कनकं पीतवर्णं, रत्नानि-वैडूर्यादीनि, तथा 'विमलं' निर्मलं 'महत्' उत्तमं य'त्तपनीयं' रक्तकाञ्चनं, एतत्सत्कानि यान्याभरणान्यङ्गानां ग्रैवेयककङ्कणादीनि, भूषणान्युपाङ्गानां मुद्रिकादीनि, तैर्विरा-

भरणभूसणविराइयंगोवंगिं, हारविरायंतकुंदमालपरिणद्धजलजलिंतथणजुअलविमलकलसं, आइयपत्तिअविभूसिएणं सुभगजालुज्जलेणं मुत्ताकलावएणं, उरत्थदीणारमालविरइएणं कंठमणिसुत्तएण य, कुंडलजुअलुल्लसंतअंसोवसत्तसोभंतसप्पभेणं, सोभागुणसमुदएणं, आणणकुडुंबिएणं, कमलामलविसालरमणिज्जलोअणं, कमलपज्जलंतकरगहिअमुक्कतोयं, लीलावायकयपक्खएणं, सुविसदकसिणघणसह्लं-

जितान्यङ्गानि शिरःप्रभृतीनि उपाङ्गान्यङ्गुल्यादीनि यस्याः, तां। पुनर्हारेण–मौक्तिकादिमालया विराजत्–शोभमानं, कुन्दादिकुसुममालया 'परिणद्धं' व्याप्तं, अतो 'जाज्वल्यमानं' देदीप्यमानं यत्स्तनयुगलं, तदेव तुल्याकारतया विमलौ कलशौ यस्याः, तां। 'आहतैः' सादरैः 'प्रत्यायितै'राप्तैर्नरै'र्विभूषितेन' रचितेन, तथा 'सुभगानि' दृष्टिसुखकराणि यानि 'जालानि' मुक्तागुच्छानि, तैरुज्ज्वलेन 'मुक्ताकलापकेन' हारादिमौक्तिकसमूहेन, शोभितामिति गम्यं। उरःस्थया दीनारमालया विराजितेन कण्ठमणिसूत्रकेण–कण्ठस्थरत्नमयदवरकेण च, शोभितामिति प्राग्वत्। "कुंडलजुअलु" इत्यादौ "अंसोवसत्त" इति पदं प्राग्योज्यं। ततो'ऽसयोः' स्कन्धयो 'उपसक्तं' लग्नं यत्कुण्डलयुगलं, तस्योल्लसन्ती शोभमाना च सत्प्रभा यत्र, तथाभूतेन शोभागुणसमुदयेन 'आननस्य' मुखस्य 'कौटुम्बिकेनेव' सेवकेनेव, यथा नृपः कौटुम्बिकैः शोभते, तथा श्रीदेव्या आननमपि प्रागुक्तेन शोभागुणसमुदयेनेति भावः। पुनः कमलवद् 'अमले' निर्मले 'विशाले' विस्तीर्णे 'रमणीये' मनोहरे च लोचने यस्याः, तां। 'प्रज्वलन्तौ' दीप्यमानौ यौ करौ, ताभ्यां गृहीताभ्यां कमलाभ्यां 'मुक्तं' क्षर'त्तोयं' मकरन्दजलं यस्याः, तां। पुनर्लीलया, न तु खेदापनोदाय, दिव्यदेहे खेदस्याभावात्, वातार्थं 'कृतो' वीजितो यः 'पक्षकः' तालवृन्तं, तेन शोभितां। पुनः 'सुविशदो' सुविभक्तो, न पुनर्जटाजूटवदन्योऽन्यं मिलितः, कृष्णः, 'घनो' अवि-

यंतकेसहत्थं, पउमद्दहकमलवासिणिं सिरिं भगवइं पिच्छइ हिमवंतसेलसिहरे दिसागइंदोरुपीवरकराभिसिच्चमाणिं ४ ॥ ३७ ॥

रलः, न तु मध्ये मध्ये रिक्तः, 'श्लक्ष्णः' सूक्ष्मो, न तु शूकररोमवत्स्थूलः, लम्बायमानश्च 'केशहस्तो' वेणिर्यस्याः,
तां । पुनः पद्मद्रहस्थं यत्कमलं प्रागुक्तस्वरूपं, तत्र वासिनीं । पुनर्हिमवच्छैलशिखरे दिग्गजेन्द्रैरैरावणादिकैः
'उरुपीवरैः' दीर्घपुष्टैः 'करैः' शुण्डादण्डैरभिषिच्यमानां भगवतीं-ऐश्वर्यादियुतां श्रियं-श्रीदेवतां प्रेक्षते ४ ।

इति श्रीपर्युषणाकल्पावचूर्यन्तर्वाच्यादिविविधव्याख्यामुपजीव्य प्रवचनप्रभावकश्रीखरतरगच्छनभोनभोमणि-क्रियोद्धारक-श्रीमन्मोहन-
मुनीश्वरविनेयविनेयानुयोगाचार्य-श्रीमत्केशरमुनिजीगणिवरसंगृहीतायां कल्पार्थबोधिनीनामपर्युषणाकल्पवृत्तौ प्रमोदेंवा-
नन्दाकुक्षितस्त्रिशलाकुक्षिगर्भधारणरूपगर्भापहारकल्याणकव्यावर्णनबन्धुरं द्वितीयं व्याख्यानम् ।

ग्रं० १५२-२-० मूलं, ३३२-३-४ वृत्तिः, टि० १८९-२-४ सर्वाग्रेण ६७४-२-०, द्वयोरपि व्याख्यानयोः १६६१-३-०

नाम्ना 'मोहनलाले'ति, प्रसिद्धा जगतीतले । खरतरगणस्तम्भा, जैनशासनभूषणाः ॥ १ ॥

## ॥ इति कल्पार्थबोधिन्या द्वितीयं व्याख्यानम् ॥

तेषां प्रशिष्यपंन्यास–गणि'केशर'सन्मुनेः । शिष्यं बुद्ध्यब्धिनामानं, भद्रं तन्वन्तु तेऽन्वहम् ॥ २ ॥ युग्मम् ।

# अथ तृतीयं व्याख्यानम्-



तओ पुणो सरसकुसुममंदारदामरमणिज्जभूअं, चंपगासोग-पुन्नाग-नाग-पिअंगु-सिरीस-मुग्गरग-मल्लिआ-जाइ-जूहि-अंकोल्ल-कोज्ज-कोरिंट-पत्तदमणय-नवमालिअ-बउल-तिलय-वासंतिअ-पउमुप्पल-पाडल-कुंदाइमुत्त-सहकारसुरभिगंधि, अणुवममणोहरेणं गंधेणं दस-

३८-ततः पुनस्त्रिशला पञ्चमे स्वप्ने पुष्पमाल्यं पश्यतीति योजना, किंविशिष्टं?, 'सरसानि' सद्यस्कानि कुसुमानि येषु, एतादृशानि यानि 'मन्दारदामानि' कल्पवृक्षमाल्यानि, तै 'रमणीयभूतं' अतिमनोहरं। पुनः किंविशिष्टं?, चम्पकाशोकौ प्रतीतौ, पुन्नाग-नाग-प्रियङ्गु-शिरीषाः वृक्षविशेषाः, मुद्गरः-प्रतीतः, मल्लिका-जाति-यूथ्यो वल्लिविशेषाः प्रतीताः, अङ्कोलः-(अङ्कोटः) "कोज्ज"त्ति कुब्जः 'अघाडो' इति गुर्जरे, कोरण्टो वृक्षविशेषः, 'दमनकः' सुगन्धिवनस्पति विशेषस्तस्य पत्राणि, तथा नवमालिका-लताविशेषः, बकुलः-"मौलसरी" इति नाम्ना प्रतीतो वृक्षविशेषः, तिलकोऽपि वृक्षः, वासन्तिका लता, पद्मोत्पले-सूर्यचन्द्रविकाशिकमले, पाटलकुन्दातिमुक्ताः वृक्षविशेषाः, सहकारः प्रतीतः, एतेषां सर्वेषां पुष्पाणां सुरभिगन्धो यत्र, तं। अनुपममनोहरेण गन्धेन दशापि दिशो 'वासयत्' सुरभीकुर्वत्। तथा सर्वर्त्तुकं यत्सुरभिकुसुममाल्यं, तेन धवलं, अर्थात्षण्णामपि ऋतूनां सत्कानि कुसुमानि तत्र दामनि वर्त्तन्ते, तथा 'विलसतां' दीप्यमानानां कान्तानां च बहूनां नील-पीतादिवर्णानां या 'भक्ती' रचना, तया 'चित्रं' आश्चर्यकारि, यद्वा चित्रान्वितमिव। एतेन तत्र पुष्पदामनि

दिसाओ वि वासयंतं, सव्वोउअ-सुरभि-कुसुममल्ल-धवल-विलसंत-कंत-वहुवन्न-भत्तिचित्तं, छप्पय-महुअरि-भमरगण-गुमगुमायंत-निलिंत-गुंजंतदेसभागं, दामं पिच्छइ नहंगणतलाओ ओवयंतं ५ ॥ ३८ ॥

ससिं च गोखीर-फेण-दगरय-रययकलसपंडुरं, सुभं, हियय-नयणकंतं, पडिपुन्नं, तिमिरनिकरघणगुहिरवितिमिरकरं, पमाणपक्खंतरायलेहं, कुमुअवणविबोहगं, निसासोहगं, सुपरिमट्ठदप्पणतलोवमं, हंसपडुवन्नं, जोइसमुहमंडगं, तमरिपुं, मयणसरापूरगं, समु-

धवल एव वर्णो भूयानन्ये तु वर्णाः स्तोकस्तोकाः सन्तीत्यर्थः सूचितः। षट्पद–मधुकरी–भ्रमराणां–वर्णादिभिन्नताविशिष्टाणां यो गणः, स 'गुमगुमायमानो' मधुरं ध्वनन् 'निलीयमानः' स्थानान्तरादागत्य तत्र लयं प्राप्नुवन् 'गुञ्जन्' अव्यक्तरवं कुर्वन् यस्य देशभागेषु, वर्त्तते इति गम्यं, किमुक्तं ?, तत्पुष्पदाम सौरभ्याधिकत्वात्सर्वभागेषु भ्रमरैः सेवितमस्ति। एतादृशं 'दाम' पुष्पमाल्यं नभोऽङ्गणतलादवपत–दुत्तरत्सा त्रिशला प्रेक्षते ५।

३९–ततः सा त्रिशला षष्ठे स्वप्ने शशिनं पश्यति, किंविशिष्टं ?, गोक्षीर–फेन–दकरजो–रजतकलशवत् 'पाण्डुरं' श्वेतं 'शुभं' सौम्यं, लोकानां हृदयनयनयोश्च 'कान्तं' वल्लभं 'प्रतिपूर्णं' षोडशकलान्वितं, तिमिरनिकरेण 'घनगुहिराणां' अतिगम्भीराणां वननिकुञ्जादीनां 'वितिमिरकरं' अन्धकारनाशकं, प्रमाणपक्षयोः–वर्षादिमानकृच्छुक्लकृष्णपक्षयो'रन्त'र्मध्ये राजन्त्यो 'लेखाः' कला यस्य, तं। कुमुदानां–चन्द्रविकाशिश्वेतकमलानां ये वनास्तेषां 'विबोधकं' विकाशकं, यदुक्तम्–

"दिनकरतापव्याप–प्रपन्नमूर्च्छानि कुमुदगहनानि। उत्तस्थुरमृतदीधिति–कान्तिसुधासेकतस्त्वरितम् ॥ १ ॥"

पुन'र्निशाशोभकं' रात्रिशोभाविधायकं 'सुपरिमृष्टं' सम्यगुज्ज्वलितं यद्दर्पणतलं, 'तदुपमं' तत्तुल्यं।

हरगपूरगं, दुम्मणं जणं दइअवज्जिअं पायएहिं सोसयंतं, पुणो सोमचारुरूवं, पिच्छइ सा, गगणमंडलविसालसोमचंकम्ममाणतिलगं, रोहिणिमणहिअयवल्लहं, देवी पुन्नचंदं समुल्लसंतं ६ ॥ ३९ ॥

तओ पुणो तमपडलपरिप्फुडं चेव तेअसा पज्जलंतरूवं, रत्तासोग-पगासकिंसुअ-सुअमुह-गुंजद्धरागसरिसं, कमलवणालंकरणं,

हंसवत्पट्टवर्णं–श्वेतं, ज्योतिषां मुखमण्डकं, 'तमोरिपुं' अन्धकारशत्रुं, मदनस्य 'शरापूरमिव' तूणीरमिव, यथा धानुष्कस्तूणीरमवाप्य निश्शङ्कं हरिणादिकं विध्यति, एवं मदनोऽपि चन्द्रोदयं प्राप्य निश्शङ्कं जनान् व्याकुलीकरोति। 'समुद्रोदकपूरकं' उदधिवेलावर्द्धकं, 'दुर्मनस्कं' व्याकुलीभूतं 'दयितवर्जितं' भर्त्तृवियुक्तं जनं, विरहिणीलोकमित्यर्थः। 'पादैः' किरणैः शोषयन्तं, वियोगीदुःखदमित्यर्थः। पुनर्यः सौम्यस्सन् चारुरूपस्तं, तथा यो गगनमण्डलस्य विशालं 'चङ्क्रम्यमाणं' चलनस्वभावं तिलकं, शोभकत्वात्। रोहिण्याश्चन्द्रकान्ताया मनसश्चित्तस्य 'हितदो' हितकरो 'वल्लभः' प्रियस्तं×, पुनः समुल्लसन्तं–ज्योत्स्नया दीप्तिमन्तं, एतादृशं पूर्णचन्द्रं देवी–त्रिशला प्रेक्षते ६।

४० ततः पुनः सप्तमे स्वप्ने सूर्यं पश्यति, किंविशिष्टं ?, तमःपटलस्य 'परिस्फोटकं' नाशकं, तेजसैव प्रज्वलद्रूपं, स्वभावतस्तु सूर्यविम्बवर्त्तिनो बादरपृथ्वीकायिकाः शीतला एव, परन्त्वातापनामकर्मोदयतस्तेजसैवैते जनं व्याकुली कुर्वन्तीति बोध्यम्। पुनः किंवि० ?, रक्ताशोकः–अशोकवृक्षविशेषः, 'प्रकाशकिंशुकः' पुष्पितपलाशः, शुकमुखं गुञ्जार्द्धं च प्रतीतं, एतेषां यो 'रागो' रक्तत्वं, तत्सदृशं रक्तवर्णं। कमलवनानां 'अलङ्करणं' विकाशकं,

× सर्वनक्षत्राधिपत्वेऽपि यद्रोहिणीवल्लभ इत्युक्तं तल्लोकरूढ्या, अन्यथा रोहिणी तु नक्षत्रं, चन्द्रनक्षत्रयोः स्वामिसेवकत्वमेव शास्त्रे प्रतीतं, न तु स्त्रीभर्त्तृत्वम्।

अंकणं जोइसस्स, अंबरतलपईवं, हिमपडलगलग्गहं, गहगणोरुनायगं, रत्तिविणासं, उदयत्थमणेसु मुहुत्तसुहदंसणं, दुन्निरिक्खरूवं, रत्तिमुद्धंतदुप्पयारपमद्दणं, सीअवेगमहणं, पिच्छइ, मेरुगिरिसययपरियट्टयं, विसालं सूरं रस्सीसहस्सपयलियदित्तसोहं ७ ॥ ४० ॥

विकसितानि हि तान्यलङ्कृतानीव भान्ति। पुन'ज्योतिषस्य' ग्रहनक्षत्रादेः 'अङ्कनं' राशिसङ्क्रमणादिना लक्षणज्ञापकं, अम्बरतलप्रदीपं, हिमपटलस्य 'गलग्रहं' गलहस्तयितारं, हिमनाशकमित्यर्थः। ग्रहगणस्य 'उरुं' महान्तं नायकं, रात्रि-विनाशं, तत्कारणत्वात्। 'उदयास्तमनयोः' उदयास्तवेलयोर्मुहूर्त्तं यावत् 'सुखदर्शनं' सुखेनावलोक्यं, अन्यसमये दुर्निरीक्ष्यरूपं, रात्रौ (मकारस्यालाक्षणिकत्वात्) 'उद्धावत' उच्छृङ्खलान् 'दुष्प्रचारान्' चौरपारदारिकादीन्प्रमर्दयति यस्तं, अन्यायकारिप्रचारनिवारकमित्यर्थः। 'शीतवेगमथनं' शीतनाशकं, मेरुगिरेः सततं परिवर्त्तकं-मेरुमाश्रित्यानवरतं प्रदक्षिणया भ्रमन्तं, तथा रश्मिसहस्रेण 'प्रदलिता' विलुप्ता दीप्तानामपि चन्द्रादीनां शोभा येन, तं। एतादृशं 'विशालं' विस्तीर्णमण्डलं सूर्यं प्रेक्षते त्रिशला। अत्र सहस्रकिरणाभिधानं सूर्यस्य लोकरूढितोऽन्यथा काल-विशेषेऽधिका अपि किरणा भवन्ति तस्य, तथा चोक्तं—

"शतानि द्वादश मधौ, त्रयोदश तु माधवे।
चतुर्दश पुनर्ज्येष्ठे, नभोनभस्य(श्रा० भा०)योस्तथा ॥ १ ॥"
"पञ्चदशैव त्वाषाढे, षोडशैव तथाऽऽश्विने।
कार्त्तिके त्वेकादश च, शतान्येवं तपस्य(माघे)पि ॥ २ ॥"

| चैत्रे | वैशाखे | ज्येष्ठे | आषाढे | श्रावणे | भाद्रपदे |
|---|---|---|---|---|---|
| १२०० | १३०० | १४०० | १५०० | १४०० | १४०० |
| आश्विने | कार्त्तिके | मार्गे | पौषे | माघे | फाल्गुने |
| १६०० | ११०० | १०५० | १००० | ११०० | १०५० |

तओ पुणो जच्चकणगलट्ठिपइट्ठियं समूहनीलरत्तपीयसुक्किलसुकुमालुल्लसियमोरपिच्छकयमुद्धयं धयं, अहियसस्सिरीयं, फालिअ-संखंक-कुंद-दगरय-रययकलसपंडुरेण मत्थयत्थेण सीहेण रायमाणेण रायमाणं, भित्तुं गगणतलमंडलं चेव ववसिएणं, पिच्छइ सिवमउय-मारुयलयाहयकंपमाणं, अइप्पमाणं, जणपिच्छणिज्जरूवं ८ ॥ ४१ ॥

---

"मार्गे च दशसार्द्धानि, शतान्येवं च फाल्गुने । पौष एव परं मासि, सहस्रं किरणा रवेः ॥ ३ ॥" ७ ।

४१–ततः पुनः सा त्रिशलाऽष्टमे स्वप्ने ध्वजं पश्यति, किंविशिष्टं ध्वजं?, जात्यकनकयष्टिप्रतिष्ठितं–उत्तम-सुवर्णमयदण्डे स्थापितं, तथा समूहीभूतानि नीलरक्तपीतशुक्लानि, कृष्णनीलयोरैक्यात् पञ्चवर्णमनोहराणि, सुकुमाराणि, 'उल्लसन्ति' वातेन लहलहायमानानि यानि मयूरपिच्छानि, तैः कृता मूर्द्धजा इव–केशा इव यस्य, तं । यथा मनुष्यशिरसि वेणिर्भवति तथा तस्य ध्वजस्य शिरसि मयूरपिच्छसमूहः स्थापितोऽस्ति । पुन'रधिकसश्रीकं' अति-शोभनीयं । पुनः स्फटिकशङ्खौ प्रतीतौ, अङ्को रत्नविशेषः, कुन्दं–श्वेतपुष्पं "मोगरा" इति लोके, दकरजांसि रजतकलशश्च, एतत्समान'पाण्डुरेण' उज्ज्वलवर्णेन 'मस्तकस्थेन' ध्वजाग्रे चित्रतयाऽऽलेखितेन 'राजमानेन' सौन्दर्यातिशयतः शोभमानेन, तथा चैवोत्प्रेक्षायां, गगनतलमण्डलं भेत्तुमिव 'व्यवसितेन' कृतोद्यमेन ×, सिंहेन राजमानं । तथा 'शिवः' सौम्यः 'मृदुको' मन्दगतिर्यो मारुतस्तस्य 'लयो' मिलनं, तेन 'आहत' आन्दोलितः, तत एव कम्पमानो यः, तं । तथा 'अतिप्रमाणं' महान्तं, जनप्रेक्षणीयरूपं ध्वजं प्रेक्षते ८ ।

---

× ध्वजस्तापद्मायुवशेण कम्पते, तथा च सिंहोऽपि गगनं प्रत्युच्छलति; अत एवोत्प्रेक्ष्यते–अयं सिंहः किं गगनतलं भेत्तुं उद्यमति ? इति ।

श्रेयोमाङ्गल्यसूचके त्रिशलायाः स्वप्नचतुर्दशके कुम्भ-सरो-वर्णनम्

तओ पुणो जच्चकंचणुज्जलंतरूवं, निम्मलजलपुण्णमुत्तमं, दिप्पमाणसोहं, कमलकलावपरिरायमाणं, पडिपुण्णसव्वमंगलभेयसमागमं, पवररयणपरिरायंतकमलट्ठियं, नयनभूसणकरं, पभाऽसमाणं, सव्वओ चेव दीवयंतं, सोमलच्छीनिभेलणं, सव्वपावपरिवज्जिअं, सुभं, भासुरं, सिरिवरं, सव्वोउयसुरभिकुसुमआसत्तमल्लदामं, पिच्छइ सा रययपुण्णकलसं ९ ॥ ४२ ॥

तओ पुणरवि रविकिरणतरुणबोहियसहस्सपत्तसुरभितरपिंजरजलं, जलचर-पहकर-परिहत्थग-मच्छ-परिभुज्जमाणजलसंचयं, महंतं,

---

४२–ततः पुनर्जात्यकाञ्चनवत् उत्–प्राबल्येन ज्वलद्रूपं, निर्मलजलेन पूर्ण, अत एवोत्तमं, पुनर्दीप्यमाना शोभा यस्य, तं। कमलानां 'कलापेन' समूहेन 'परिराजमानं' शोभमानं। पुनः प्रतिपूर्णा, न तु न्यूना, एवंविधा ये सर्वे मङ्गलभेदास्तेषां समागमः–सङ्केतस्थानमिव, यथा सङ्केतकारिणो जनाः सङ्केतस्थाने प्राप्नुवन्ति, तथा तस्मिन् कलशे सर्वे मङ्गलभेदा इति भावः। पुनः प्रवररत्नैः परिराजमानं यत्कमलं, तत्र स्थितं, रत्नमयविकसितकमलोपरि स कलशो मुक्तोऽस्तीति भावः। नयनानां 'भूषणकरं' आनन्दकरं, पुनः 'प्रभाऽसमानं' कान्त्याऽसदृशं, 'सर्वतः' सर्वदिशं निश्चयेन दीपयन्तं, 'सौम्यलक्ष्म्याः' प्रशस्तसम्पदो "निभेलणं" गृहं। देश्योऽयं शब्दः। सर्वैः 'पापैः' अमङ्गलैः परिवर्जितं, शुभं, 'भासुरं' दीप्यमानं 'श्रिया' शोभया 'वरं' प्रधानं, पुनर्यस्य कण्ठे सर्वर्त्तुकानां सुरभिकुसुमानां माल्य-दाम (पुष्पमाला) 'आसक्तं' स्थापितमस्ति, एतादृशं रजतमयं जलपूर्णकलशं सा त्रिशला प्रेक्षते ९।

४३–ततः पुनरपि, प्राकृतशैल्या विशेषणस्य परनिपातात् 'तरुणो' नूतनो यो रविस्तस्य किरणैर्बोधितानि यानि 'सहस्रपत्राणि' महापद्मानि, तैः 'सुरभितरं' अतिसुगन्धितं 'पिञ्जरं' रक्तपीतं च जलं यस्य, तं। जलचराणां

उल्लंतमिव कमल-कुवलय-उप्पल-तामरस-पुंडरीयउरुसप्पमाणसिरिसमुदएणं रमणिज्जरूवसोहं, पमुइयंतभमरगण-मत्तमहुयरिगणुक्करोलिज्जमाणकमलं, कायंबग-बलाहय-चक्क-कलहंस-सारसगव्विअसउणगणमिहुणसेविज्जमाणसलिलं, पउमिणिपत्तोवलग्गजलबिंदुनिचय-चित्तं, पिच्छइ सा, हियय-नयणकंतं पउमसरं नाम सरं सररुहाभिरामं १० ॥ ४२ ॥

---

"पहकर"त्ति देश्यत्वात् समूहस्तेन "परिहत्थग"त्ति परिपूर्ण–सर्वतो व्याप्तं, तथा मत्स्यैः परिभुज्यमानो जलसञ्चयो यस्य, तं। 'महान्तं' महत्प्रमाणं। पुनः कमलानि–सूर्यविकाशीनि, कुवलयानि चन्द्रविकाशीन्यम्बुजानि, उत्पलानि–रक्तकमलानि, तामरसानि–महाम्भोजानि, पुण्डरीकाणि–श्वेताम्बुजानि, इत्यादिनानाविधकमलानां 'उरुः' विस्तीर्णः 'सर्पन्' प्रसरन् यः 'श्रीसमुदयः' शोभासमूहस्तेन 'ज्वलदिव' देदीप्यमानमिव रमणीया रूपशोभा यस्य तत्तथा, तं। 'प्रमुदितान्तराणां' प्रसन्नान्तःकरणानां भ्रमरगणानां मत्तमधुकरीगणानां च ये 'उत्कराः' समूहास्तै'रवलिह्यमानानि' आस्वाद्यमानानि कमलानि यत्र, तं। तथा कादम्बकाः–पक्षिविशेषाः, बलाहकाः–"कुंजा" इत्याख्यया मरुधरादौ प्रसिद्धाः पक्षिणः, 'चक्राः' चक्रवाकाः 'कलहंसाः' राजहंसाः 'सारसाः' दीर्घजानुपक्षिणः, इत्यादयस्तादृक्स्थानावाप्त्या गर्विता ये 'शकुनिगणाः' पक्षिगणास्तेषां 'मिथुनैः' द्वन्द्वैः सेव्यमानं सलिलं यस्य, तं। पुनः पद्मिनीपत्रोपलग्नजलबिन्दुनिचयैः 'चित्रं' मण्डितमिव, इन्द्रनीलरत्नानुकारीणि पद्मिनीपत्राणि मुक्ताफलानुकारिभिर्जलबिन्दुनिकरैरतीव शोभन्ते, तैश्च पत्रैस्तत्सरः कृतचित्रमिवाभातीति हृदयम्। पुनर्जनानां हृदयनयनयोः 'कान्तं' वल्लभं, तथा सरस्सु 'अर्हं' पूज्यं, अत एव 'अभिरामं' रम्यं, एतादृशं पद्मसरो नाम सरः प्रेक्षते सा–त्रिशला १०।

तओ पुणो चंदकिरणरासि-सरिस-सिरिवच्छसोहं, चउगमण-पवड्ढमाण-जलसंचयं, चवल-चंचलुच्चायप्पमाण-कल्लोल-लोलंततोयं, पडुपवणाहय-चलिय-चवल-पागड-तरंग-रंगंत-भंग-खोखुब्भमाण-सोभंत-निम्मलुक्कड-उम्मी-सह-संबंध-धावमाणो-नियत्त-भासुरतराभिरामं, महामगरमच्छ-तिमि-तिमिंगिल-निरुद्ध-तिलितिलिया-भिघायकप्पूरफेणपसरं, महानई-तुरियवेग-समागय-भम-गंगावत्त-गुप्पमाणुच्चलंत-

---

४४-ततः पुनश्चन्द्रकिरणानां यो 'राशिः' समूहस्तत्सदृशा श्रीर्यस्या, एवंविधा 'वक्षःशोभा' मध्यशोभा यस्य, तं। तथा चतुर्षु गमनेषु-दिङ्मार्गेषु प्रवर्द्धमानजलसञ्चयं, तथा 'चपलचञ्चलैः' अतिचपलैः 'उच्चात्मप्रमाणैः' अत्युन्नतमानैः कल्लोलै'र्लोलत्' पुनः पुनरेकीभूय पृथग्भवत्तोयं यस्य, तं। पुनः 'पटुना' अमन्देन पवनेन आहतास्सन्तश्चलिता, अतश्चपलाः प्रकटाश्च ये 'तरङ्गाः' लघुकल्लोलास्तथा 'रङ्गन्तः' इतस्ततो नृत्यन्तो ये 'भङ्गाः' सविच्छेदकल्लोलास्तथा "खोखुब्भमाण"त्ति अतिक्षुभ्यन्तो-भयभ्रान्ता इव भ्रमन्तः शोभमाना निर्मला 'उत्कटाः' दुस्सहा ये 'ऊर्मयो' महाकल्लोलास्तैः सह यः सम्बन्धो-मिलनं, तेन 'धावमानैः' तीराभिमुखं सर्पद्भिः 'अपनिवृत्तैः' पश्चाद्वलितैश्च भासुरतरोऽभिरामश्च यः, तं। पुनर्महान्तो मकरा मत्स्याश्च प्रतीताः, तिमयस्तिमिङ्गिला निरुद्धास्तिलितिलिकाश्चैते जलजन्तुभेदास्तेषां 'अभिघातेन' पुच्छाच्छोटनेन कर्प्पूरवदुज्ज्वलः फेनप्रसरो यत्र, तं। पुनर्महानदीनां-गङ्गादीनां त्वरितवेगैः-शीघ्रागमनैः 'समागत' उत्पन्नो यो गङ्गावर्त्ताख्यो 'भ्रम' आवर्त्तस्तत्र 'गुप्यत्' व्याकुलीभवदत एव 'उच्चलत्' आवर्त्तपतितत्वेनान्यत्र निर्गमावकाशाभावादूर्ध्वमुच्छलत्, 'प्रत्यवनिवृत्तं' ऊर्ध्वमुच्छल्य पुनस्तत्रैव पतितं सदावर्त्त एव भ्रमत् 'लोलं' स्वभावतश्चपलं सलिलं यत्र,

पओनियत्त-भममाण-लोल-सलिलं, पिच्छइ खीरोय-सायरं सारय-रयणिकर-सोमवयणा ११ ॥ ४४ ॥

तओ पुणो तरुणसूरमंडलसमप्पहं, दिप्पमाणसोभं, उत्तमकंचणमहामणिसमूहपवरतेयअट्ठसहस्सदिप्पंतनहप्पईवं, कणगपयरलंबमाणमुत्तासमुज्जलं, जलंतदिव्वदामं, ईहामिग-उसभ-तुरग-नर-मगर-विहग-वालग-किन्नर-रुरु-सरभ-चमर-संसत्त-कुंजर-वणलय-पउमलय-भत्तिचित्तं, गंधव्वोपवज्जमाणसंपुण्णघोसं, निच्चं सजल-घण-विउल-जलहर-गज्जिय-सद्दाणुणाइणा देवदुंदुहिमहारवेणं सयलमवि जीव-

---

एतादृशं क्षीरोदसागरं। 'शारदः' शरत्कालीनो यो 'रजनीकरः' चन्द्रस्तद्वत्सौम्यवदना—त्रिशला प्रेक्षते ११।

४५ ततः पुनस्तरुणसूर्यमण्डलसमप्रभं, दीप्यमानशोभं, उत्तमैः काञ्चनमहामणिसमूहैः प्रवरा येऽष्टाधिकसहस्राः 'तेका—स्तेया' वा—स्तम्भास्तैर्दीप्यमानं सन्नभःप्रदीपं। पुनः कनकप्रतरेषु लम्बमानाभिर्मुक्ताभिरस्समुज्ज्वलं। पुन'र्ज्वलन्ति' दीप्यमानानि 'दिव्यदामानि' देवसत्कानि पुष्पमाल्यानि (लम्बितानि) यत्र, तं। तथा 'ईहामृगाः' वृकाः, 'नाहरकाः—वरगडा' इति लोके। वृषभास्तुरगा नरा मकराश्च प्रतीताः, 'विहगाः' पक्षिणः 'व्यालकाः' सर्पाः 'किन्नरा' देवविशेषाः 'रुरवो' मृगभेदाः 'शरभा' अष्टापदाः, चमर्यो—धेनवः, संसक्ताः—श्वापदविशेषाः, 'कुञ्जरा' हस्तिनः, वनलता—अशोकलताद्याः 'पद्मलता' पद्मिन्यः, एतेषां या भक्ती—रचना, तया 'चित्रं' आश्चर्यकारि। पुनर्गान्धर्वस्य—गीतस्य उपवाद्यमानस्य—वादित्रस्य च सम्पूर्णो घोषः—शब्दो यत्र, तं। 'निच्चं' शाश्वतं, यद्वा नित्यं 'सजलो' जलभृतो 'घनो' निविडो 'विपुलो' विस्तीर्णो यो 'जलधरो' मेघस्तस्य यो गर्जितशब्दस्तस्य 'अनुनादिना' सदृशेन देवदुन्दुभिमहारवेण सकलमपि जीवलोकं पूरयन्तं। पुनः कृष्णागुरु-

लोयं पूरयंतं, कालागुरु-पवर-कुंदुरुक्क-तुरुक्क-डज्झंतधूव-वासंग-उत्तम-मघमघंत-गंधुद्धुयाभिरामं, निच्चालोयं, सेयं, सेयप्पभं, सुरवराभिरामं, पिच्छइ सा, साओवभोगं, वरविमाणपुंडरीयं १२ ॥ ४५ ॥

तओ पुणो पुलग-वेरिंदनील-सासग-कक्केयण-लोहियक्ख-मरगय-मसारगल्ल-पवाल-फलिह-सोगंधिय-हंसगब्भ-अंजण-चंदप्पहवररयणेहिं महियलपइट्ठियं गगणमंडलंतं पभासयंतं, तुंगं मेरुगिरिसन्निकासं, पिच्छइ सा रयणनिकररासिं १३ ॥ ४६ ॥

"सिहिं च" सा विउलुज्जलपिंगलमहुघय-परिसिच्चमाण-निद्धूम-धगधगाइय-जलंत-जालुज्जलाभिरामं, तरतमजोगजुत्तेहिं जालपयरेहिं

---

प्रवरकुन्दुरुक्कतुरुष्काः प्राग्वर्णितास्तथा दह्यमानो धूपो दशाङ्गादिः, 'वासाङ्गानि' सुरभीकरणोपायभूतानि द्रव्याणि, तेषामुत्तमेन मघमघायमानेन गन्धेन 'उद्धूतेन' इतस्ततः प्रसृतेन 'अभिरामं' रम्यं, पुनर्नित्यं 'आलोकः' प्रकाशो यत्र, तं। 'श्वेतं' श्वेतवर्णं अत एव श्वेतप्रभं। सुरवरैः 'अभिरामं' शोभितं, पुनः 'सातस्य' सुखस्योपभोगो यत्र, तं। ईदृशं विमानवरपुण्डरीकं प्रेक्षते सा त्रिशला १२।

४६–ततः पुनः पुलक–वज्रे–न्द्रनील–सस्यक–कर्केतन–लोहिताक्ष–मरकत–मसारगल्ल–प्रवाल–स्फटिक–सौगन्धिक–हंसगर्भ–अञ्जन–चन्द्रप्रभादिकैर्वररत्नैर्महीतले 'प्रतिष्ठितं' स्थितमपि गगनमण्डलान्तं याव'त्प्रभासयन्तं' शोभयन्तं 'तुङ्गं' उच्चैस्तरं, मेरुगिरेः 'सन्निकाशं' सदृशं रत्ननिकरराशिं प्रेक्षते सा–त्रिशला १३।

४७–"सिहिं" चेति "गयवसह" गाथाया अन्त्यपादस्य ग्रहणकं वाक्यं, अत एव 'तत' इति नोक्तं, तथा च ततः पुनः सा–त्रिशला 'विपुला' विस्तीर्णा तथोज्ज्वल–पिङ्गलेन मधु–घृतेन परिषिच्यमाना, अतो निर्धूमा "धगधगे"ति शब्दं कुर्वत्यो, 'ज्वलन्त्यो' दीप्यमाना या ज्वालास्ताभिरुज्ज्वलं, अत एवाभिरामं। एका ज्वाला उच्चा, अन्या उच्च-

अणुगुणमिय अणुप्पहणं पिच्छइ जालुज्जलणगं अंबरं व कत्थइ पयंतं अइवेगचंचलं सिहिं ॥ १४ ॥ ४७ ॥

इमे एयारिसे सुमे सोमे पियदंसणे सुरूवे सुविणे दट्ठूण सयणमज्झे पडिबुद्धा अरविंदलोयणा हरिसपुलइअंगी। एए चउदस सुमिणे, सव्वा पासेइ तित्थयरमाया। जं रयणिं वक्कमई, कुच्छिंसि महायसो अरहा ॥ १ ॥ ४८ ॥

तए णं सा तिसला खत्तियाणी इमे एयारूवे उराले चउद्दसमहासुविणे पासित्ता णं पडिबुद्धा समाणी हट्ठतुट्ठ जाव हियया, धारा-

---

तरा, अपरा उच्चनमेति तरतमयोगस्तेन युक्तैर्ज्वालाप्रकरैरन्योऽन्यं 'अनुप्रकीर्ण' अनुप्रविष्टमिवाभाति यः, तं। पुनर्ज्वालानामूर्द्ध्वज्वलनं ज्वालोज्ज्वलनकं, विभक्तिलोपे, तेन ज्वालोज्ज्वलनकेन कचित्प्रदेशे 'अम्बरं' आकाशं पचन्तमिव, अतिवेगचञ्चलं 'शिखिनं' अग्निं प्रेक्षते १४।

४८–इमानेतादृशान् 'शुभान्' कल्याणहेतून्–न त्वकल्याणहेतून्, सौम्यान्, प्रियं 'दर्शनं' स्वप्नेऽवभासो येषां, तान्, 'सुरूपान्' शोभनस्वरूपान् स्वप्नान् 'शयनमध्ये' निद्रायां दृष्ट्वा प्रतिबुद्धा सती अरविन्दलोचना त्रिशला 'हर्षपुलकिताङ्गी' प्रमोदभररोमाञ्चितगात्री, जातेति शेषः। अथ प्रसङ्गत एषां स्वप्नानां जिनगर्भावतरणकालेऽवश्यं सर्वजिनजननीविलोकनीयत्वं दर्शयन्नाह सूत्रकारः–एतांश्चतुर्दशस्वप्नान् सर्वास्तीर्थंकरमातरः पश्यन्ति, यस्यां रजन्यां महायशोऽर्हन्तः कुक्षौ 'व्युत्क्रामन्ति' गर्भतयोत्पद्यन्ते १।

४९–ततः सा त्रिशला क्षत्रियाणी इमानेतद्रूपानुदारांश्चतुर्दशमहास्वप्नान् दृष्ट्वा प्रतिबुद्धा सती हृष्टा तुष्टा यावद्धर्षपूर्णहृदया 'धाराहतं' मेघधाराभिः सिक्तं यत्कदम्बपुष्पं, तद्वत्समुच्छ्वसितरोमकूपा सती स्वप्नानां 'अव-

हयकयंबपुप्फगं पिव समूस्ससिअरोमकूवा सुविणुग्गहं करेइ। करित्ता सयणिज्जाओ अब्भुट्ठेइ। अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ। पच्चोरुहित्ता अतुरिअमचवलमसंभंताए अविलंबियाए रायहंससरिसीए गईए जेणेव सयणिज्जे जेणेव सिद्धत्थे खत्तिए तेणेव उवागच्छइ, उवागच्छित्ता सिद्धत्थं खत्तियं ताहिं इट्ठाहिं कंताहिं पियाहिं मणुन्नाहिं मणोर(मणा)माहिं उरालाहिं कल्लाणाहिं सिवाहिं धन्नाहिं मंगल्लाहिं सस्सिरीयाहिं हिययगमणिज्जाहिं हिययपल्हायणिज्जाहिं मियमहुरमंजुलाहिं गिराहिं संलवमाणी संलवमाणी पडिबोहेइ ॥४९॥

ग्रहं' स्मरणं करोति। कृत्वा च शयनीयादभ्युत्तिष्ठति। अभ्युत्थाय पादपीठात्प्रत्यवतरति। प्रत्यवतीर्य 'अत्वरितया' मानसौत्सुक्याभाववत्या 'अचपलया' कायचापल्यरहितया 'असम्भ्रान्तया' स्खलनारहितया 'अविलम्बितया' विलम्बरहितया राजहंससदृश्या गत्या, गच्छन्ती सतीतिशेषः। यत्रैव शयनीयं सिद्धार्थस्य, यत्रैव सिद्धार्थः क्षत्रियस्तत्रैवोपागच्छति। उपागत्य सिद्धार्थं क्षत्रियं 'ताभि'र्वक्ष्यमाणस्वरूपाभिः 'इष्टाभि'र्वल्लभाभिः 'कान्ताभिः' सदाऽभिलषणीयाभिः 'प्रियाभिः' अद्वेष्याभिः 'मनोज्ञाभि'र्मनोविनोदिकाभिः 'मनोरमाभिः' मनःप्रियाभिः, यद्वा मनसि 'अम्यन्ते' गम्यन्ते सदा, न कदाऽपि विस्मार्यन्ते यास्ता मनोऽमास्ताभिः, पुन'रुदाराभिः' ध्वनिवर्णोच्चारादिसुन्दराभिः 'कल्याणाभिः' आरोग्यसमृद्धिकारिकाभिः 'शिवाभि'रुपद्रवहन्त्रीभिः 'धन्याभिः' धनलम्भिकाभिः 'माङ्गल्याभिः' मङ्गलकरणे साध्वीभिः 'सश्रीकाभिः' अलङ्कारादिशोभिताभिः 'हृदयगमनीयाभिः' सुबोधत्वात्कोमलत्वाच्च हृदयं गच्छन्ति यास्ताभिः। पुनः 'हृदयप्रह्लादनीयाभिः' हृद्गतशोकाद्युच्छेदिकाभिः, पुन'र्मिताः' स्वल्पशब्दबह्वर्थाः 'मधुराः' श्रोत्रसुखावहाः 'मञ्जुलाः' सुललितवर्णमनोहरा यास्ताभिः। एतादृशीभिर्गीर्भिः 'संलपन्ती २' जल्पन्ती २ 'प्रतिबोधयति' जागरयति।

तए णं सा तिसला खत्तिआणी सिद्धत्थेणं रण्णा अब्भणुण्णाया समाणी नाणामणिकणगरयणभत्तिचित्तंसि भद्दासणंसि निसीयइ। निसीइत्ता आसत्था वीसत्था सुहासणवरगया सिद्धत्थं खत्तियं ताहिं इट्ठाहिं जाव संलवमाणी संलवमाणी एवं वयासी ॥ ५० ॥

एवं खलु अहं सामी! अज्ज तंसि तारिसगंसि सयणिज्जंसि वण्णओ, जाव पडिबुद्धा, तं जहा-"गयवसह" गाहा। तं एएसिं सामी! उरालाणं चउद्दसण्हं महासुमिणाणं के मन्ने कल्लाणे फलवित्तिविसेसे भविस्सइ ? ॥ ५१ ॥

तए णं से सिद्धत्थे राया तिसलाए खत्तियाणीए अंतिए एयमट्ठं सुच्चा निसम्म हट्ठतुट्ठचित्ते आणंदिए पीइमणे परमसोमणस्सिए

---

५०-ततः सा त्रिशला क्षत्रियाणी सिद्धार्थेन राज्ञा अभ्यनुज्ञाता सती नानामणिकनकरत्नानां 'भक्तिभी' रचनाभिः 'चित्रे' आश्चर्यकरे भद्रासने निषीदति। निषद्य 'आश्वस्ता' गतिजनितश्रमोपशमादीषत्स्वस्थत्वं प्राप्ता 'विश्वस्ता' संक्षोभाभावाद्विशेषेण स्वस्थतां प्राप्ता 'सुखासनवरं' भद्रासनं 'गता' प्राप्ता सती सिद्धार्थं क्षत्रियं ताभिरिष्टाभिर्यावत्पूर्वोक्तस्वरूपाभिर्वाणीभिः संलपन्ती २ एवमवादीत्।

५१-एवं खल्वहं स्वामिन्! अद्य तस्मिंस्तादृशके 'शयनीये' पल्यङ्के, वर्णकः प्रागुक्त एव, यावच्चतुर्दशमहास्वप्नान् दृष्ट्वा प्रतिबुद्धा, तद्यथा-"गयवसह" इत्यादि गाथोक्ताश्चतुर्दशमहास्वप्नाः। तदेतेषां स्वामिन्नुदाराणां चतुर्दशानां महास्वप्नानां 'मन्ये' इति वितर्कार्थे, अतः कः [ना]कल्याणकारिफलवृत्तिविशेषो भविष्यतीति विचारयामि?।

५२-ततः स सिद्धार्थो राजा त्रिशलायाः क्षत्रियाण्या अन्तिके एतमर्थं श्रुत्वा कर्णाभ्यां, 'निशम्य' हृदयेऽवधार्य हृष्टतुष्टचित्त आनन्दितः 'प्रीतिमनाः' प्रीतियुक्तचित्तः 'परमसौमनस्यितः' अतिसन्तुष्टमनस्त्वं प्राप्तः,

हरिसवसविसप्पमाणहियए धाराहयनीवसुरभिकुसुमचंचुमालइयरोमकूवे ते सुमिणे ओगिण्हेइ । ते सुमिणे ओगिण्हित्ता ईहं अणुपविसइ । ईहं अणुपविसित्ता अप्पणो सहाविएणं मइपुव्वएणं बुद्धिविण्णाणेणं तेसिं सुमिणाणं अत्थुग्गहं करेइ । करित्ता तिसलं खत्तियाणिं ताहिं इट्ठाहिं जाव मंगल्लाहिं मियमहुरसस्सिरीयाहिं वग्गूहिं संलवमाणे संलवमाणे एवं वयासी ॥ ५२ ॥

उराला णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, कल्लाणा णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, एवं सिवा धन्ना मंगल्ला सस्सिरीया आरुग्ग-तुट्ठि-दीहाउ-कल्लाण-(ग्रं० ३००)मंगल्ल-कारगा णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, तं जहा-अत्थलाभो देवाणुप्पिए !, भोगलाभो देवाणु-

---

हर्षवशाद्विसर्पद् हृदयः 'धाराहतो' मेघधारासिक्तो यो नीपवृक्षस्तस्य यत्सुरभिकुसुमं, तद्वत् "चंचुमालइय"त्ति देश्यत्वात्पुलकितानि रोमाणि कूपेषु यस्य, एवंविधस्सन्स्तान् स्वप्नान् 'अवगृह्णाति' चित्ते धारयति । अवगृह्य 'ईहां' सदर्थपर्यालोचनां अनुप्रविशति । ईहामनुप्रविश्य आत्मनः स्वाभाविकेन मतिपूर्वकेण बुद्धिविज्ञानेन तेषां स्वप्नानां 'अर्थावग्रहं' फलनिश्चयं करोति । तच्च कृत्वा त्रिशलां क्षत्रियाणीं ताभिरिष्टाभिर्यावन्माङ्गल्याभिर्मितमधुरसश्रीकाभिर्वाग्भिः संलपन् संलपन् एवमवादीत् ।

५३–'उदाराः' प्रशस्तास्त्वया देवानुप्रिये ! स्वप्ना दृष्टाः, 'कल्याणाः' कल्याणकारिणः, न त्वकल्याणकारिणः त्वया देवानुप्रिये ! स्वप्ना दृष्टाः, एवं 'शिवाः' उपद्रवहराः, न तु उपद्रवकाराः 'धन्याः' धनप्रापकाः माङ्गल्याः सश्रीका आरोग्यतुष्टिदीर्घायुःकल्याणमाङ्गल्यकारकास्त्वया देवानुप्रिये ! स्वप्ना दृष्टाः । अथैतेषां स्वप्नानां महिम्ना यत्फलं भविष्यति तद्दर्शनायाह–तद्यथा–अर्थस्य–हिरण्यादेर्लाभो देवानुप्रिये !, भोगानां–शब्दादीनां लाभो देवानुप्रिये !, पुत्रस्य लाभो देवानुप्रिये !, 'सौख्यस्य' चित्तनिवृत्तेर्लाभो देवानुप्रिये !, 'राज्यस्य' स्वाम्य-

प्पिए!, पुत्तलाभो देवाणुप्पिए!, सुक्खलाभो देवाणुप्पिए!, रज्जलाभो देवाणुप्पिए!, एवं खलु तुमे देवाणुप्पिए! नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणं राइंदियाणं विइक्कंताणं, अम्हं कुलकेउं, अम्हं कुलदीवं, कुलपव्वयं, कुलवडिंसयं, कुलतिलयं, कुलकित्तिकरं, कुलवित्तिकरं, कुलदिणयरं, कुलाधारं, कुलनंदिकरं, कुलजसकरं, कुलपायवं, कुलविवद्धणकरं, सुकुमालपाणिपायं, अहीणसंपुण्णपंचिंदियसरीरं, लक्खणवंजण-गुणोववेयं, माणुम्माणपमाणपडिपुण्णसुजायसव्वंगसुंदरंगं, ससिसोमाकारं, कंतं, पियदंसणं, सुरूवं दारयं पयाहिसि ॥ ५३ ॥

---

माल-सुहृ-त्कोश-राष्ट्र-दुर्ग-सैन्यरूपससाङ्गिकस्य लाभो देवानुप्रिये!, भविष्यतीति शेषः। एवं खलु त्वं देवानुप्रिये!, सप्तम्यर्थे षष्ठीत्वात् नवसु मासेषु बहुप्रतिपूर्णेषु अर्धाष्टमेषु रात्रिन्दिवेषु व्यतिक्रान्तेषु सत्सु, अस्माकं 'कुलकेतुं' कुलशोभार्थं ध्वजतुल्यं, अस्माकं कुलस्य प्रकाशकत्वात्कुलदीपं 'कुलपर्वतं' पर्वतेवापराभवनीयं स्थिरं च 'कुलावतंसकं' कुले मुकुट इव, शोभाकरत्वात् 'कुलतिलकं' कुलेऽत्युत्तमत्वेन शिरोधार्यत्वात्तिलकतुल्यं, कुलकीर्त्तिकरं-शुभाचारित्वात् 'कुलवृत्तिकरं' कुलनिर्वाहकं 'कुलदिनकरं' कुलस्य सूर्यवत्प्रकाशकं 'कुलाधारं' पृथ्वीव कुलस्याधारं, कुलस्य 'नन्दिः' वृद्धिस्तस्याः करं, कुलस्य 'यशः' सर्वदिग्व्यापिनी ख्यातिस्तस्याः करं, कुले सर्वजनाश्रयणीयत्वात्पादप इव पादपस्तं, कुलस्य 'विवर्द्धनं' सर्वतो वृद्धिस्तस्याः करं, सुकुमालपाणिपादं, अहीनानि-लक्षणोपेतानि स्वरूपेणापि सम्पूर्णानि पञ्चेन्द्रियाणि यत्र, एवंविधं शरीरं यस्य, तं। लक्षणैर्व्यञ्जनैर्गुणैश्चो'पपेतं' युक्तं। मानो-न्मान-प्रमाणैः प्रतिपूर्णं 'सुजातं' सुनिष्पन्नं सर्वाङ्गसुन्दरं अङ्गं यस्य, तं। तथा शशिवत्सौम्याकारं, कान्तं, प्रियदर्शनं, सुरूपं दारकं प्रजनिष्यसि।

से वि अ णं दारए उम्मुक्कबालभावे विन्नायपरिणयमित्ते जुव्वणगमणुपत्ते सूरे वीरे विक्कंते विच्छिन्नविउलबलवाहणे रज्जवई राया भविस्सइ। तं उराला णं तुमे देवाणुप्पिए! जाव सुमिणा दिट्ठा, दुच्चं पि तच्चं पि अणुवूहइ। तए णं सा तिसला खत्तियाणी सिद्धत्थस्स रण्णो अंतिए एयमट्ठं सुच्चा निसम्म हट्ठतुट्ठा जाव हियया करयलपरिग्गहिअं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी ॥ ५५ ॥

एवमेयं सामी! तहमेयं सामी! अवितहमेयं सामी! असंदिद्धमेयं सामी! इच्छिअमेअं सामी! पडिच्छिअमेअं सामी! इच्छिय-पडिच्छिअमेयं सामी!, सच्चे णं एसमट्ठे-से जहेयं तुब्भे वयहत्ति कट्टु ते सुमिणे सम्मं पडिच्छइ। पडिच्छित्ता सिद्धत्थेणं रण्णा

---

५४-सोऽपि च दारक उन्मुक्तबालभावः परिणतमात्र एव 'विज्ञातः' परिपक्वविज्ञानो भविष्यति, पुनर्यौवनकमनुप्राप्तः सन् शूरो-दानेऽभ्युपेतनिर्वाहे वा, वीरः-सङ्ग्रामे, विक्रान्तः-परमण्डलाक्रमणसमर्थस्तथा 'विस्तीर्णविपुले' अतिविस्तीर्णे बलवाहने यस्य, एतादृशो राज्यपती राजा भविष्यति।

५५-तस्मादुदारास्त्वया देवानुप्रिये! यावत्स्वप्ना दृष्टाः, एवं द्विरपि त्रिरपि 'अनुबृंहति' प्रशंसति। ततः सा त्रिशला क्षत्रियाणी सिद्धार्थस्य राज्ञोऽन्तिके एतमर्थं श्रुत्वा निशम्य च हृष्टा तुष्टा यावद्धर्षपूर्णहृदया करतलपरिगृहीतं दशनखं यत्रैवं शिरस्यावर्त्तं कुर्वती मस्तके अञ्जलिं कृत्वा एवमवादीत्।

५६-एवमेतत्स्वामिन्! तथैवैतत्स्वामिन्! 'अवितथं' असत्यतारहितमेतत्स्वामिन्! 'असन्दिग्धं' सन्देहरहितमेतत्स्वामिन्!, इच्छितमेतत्स्वामिन्!, 'प्रतीच्छितं' युष्मन्मुखात्पतदेव गृहीतमेतत्स्वामिन्!, 'इच्छितप्रतीच्छितं' पुनःपुनर्वाञ्छितमेतत्स्वामिन्!, सत्य एषोऽर्थः-'यथा' येन प्रकारेणेमं अर्थं यूयं वदथ, इति 'कृत्वा' उक्त्वा तान् स्वप्नान् सम्यक् 'प्रतीच्छति' अङ्गीकरोति। 'प्रतीच्छय' अङ्गीकृत्य सिद्धार्थेन राज्ञा अभ्यनुज्ञाता सती नानामणिरत्न-

अब्भणुन्नाया समाणी नाणामणिरयणभत्तिचित्ताओ भद्दासणाओ अब्भुट्ठेइ। अब्भुट्ठित्ता अतुरियमचवलमसंभंताए अविलंबियाए रायहंससरिसीए गईए, जेणेव सए सयणिज्जे, तेणेव उवागच्छइ। उवागच्छित्ता [सयणिज्जं दुरूहति। दुरूहित्ता] एवं वयासी ॥ ५६ ॥

मा मे ते उत्तमा पहाणा मंगल्ला सुमिणा दिट्ठा अण्णेहिं पावसुमिणेहिं पडिहम्मिस्संति त्ति कट्टु देवगुरुजणसंबद्धाहिं पसत्थाहिं मंगल्लाहिं धम्मियाहिं लट्ठाहिं कहाहिं सुमिणजागरिअं जागरमाणी पडिजागरमाणी विहरइ ॥ ५७ ॥

तए णं सिद्धत्थे खत्तिए पच्चूसकालसमयंसि कोडुंबियपुरिसे सद्दावेइ। सद्दावित्ता एवं वयासी ॥ ५८ ॥

खिप्पामेव भो देवाणुप्पिया! अज्ज सविसेसं बाहिरिअं उवट्ठाणसालं गंधोदयसित्तं सुइअसंमज्जिओवलित्तं सुगंधवरपंचवण्ण-

---

भक्तिचित्राद्भद्रासनादभ्युत्तिष्ठति। अभ्युत्थायात्वरितमचपलं यथा स्यात्तथाऽसम्भ्रान्तयाऽविलम्बितया राजहंससदृश्या गत्या यत्रैव स्वकं शयनीयं, तत्रैवोपागच्छति। उपागत्य [शयनीयमारोहति। आरुह्य] एवं अवादीत्।

५७–'मा' इति निषेधे, ततो मम ते–प्राग्दृष्टाः 'उत्तमाः' स्वरूपेण सुन्दराः 'प्रधानाः' सत्फलप्रदाः 'माङ्गल्याः' मङ्गलकारिणः, न त्वमङ्गलकारिणः, स्वप्नाः दृष्टाः, अन्यैः 'पापस्वप्नैः' दुःस्वप्नैर्मा 'प्रतिहन्यन्तां' विफलीक्रियन्तां इति कृत्वा देवगुरुजनसम्बद्धाभिरत एव प्रशस्ताभिर्माङ्गल्याभिर्धार्मिकाभिः 'लष्टाभिः' प्रशस्याभिः कथाभिः स्वप्नरक्षणार्थं जागरणं स्वप्नजागरिका, तां 'जाग्रती' विदधति 'प्रतिजाग्रती' तानेव स्वप्नान्संरक्षणेनोपचरन्ती विहरति।

५८–ततः सिद्धार्थः क्षत्रियः 'प्रत्यूषकालसमये' पीतवार्दलभवनादर्वागवसरे 'कौटुम्बिकपुरुषान्' आदेशकारिजनान् 'शब्दयति' आह्वयति। शब्दयित्वा चैवमवादीत्।

५९–क्षिप्रमेव भो देवानुप्रियाः सेवकाः! अद्योत्सवदिनत्वात् 'सविशेषं' विशेषेण बाह्यां 'उपस्थानशालां'

पुप्फोवयारकलिअं कालागुरु-पवर-कुंदुरुक्क-तुरुक्क-डज्झंत-धूव-मघमघंत-गंधुद्धुयाभिरामं सुगंधवरगंधियं गंधवट्टिभूअं-करेह-कारवेह। करित्ता कारवित्ता य सीहासणं रयावेह। रयावित्ता ममेयमाणत्तियं खिप्पामेव पच्चप्पिणह ॥ ५९ ॥

तए णं ते कोडुंबिअपुरिसा सिद्धत्थेणं रण्णा एवं वुत्ता समाणा हट्ठतुट्ठ जाव हियया, करयल जाव कट्टु एवं सामि! त्ति आणाए विणएणं वयणं पडिसुणंति। पडिसुणित्ता सिद्धत्थस्स खत्तियस्स अंतिआओ पडिनिक्खमंति। पडिनिक्खमित्ता जेणेव बाहिरिआ उवट्ठाणसाला तेणेव उवागच्छंति। तेणेव उवागच्छित्ता खिप्पामेव सविसेसं बाहिरियं उवट्ठाणसालं गंधोदगसित्तं जाव सीहासणं रया-

सर्वावसरसभां "कचेरी" इति लोके, गन्धोदकसिक्तां, तथा 'शुचिं' पवित्रां, सम्मार्जितां कचवरापनयनेन, उपलिप्तां छगणादिना, सुगन्धानां वराणां पञ्चवर्णानां पुष्पाणां 'उपचारेण' पूजया कलितां, पुनर्दह्यमानानां कृष्णागुरुप्रवरकुन्दुरुक्कतुरुष्कादिधूपानां मघमघायमानेन गन्धेन 'उद्भूतेन' प्रसृतेनाभिरामां, सुगन्धवराणां-चूर्णादीनां गन्धेन युतां, 'गन्धवर्त्तिभूतां' सुगन्धिद्रव्यगुटिकासमानां कुरुत स्वयमन्यैश्च कारयत। कृत्वा कारयित्वा सिंहासनं 'रचयत' स्थापयत। रचयित्वा च ममैतामाज्ञप्तिकां क्षिप्रमेव प्रत्यर्पयत।

६०-ततस्ते कौटुम्बिकपुरुषाः सिद्धार्थेन राज्ञा एवमुक्तास्सन्तो हृष्टास्तुष्टाः, यावद्धर्षपूर्णहृदयाः करतलपरिगृहीतं दशनखं यत्रैवं यावन्मस्तकेऽञ्जलिं कृत्वा 'हे स्वामिन्! यथा यूयं आदिशथ तथैवास्माभिरवश्यं कर्त्तव्यं' इत्येवं विनयेन आज्ञाया वचनं 'प्रतिशृण्वन्ति' स्वीकुर्वन्ति। प्रतिश्रुत्य सिद्धार्थस्य क्षत्रियस्यान्तिकात् 'प्रतिनिष्क्रामन्ति' बहिस्तान्निर्गच्छन्ति। प्रतिनिष्क्रम्य यत्रैव बाह्या उपस्थानशाला, तत्रैवोपागच्छन्ति। तत्रैवोपागत्य क्षिप्रमेव सविशेषं बाह्यामुपस्थानशालां गन्धोदकसिक्तां कृत्वा यावत् सिंहासनं रचयन्ति। रचयित्वा

णिंति । स्याविता जेणेव सिद्धत्थे खत्तिए तेणेव उवागच्छंति । उवागच्छित्ता करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु सिद्धत्थस्स खत्तियस्स तमाणत्तियं पच्चप्पिणंति ॥ ६० ॥

तए णं(से)सिद्धत्थे खत्तिए कल्लं पाउप्पभायाए रयणीए, फुल्लुप्पलकमलकोमलुम्मीलियम्मि अहापंडुरे पभाए, रत्तासोग-प्पगास-किंसुअ-सुअमुह-गुंजद्धराग-बंधुजीवग-पारावयचलणनयण-परहुअसुरत्तलोअण-जासुअणकुसुमरासि-हिंगुलनिअरातिरेअरेहंत-सरिसे

---

यत्रैव सिद्धार्थः क्षत्रियस्तत्रैवोपागच्छन्ति। उपागत्य करतलपरिगृहीतं दशनखं यथा स्यात्तथा शिरस्यावर्त्तकरणपूर्वकं मस्तकेऽञ्जलिं कृत्वा सिद्धार्थस्य क्षत्रियस्य तामाज्ञप्तिकां प्रत्यर्पयन्ति।

६१–ततः (स)सिद्धार्थः क्षत्रियः 'कल्यं' प्रातः 'प्रादुःप्रभातायां' प्रकटप्रभातायां रजन्यां जातायां सत्यां 'फुल्लं' विकसितं यत् 'उत्पलं' पद्मं 'कमलः' कृष्णसारमृगस्तयोः 'कोमलानां' अकठोराणां दलानां नयनयोश्च 'उन्मीलिते' विकसिते सति 'अथ' रात्रिविभातानन्तरं, आर्षत्वाद्दीर्घत्वं, पाण्डुरे प्रभाते जाते, अर्थात् पूर्वं रात्रिर्विभाता, तत ईषत्प्रकाशस्ततश्च पाण्डुरं प्रभातं जातं। ततोऽपि रक्ताशोकः, प्रकाशकिंशुकः, शुकमुखं, गुञ्जार्द्धस्य 'रागो' रक्तत्वं, बन्धुजीवकं–पुष्पविशेषः "बप्पोहरीआ" इति लोके, पारापतस्य चरणौ नयने च, 'परभृतस्य' कोकिलस्य 'सुरक्ते' कोपादिना रञ्जितत्वादतिरक्ते लोचने, जपासुमनसः "जासूद" इति जनप्रतीतस्य कुसुमस्य यो राशिः, हिङ्गुलस्य प्रतीतस्य यो निकरः, एतेभ्यो'ऽतिरेकेण' आधिक्येन राजमानः सन् सदृशः। अरुणत्वमात्रेणैव सदृशः, दीप्त्या त्वधिकं राजमानः, यद्वा रक्ताशोकादीनां हिङ्गुलनिकरान्तानां यो राजमानो'ऽतिरेकः' प्रकर्षस्तत्सदृशस्तस्मिन्। पुनः

कमलायरसंडबोहए उट्ठिअम्मि सूरे सहस्सरस्सिम्मि दिणयरे तेअसा जलंते, तस्स य करपहरापरद्धम्मि अंधयारे, बालायवकुंकुमेणं खचिअव्व जीवलोए, सयणिज्जाओ अब्भुट्ठेइ ॥ ६१ ॥

अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ । पच्चोरुहित्ता जेणेव अट्टणसाला, तेणेव उवागच्छइ । उवागच्छित्ता अट्टणसालं अणुपविसइ । अणुपविसित्ता अणेगवायामजोग्ग-वग्गण-वामद्दण-मल्लजुद्ध-करणेहिं संते परिस्संते सयपागसहस्सपागेहिं सुगंधवरतिल्लमाइएहिं पीणणिज्जेहिं दीवणिज्जेहिं मयणिज्जेहिं विंहणिज्जेहिं दप्पणिज्जेहिं सव्विंदियगायपल्हायणिज्जेहिं अब्भंगिए समाणे तिल्लचम्मंसि निउणेहिं पडिपुण्ण-

कमलाकराः पद्महृदादयस्तेषु यानि 'खण्डानि' कमलवनानि, तेषां 'बोधके' विकासके, तेजसा 'ज्वलति' देदीप्यमाने, एतादृशे सूर्ये सहस्ररश्मौ दिनकरे 'उत्थिते' उद्गते सति, तस्य च-सूर्यस्य करप्रहारैः 'अपराद्धे' विनाशिते ऽन्धकारे, बालातप एव कुङ्कुमस्तेन 'खचित इव' व्याप्त इव जीवलोके, एतादृशेऽवसरे शयनीयादभ्युत्तिष्ठति ।

६२-अभ्युत्थाय पादपीठात्प्रत्यवतरति । प्रत्यवतीर्य यत्रैव 'अट्टनशाला' व्यायामशाला तत्रैवोपागच्छति । उपागत्याट्टनशालामनुप्रविशति । अनुप्रविश्य अनेकानि व्यायामार्थं यानि योग्यादीनि, तत्र 'योग्या' अभ्यासः 'वल्गनं' अन्योऽन्यं उपर्युपरिपतनं 'व्यामर्दनं' परस्परेण बाह्वाद्यङ्गमोटनं, मल्लयुद्धानि प्रतीतानि 'करणानि' अङ्गभङ्गविशेषास्तैः 'श्रान्तः' सामान्येन श्रममुपगतः 'परिश्रान्तः' सर्वाङ्गीणश्रमं प्राप्तः सन् शतपाक-सहस्रपाकैः सुगन्धवरतैलादिकैः, आदिशब्दाद् घृत-कर्पूर-पानीयादिकैः, अभ्यङ्गित इति सण्टङ्कः । तत्र शतवारमपरापरौषधीरसेन सह, सौवर्णिकशतेन वा यत्पक्वं तच्छतपाकं । एवं सहस्रपाकमपि । कीदृशैस्तैलादिकैः ?, 'प्रीणनीयैः' रसरुधिरादिधातुसमताकरैः 'दीपनीयैः' अग्निदीपकैः 'मदनीयैः' मन्मथवर्द्धनैः 'बृंहणीयैः' मांसो-

पाणिपायसुकुमालकोमलतलेहिं अब्भंगण-परिमद्दणु-व्वलण-करण-गुणनिम्माएहिं छेएहिं दक्खेहिं पट्ठेहिं कुसलेहिं मेहावीहिं जिअपरिस्स-मेहिं पुरिसेहिं, अट्ठिसुहाए मंससुहाए तयासुहाए रोमसुहाए, चउव्विहाए सुहपरिकम्मणाए संवाहणाए संवाहिए समाणे अवगय-परिस्समे अट्टणसालाओ पडिनिक्खमइ ॥ ६२ ॥

पडिनिक्खमित्ता जेणेव मज्जणघरे, तेणेव उवागच्छइ। उवागच्छित्ता मज्जणघरं अणुपविसइ। अणुपविसित्ता समुत्तजालाकुलाभिरामे

---

पचयकरैः 'दर्पणीयैः' बलवृद्धिकरैः, सर्वेन्द्रियगात्रप्रह्लादनीयैः, एतादृशैस्तैलादिभिः अभ्यङ्गितः सँस्तैल-चर्मणि + 'निपुणैः' उपायकुशलैः, प्रतिपूर्णस्य पाणिपादस्य 'सुकुमालकोमलानि' अतिकोमलानि तलानि येषां, तैः। पुनः 'अभ्यङ्गनं' तैलादिम्रक्षणं 'परिमर्दनं' तैलादेः सम्यग्मर्दनं 'उद्वलनं' मर्दितानां तैलादीनां बहिःकर्षणं उद्वर्त्तनं वा 'करणं' अङ्गभङ्गविशेषः, एतेषां ये गुणास्तेषु 'निर्मातैः' निष्णातैः। 'छेकैः' अवसरज्ञैः 'दक्षैः' अव-सरोचितकार्यकरणकुशलैः 'प्रष्ठैः' मर्दनकारिमुख्यैः 'कुशलैः' विवेकिभिः 'मेधाविभिः' अपूर्वविज्ञानग्रहणक्षमैः 'जितपरिश्रमैः' बहुश्रमकरणेऽपि श्रमं अनाप्नुवद्भिः, ईदृशैः पुरुषैः अस्थ्नां सुखकारिण्या मांसस्य सुखकारिण्या त्वचायाः सुखकारिण्या रोम्णां सुखकारिण्या, इत्येवंरूपया चतुर्विधया सुखकारिण्या 'परिकर्मणया' अङ्ग-शुश्रूषात्मिकया सम्बाधनया 'सम्बाधितः' कृतविश्रामणः सन् अपगतपरिश्रमोऽट्टनशालातः प्रतिनिष्क्रामति।

६३—प्रतिनिष्क्रम्य यत्रैव मज्जनगृहं, तत्रैवोपागच्छति। उपागत्य मज्जनगृहं अनुप्रविशति। अनुप्रविश्य 'समुक्तं' मुक्ताफलयुक्तं यत् 'जालं' गवाक्षस्तेन 'आकुलो' व्याप्तोऽत एवाभिरामस्तस्मिन्। विचित्रमणिरत्नमये

---

+ "तैलाभ्यक्तस्य सम्बाधनाकरणाय यच्चर्मतूलिकोपरि कृतं तत्तैलचर्म" इति कल्पलतायाम्।

विचित्तमणिरयणकुट्टिमतले रमणिज्जे ण्हाणमंडवंसि नाणामणिरयणभत्तिचित्तंसि ण्हाणपीढंसि सुहनिसण्णे, पुप्फोदएहि अ गंधोदएहि अ उण्होदएहि अ सुहोदएहि अ सुद्धोदएहि अ कल्लाणकरणपवरमज्जणविहीए मज्जिए। तत्थ कोउअसएहिं बहुविहेहिं कल्लाणगपवरमज्जणावसाणे पम्हलसुकुमालगंधकासाइयलूहिअंगे अहयसुमहग्घदूसरयणसुसंवुडे सरससुरभिगोसीसचंदणाणुलित्तगत्ते सुइमालावण्णगविलेवणे आविद्धमणिसुवण्णे कप्पियहारऽद्धहारतिसरयपालंबपलंबमाणकडिसुत्तसुकयसोभे पिणद्धगेविज्ज-अंगुलिज्जग-ललियकयाभरणे [णाणाम-

---

'कुट्टिमतले' अङ्गनतले अत एव रमणीये स्नानमण्डपे नानामणिरत्नभक्तिचित्रे स्नानपीठे सुखेन निषण्णः सन् 'पुष्पोदकैः' पुष्परसमिश्रितैर्जलैः 'गन्धोदकैः' श्रीखण्डादिरसमिश्रैर्जलैः उष्णोदकैः 'शुभोदकैः' पवित्रस्थानाहृतैः 'शुद्धोदकैः' स्वभावनिर्मलैर्जलैः, इत्यादिकैर्विविधपानीयैः कृत्वा कल्याणकरणे प्रवणो यो मज्जनविधिस्तेन प्रागुक्तलक्षणैः पुरुषैर्मज्जितस्तत्र रक्षाप्रक्षेपादिबहुविधैः कौतुकशतैः, सहेति शेषः, कल्याणकारि यत्प्रवरमज्जनं, तस्यावसाने 'पक्ष्मलं' जटालमत एव सुकुमारं गन्धप्रधानं 'काषायिकं' कषायवर्ण-रक्तं यद्वस्त्रं, तेन लूपिताङ्गः, पुनः 'अहतं' अखण्डं 'सुमहार्घं' बहुमूल्यं यद्दूष्यरत्नं, तेन सुसंवृतः। पुनः 'सरसेन' सद्यस्केन सुरभिणा च गोशीर्षचन्दनेनानुलिप्तगात्रः। पुनः कृते 'शुचिनी' पवित्रे मालावर्णकविलेपने येन, तत्र माला—पुष्पमाला, वर्णकविलेपनं—मण्डनकारिकुङ्कुमादिविलेपनं। पुनः 'आविद्धानि' परिहितानि मणिसुवर्णानि—रत्नसुवर्णमयाभूषणानि येन। 'कल्पिता' यथास्थानं विन्यस्ता ये हारादयः, तत्र हारोऽष्टादशसरिकः, अर्द्धहारो—नवसरिकः, त्रिसरिकं प्रतीतमेव, प्रलम्बमानः 'प्रालम्बो' झुम्बनकं मुक्तामयं, कटिसूत्रं च—कट्याभूषणं, एतैः

णि कणगरयण]वरकडगतुडियथंभिअभुए अहिअरूवसस्सिरीए कुंडलउज्जोइयाणणे मउडदित्तसिरए हारोत्थयसुकयरइयवच्छे मुद्दिआ-पिंगलंगुलीए पालंबपलंबमाणसुकयपडउत्तरिज्जे नाणामणिकणगरयणविमलमहरिहनिउणोयवियमिसिमिसिंतविरइअसुसिलिट्ठविसिट्ठलट्ठआविद्धवीरवलए, किं बहुणा?, कप्परुक्खए विव अलंकिअविभूसिए नरिंदे, सकोरिंटमल्लदामेणं छत्तेणं धरिज्जमाणेणं सेअवरचाम-

---

सुष्ठु कृता शोभा येन, पुनः 'पीनद्धानि' परिहितानि 'ग्रैवेयानि' ग्रीवाभरणानि 'अङ्गुलीयकानि' अङ्गुलिभूषणानि, तथा ललितानि 'कचाभरणानि' केशमण्डनानि येन । पुनः[नानामणिकनकरत्नमयैः]वरैः कटकैः 'त्रुटिकैः' बाहुरक्षकैश्च स्तम्भितभुजः, अधिकं रूपेण 'सश्रीकः' सशोभः, कुण्डलाभ्यामुद्योतिताननः, मुकुटेन दीप्तशिरस्कः, पुनर्हारेण 'अवस्तृतं' स्थगितं, अतः सुष्ठु 'कृतरतिकं' द्रष्टृणां प्रमोददायि वक्षो यस्य । पुनर्मुद्रिकाभिः पिङ्गलाङ्गुलिकस्तथा 'प्रालम्बेन' दीर्घेण, अतः प्रलम्बमानेन पटेन सुष्ठु कृतं 'उत्तरीयं' उत्तरासङ्गो येन । पुनर्नानामणिकनकरत्नैर्विमलानि 'महार्घाणि' बहुमूल्यानि, निपुणेन शिल्पिना 'ओयविय'त्ति परिकर्मितानि, अतो 'मिसिमिसिंत'त्ति देदीप्यमानानि विरचितानि 'सुश्लिष्टानि' सुयोजितसन्धीनि, अतो 'विशिष्टानि' अतिरम्याणि 'लष्टानि' मनोहराणि, एवंविधानि 'वीरवलयानि' वीरत्वगर्वसूचकानि वलयाकारभूषणविशेषाणि 'आविद्धानि' परिहितानि येन, किं बहुना ?, कल्पवृक्ष इवालङ्कृतो विभूषितश्च, कल्पवृक्षः पत्राद्यैरलङ्कृतः पुष्पाद्यैश्च विभूषितः, राजाऽप्यलङ्कृतो मुकुटाद्यैर्विभूषितश्च वस्त्राद्यैः, एतादृशो नरेन्द्रः कोरिण्टवृक्षसम्बन्धिभिः 'माल्यदामभिः' पुष्पमालाभिः सहितेन छत्रेण ध्रियमाणेन, श्वेतवरचामरैरुद्धूयमानैः, आर्षत्वात्लीत्वं, शोभित

राहिं उद्धुव्वमाणीहिं मंगलजयसद्दकयालोए अणेगगणनायग-दंडनायग-राईसर-तलवर-माडंबिअ-कोडुंबिअ-मंति-महामंति-गणग-दोवारिअ-अमच्च-चेड-पीढमद्द-नगर-निगम-सिट्ठि-सेणावइ-सत्थवाह-दूअ-संधिवालसद्धिं संपरिवुडे धवलमहामेहनिग्गए इव गहगणदिप्पंतरिक्खतारागणाण मज्झे ससिव्व पियदंसणे नरवई नरिंदे नरवसहे नरसीहे अब्भहिअरायतेअलच्छिए दिप्पमाणे मज्जणघराओ पडिनिक्खमइ ॥ ६३ ॥

---

इति शेषः। मङ्गलभूतो जयशब्दः कृतो लोकैः 'आलोके' दर्शने यस्य। पुनरनेके ये 'गणनायकाः' स्वस्वसमुदायाध्यक्षाः 'दण्डनायकाः' तन्त्रपालाः, स्वराष्ट्रचिन्तका इत्यर्थः। 'राजानो' माण्डलिकाः 'ईश्वरा' युवराजाः 'तलवराः' तुष्टभूपदत्तपट्टबन्धभूषिताः 'माडम्बिकाः' छिन्नमडम्बाधिपाः, सर्वतोऽर्धयोजनात्परतोऽवस्थितग्रामाणि मडम्बानि। 'कौटुम्बिकाः' कतिपयकुटुम्बाध्यक्षाः ग्राममहत्तरा वा, 'मन्त्रिणः' सचिवाः दिवान इति लोके 'महामन्त्रिणः' मन्त्रिमण्डलमुख्याः 'गणकाः' ज्यौतिषिकाः 'दौवारिकाः' द्वारपालाः 'अमात्याः' नृपसहजन्मानो मन्त्रिणः 'चेटाः' दासाः 'पीठमर्दकाः' आसन्नसेवकाः 'नागराः' नगरवासिनः 'निगमाः' वणिजः 'श्रेष्ठिनो' नगरमुख्यव्यवहारिणः 'सेनापतयः' चतुरङ्गसेनाधिपाः 'सार्थवाहाः' सार्थनायकाः 'दूताः' अन्येभ्यो राजादेशनिवेदकाः 'सन्धिपालाः' राज्यसन्धिरक्षकाः, एतैस्सर्वैः सार्द्धं सम्परिवृतः सन् मज्जनगृहात्प्रतिनिष्क्रामति, तत्रोपमामाह—धवलमहामेघान्निर्गतः 'इव' यथा ग्रहगणेन दीप्यमान—ऋक्ष[नक्षत्र]तारागणानां मध्ये वर्त्तमानः शशी, तद्वत् प्रियदर्शनः। अत्र ग्रहगणर्क्षतारागणतुल्यः प्रागुक्तः परिवारः, शशितुल्यस्तु नृप इति। यथा हि वार्दलान्निर्गतो नक्षत्रादिपरिवृतश्च शशी प्रियदर्शनो भवति तथा सोऽपि नृप इति भावः। 'नरपतिः' प्रजापालकः 'नरेन्द्रो,

मज्जणघराओ पडिनिक्खमित्ता जेणेव बाहिरिया उवट्ठाणसाला तेणेव उवागच्छइ। उवागच्छित्ता सीहासणंसि पुरत्थाभिमुहे निसीअइ। निसीइत्ता अप्पणो उत्तरपुरच्छिमे दिसिभाए अट्ठ भद्दासणाइं सेअवत्थपच्चुत्थयाइं सिद्धत्थयकयमंगलोवयाराइं रयावेइ ॥ ६४ ॥

रयावित्ता अप्पणो अदूरसामंते णाणामणिरयणमंडिअं अहिअपिच्छणिज्जं, महग्घवरपट्टणुग्गयं, सण्हपट्टभत्तिसयचित्तताणं, ईहामिअ-उसभ-तुरग-नर-मगर-विहग-वालग-किन्नर-रुरु-सरभ-चमर-कुंजर-वणलय-पउमलयभत्तिचित्तं अब्भिंतरिअं जवणिअं अंछावेइ।

---

ऐश्वर्यानुभवनान्तरेषु इन्द्रः, एवं नरवृषभो राज्यधुराधरणात्, नरसिंहः शौर्यातिशयात्, अभ्यधिकराजतेजोलक्ष्म्या दीप्यमानो मज्जनगृहात्प्रतिनिष्क्रामति।

६४—मज्जनगृहात्प्रतिनिष्क्रम्य यत्रैव बाह्योपस्थानशाला तत्रैवोपागच्छति। उपागत्य सिंहासने 'पौरस्त्याभिमुखः' पूर्वदिक्सम्मुखो निषीदति। निषद्य च आत्मन उत्तरपौरस्त्ये—ईशानाख्ये दिग्विभागे अष्टौ भद्रासनानि श्वेतवस्त्रप्रत्यवस्तृतानि 'सिद्धार्थकैः' श्वेतसर्षपैः कृतः मङ्गलार्थे 'उपचारः' पूजा येषु, तानि 'रचयति' स्थापयति।

६५—रचयित्वा 'आत्मनः' स्वस्य 'अदूरसामन्ते' नातिदूरे नातिसमीपे च नानामणिरत्नैः 'मण्डितां' शोभमानां, अधिकं 'प्रेक्षणीयां' दर्शनीयां 'महार्घां' बहुमूल्यां 'वरे पत्तने' प्रधाने वस्त्रोत्पत्तिस्थाने च 'उद्गतां' निष्पन्नां, पुनः श्लक्ष्णं यत्पट्टसूत्रं, तन्मयो 'भक्तिशतैः' रचनाशतैश्च चित्रस्तानको यस्यां। तथा 'ईहामृगाः' वृकाः, वृषभास्तुरगाः नराः मकराः प्रतीताः, 'विहगाः' पक्षिणः 'व्यालकाः' सर्पाः, किन्नराः—देवाः, 'रुरवः' कृष्णसारमृगाः 'शरभाः' अष्टापदा—महाकाया आटव्याः पशवः, चमर्यो धेनवः, कुञ्जराः वनलताः पद्मलताः प्रतीतास्तेषां

अंछावित्ता नाणामणिरयणभत्तिचित्तं, अत्थरयमिउमसूरगुत्थयं, सेअवत्थपच्चुत्थयं, सुमउअं, अंगसुहफरिसं, विसिट्ठं, तिसलाए खत्तिआणीए भद्दासणं रयावेइ। रयावित्ता कोडुंबिअपुरिसे सद्दावेइ, सद्दावित्ता एवं वयासी ॥ ६५ ॥

खिप्पामेव भो देवाणुप्पिया! अट्ठंगमहानिमित्तसुत्तत्थधारए विविहसत्थकुसले सुविणलक्खणपाढए सद्दावेह। तए णं ते कोडुं-

---

'भक्तिभी' रचनाभिश्चित्रां 'आभ्यन्तरिकां' आस्थानशालान्तर्वर्त्तिनीं यवनिकां "कनात" इति लोकप्रसिद्धां 'आकर्षयति' बन्धयति। आकर्षयित्वा नानामणिरत्नभक्तिचित्रं, पुनः आस्तरकः प्रतीतस्तथा मृदुर्यो 'मसूरक' आस्तरणविशेषस्ताभ्यां, यद्वा 'अस्तरजसा' रजरहितेन 'मृदुना' च 'मसूरकेण' "गादी" इति जनप्रतीतेन अवस्तृतं, श्वेतवस्त्रेण 'प्रत्यवस्तृतं' उपर्याच्छादितं 'सुमृदुकं' अतिकोमलं अङ्गसुखस्पर्शं, अत एव 'विशिष्टं' शोभनं भद्रासनं त्रिशलायाः क्षत्रियाण्याः निमित्तं रचयति। रचयित्वा कौटुम्बिकपुरुषान् शब्दयति। शब्दयित्वा तानेवमवादीत्।

६६–क्षिप्रमेव भो देवानुप्रियाः! कौटुम्बिकाः! अष्टौ अङ्गानि यत्र, एवंविधं य'न्महानिमित्तं' निमित्तशास्त्रं–भाव्यर्थसूचकाङ्गस्फुरणादिफलप्रदर्शको ग्रन्थः, तस्य धारकान् विविधशास्त्रकुशलान् स्वप्नलक्षणपाठकान् शब्दयत। तत्राष्टौ अङ्गानि निमित्तस्येमानि–

"अङ्गं[1] स्वप्नं[2] स्वरं[3] चैव, भौमं[4] व्यञ्जन[5]लक्षणे[6]। औत्पात[7]मन्तरिक्षं[8] चा–ष्टाङ्गनिमित्तमुच्यते ॥ १ ॥"

'अङ्ग'मिति भ्रूनेत्रस्कन्धादिदेहावयवस्फुरणानुसारेण भाविशुभाशुभफलनिर्णयोऽङ्गविद्या, तत्र पुंसां दक्षिणाङ्गे स्त्रीणां च वामाङ्गे स्फुरणं शुभं १, स्वप्नेन शुभाशुभफलविचारः स्वप्नविद्या २, पशुपक्ष्यादेः स्वरपरिज्ञानं स्वर-

तिअपुरिसा सिद्धत्थेणं रन्ना एवं वुत्ता समाणा हट्ठतुट्ठ जाव हियया, करयल जाव पडिसुणंति ॥ ६६ ॥

पडिसुणित्ता सिद्धत्थस्स खत्तियस्स अंतिआओ पडिनिक्खमंति । पडिनिक्खमित्ता कुंड[पुरं]ग्गामं नगरं मज्झंमज्झेणं जेणेव सुविणलक्खणपाढगाणं गेहाइं, तेणेव उवागच्छंति । उवागच्छित्ता सुविणलक्खणपाढए सद्दाविंति ॥ ६७ ॥

---

विद्या ३, भूकम्पादिना शुभाशुभज्ञानं भौमविद्या ४, मषतिलकादिना शुभाशुभविज्ञानं व्यञ्जनविद्या ५, करचरणरेखादिकैः शुभाशुभविचारो लक्षणविद्या ६, विद्युदुल्कापातादिना शुभाशुभज्ञानं औत्पातं,

यथा—"वाताय कपिला विद्युत्, आतपायातिलोहिनी । पीता वर्षाय विज्ञेया, दुर्भिक्षाय सिता भवेत् ॥ १ ॥"

तथा—"उल्कापाते प्रजापीडा, निर्घाते भूपतिक्षयः । अनावृष्टिश्च दिग्दाहे, दुर्भिक्षं पांशुवर्षणे ॥ १ ॥" ७,

आकाशे गुरुशुक्रादिग्रहाणामुदयास्तादिना कृतं शुभाशुभज्ञानमान्तरिक्षं ८ । इत्येवमष्टविधं निमित्तम् ।

यद्वा—"जीवितं मरणं चैव, सुखं दुःखं तथैव च । गमनागमने लाभो-ऽलाभो निमित्तमष्टाङ्गम् ॥१॥" (आर्या)

ततस्ते कौटुम्बिकपुरुषाः सिद्धार्थेन राज्ञा एवमुक्ताः सन्तो हृष्टास्तुष्टाः यावत् हर्षपूर्णहृदया करतलाभ्यां अञ्जलिं कृत्वा यावदाज्ञां 'प्रतिशृण्वन्ति' स्वीकुर्वन्ति ।

६७–प्रतिश्रुत्य सिद्धार्थस्य क्षत्रियस्यान्तिकात्प्रतिनिष्क्रामन्ति । प्रतिनिष्क्रम्य क्षत्रियकुण्डग्रामनगरस्य मध्यंमध्येन भूत्वा यत्रैव स्वप्नलक्षणपाठकानां गृहाणि सन्ति, तत्रैवोपागच्छन्ति । उपागत्य स्वप्नलक्षणपाठकान् शब्दयन्ति ।

तए णं ते सुविणलक्खणपाढया सिद्धत्थस्स खत्तिअस्स कोडुंबिअपुरिसेहिं सद्दाविआ समाणा हट्ठतुट्ठ जाव हयहियया ण्हाया कयबलिकम्मा कयकोउअमंगलपायच्छित्ता सुद्धप्पावेसाइं मंगल्लाइं वत्थाइं पवराइं परिहिआ, अप्पमहग्घाभरणालंकियसरीरा, सिद्धत्थयहरिआलिआकयमंगलमुद्धाणा, सएहिं सएहिं गेहेहिंतो निग्गच्छंति। निग्गच्छित्ता खत्तियकुंडग्गामं नगरं मज्झंमज्झेणं जेणेव सिद्धत्थस्स रण्णो भवणवरवडिंसगपडिदुवारे, तेणेव उवागच्छंति। उवागच्छित्ता भवणवरवडिंसगपडिदुवारे एगयओ मिलंति। मिलित्ता

---

६८–ततस्ते स्वप्नलक्षणपाठकाः सिद्धार्थस्य क्षत्रियस्य कौटुम्बिकपुरुषैः शब्दिताः सन्तो हृष्टास्तुष्टा यावत् हर्षपूर्णहृदयाः स्नाताः, तथा कृतं गृहदेवानां 'बलिकर्म' पूजा यैः, पुनः कृतानि 'कौतुकानि' मषीतिलकादीनि 'मङ्गलानि' दधिदूर्वाक्षतादीनि, तान्येव दुःस्वप्नादिविनाशनाय प्रायश्चित्तानि यैस्ते तथा, पुनः 'शुद्धानि' निर्मलानि 'प्रावेश्यानि' राजसभाप्रवेशोचितानि 'माङ्गल्यानि' मङ्गलसूचकानि, अतः प्रवराणि वस्त्राणि परिहितानि यैः, तथा ये 'अल्पैः' स्तोकैः 'महार्घैः' बहुमूल्यैश्चाभरणैरलङ्कृतशरीराः, पुनः 'सिद्धार्थकाः' श्वेतसर्षपाः 'हरितालिका' दूर्वा, एतदुभयं कृतं मूर्धनि मङ्गलार्थं यैस्ते तथा, एवंविधास्सन्तः स्वकेभ्यः स्वकेभ्यो गेहेभ्यो निर्गच्छन्ति। निर्गत्य क्षत्रियकुण्डग्रामस्य नगरस्य मध्यंमध्येन भूत्वा यत्रैव सिद्धार्थस्य राज्ञो भवनवरेषु अवतंसक इव यः स तथा, तस्य भवनवरावतंसकस्य 'प्रतिद्वारं' द्वारसामीप्यं, तत्रैवोपागच्छन्ति। उपागत्य भवनवरावतंसकप्रतिद्वारे सर्वेऽप्येकत्र मिलन्ति। मिलित्वा सर्वसम्मतमेकं पुरस्कृत्यान्ये तदनुयायिनो भवन्ति।

यतः–"सर्वेऽपि यत्र नेतारः, सर्वे पण्डितमानिनः। सर्वे महत्त्वमिच्छन्ति, तद्वृन्दमवसीदति ॥१॥" दृष्टान्तश्चात्र–

सूत्रं ६८ स्वप्नलक्षणपाठकानामागमनं, भवनवरावतंसकप्रतिद्वारे चैकत्र मिलनम्

जेणेव बाहिरिआ उवट्ठाणसाला, जेणेव सिद्धत्थे खत्तिए, तेणेव उवागच्छंति। उवागच्छित्ता करयलपरिग्गहियं जाव अंजलिं कट्टु सिद्धत्थं खत्तियं जएणं विजएणं वद्धाविंति ॥ ६८ ॥

---

काचित्सुभटपञ्चशती परस्परमसम्बद्धा सेवार्थं कस्यचिद्राज्ञोऽन्तिके गता, राज्ञा चामात्यगिरा परीक्षार्थमेका शय्या प्रेपिता, ते च सर्वेऽपि अहमिन्द्रा लघुवृद्धव्यवहारहीनाः अन्योऽन्यं विवदमानाः 'सर्वैरप्येषा व्यापार्या' इति बुद्धया तां मध्ये मुक्त्वा तदभिमुखपादाः शयितवन्तः। प्रातश्च प्रच्छन्ननियुक्तैर्नरैर्यथावद्व्यतिकरे निवेदिते 'कथमेते स्थितिरहिताः परस्परमसम्बद्धा युद्धादिकं विधास्यन्ती'ति निर्भर्त्स्य निष्कासिता इति।

अतस्ते स्वप्नपाठका एकं पुरस्कृत्य यत्रैव बाह्या उपस्थानशाला, यत्रैव सिद्धार्थः क्षत्रियस्तत्रैवोपागच्छन्ति। उपागत्य करतलाभ्यां यावदञ्जलिं कृत्वा सिद्धार्थं क्षत्रियं—

"दीर्घायुर्भव वृत्तवान् भव सदा श्रीमान् यशस्वी भव, प्रज्ञावान् भव भूरिसत्त्वकरुणादानैकशौण्डो भव।
भोगाढ्यो भव भाग्यवान्भव महासौभाग्यशाली भव, प्रौढश्रीर्भव कीर्त्तिमान्भव सदा विश्वोपजीव्यो भव ॥१॥"

पुनः सिद्धार्थनृपं पार्श्वजिनसन्तानीयोपासकं मत्वा—

"×दशावतारो वः पायात्, कमनीयाञ्जनद्युतिः। किं दीपो ? नहि श्रीपः ?, किन्तु वामाङ्गजो जिनः ॥ २ ॥"

---

× दशावतारः कमनीयाञ्जनद्युतिश्च यः कश्चिद्वर्त्तते स 'वः' युष्मान् 'पायात्' रक्षतु। एतादृशः किं दीपः ?, तस्य 'दशायां' वृत्तिकायामवतारत्वात् 'कमनीया' मनोज्ञा मयूरव्यंसकादिना मध्यमपदलोपेऽञ्जनोत्पादिका एव 'द्युतिः' छविरस्येत्यञ्जनद्युतित्वाच्च, नहि, तस्य

"कल्याणमस्तु शिवमस्तु धनागमोऽस्तु, दीर्घायुरस्तु सुतजन्मसमृद्धिरस्तु ।
वैरिक्षयोऽस्तु नरनाथ ! सदा जयोऽस्तु, युष्मत्कुले च सततं मुनिभक्तिरस्तु ॥ ३ ॥"

इत्याद्याशीर्वादपुरस्सरं जयेन विजयेन च वर्द्धापयन्ति ।

इति श्रीपर्युषणकल्पावचूर्यन्तर्वाच्यादिविविधव्याख्यामुपजीव्य प्रवचनप्रभावक–श्रीखरतरगच्छाम्भोजविकासनैकभानु–क्रियोद्धारक–श्रीमन्मोहनमुनीश्वरविनेयान्तेवास्यनुयोगाचार्य–श्रीमत्केशरमुनिजी–गणिवरसंगृहीतायां कल्पार्थबोधिनीनामपर्युषणा-कल्पव्याख्यायां "गर्भस्य–श्रीवर्द्धमानरूपस्य हरणं–त्रिशलाकुक्षौ संक्रामणं" इति कल्पदीपिकादिवचन-प्रामाण्याद्देवानन्दाकुक्षितस्त्रिशलाकुक्षिगर्भाधानतया सङ्क्रामणरूपगर्भापहारनामद्वितीयकल्याणक-निबन्धबन्धुरं तृतीयं व्याख्यानं समाप्तम् ।

ग्रं० १७३–०–२ मूलं, ३७९–१–४ वृत्तिः, ३–२–० टि०, सर्वाग्रेण ३५५–३–६ । व्याख्यानत्रयस्य २२१७–१–७ ।



प्रकाशकत्वमात्रत्वात्परेषां रक्षणेऽक्षमत्वाच्च । तर्हि किं श्रिया पातीति 'श्रीपः' विष्णुः?, तस्य कच्छमच्छादिदशावताराणां जनप्रतीतत्वात् कृष्णवर्णत्वेन कमनीयाञ्जनद्युतित्वाच्च, नहि, तस्यापि कर्मशत्रुभ्यो रक्षितुमशक्यत्वात्सोऽपि न । किन्तु सम्यक्त्वप्राप्तितो मरुभूत्याद्या दशसङ्ख्याका 'अवतारा' भवा यस्य, तथा कृष्णपर्यायत्वान्नीलस्य 'कमनीयाञ्जनद्युतिः' नीलोत्पलच्छविर्वामाङ्गजो जिनो वः पायात् ।

# अथ चतुर्थं व्याख्यानम् ।



तए णं ते सुविणलक्खणपाढगा सिद्धत्थेणं रण्णा वंदिअपुइअसक्कारिअसम्माणिआ समाणा पत्तेअं २ पुव्वन्नत्थेसु भद्दासणेसु निसीयंति ६९ तए णं सिद्धत्थे खत्तिए तिसलं खत्तियाणिं जवणिअंतरियं ठावेइ । ठा०पुप्फफलपडिपुण्णहत्थे परेणं विणएणं ते सु०पाढए एवं वयासी ७० एवं खलु देवाणुप्पिया ! अज्ज तिसलाखत्तियाणी तंसि तारिसगंसि जाव सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एयारूवे उराले चउद्दस महासुमिणे पासित्ता णं पडिवुद्धा ॥ ७१ ॥ तं जहा-'गयवसह०' गाहा ॥ ७२ ॥

६९-ततस्ते स्वप्नलक्षणपाठकाः सिद्धार्थेन राज्ञा वन्दिताः-सद्गुणोत्कीर्त्तनेन, पूजिताः-पुष्पाद्यैः, सत्कारिताः-फलवस्त्राद्यैः, सम्मानिताः-अभ्युत्थानाद्यैः, एवंविधाः सन्तः प्रत्येकं प्रत्येकं पूर्वन्यस्तेषु भद्रासनेषु निषीदन्ति ।

७०-ततः सिद्धार्थः क्षत्रियस्त्रिशलां क्षत्रियाणीं यवनिकान्तरितां स्थापयति । स्थापयित्वा स्वयं पुष्पैः प्रतीतैः फलैर्नालिकेरादिकैः प्रतिपूर्णौ हस्तौ यस्य स तथा, यतः—

"रिक्तपाणिर्न पश्येच्च, राजानं दैवतं गुरुं । निमित्तज्ञं च वैद्यं च, फलेन फलमादिशेत् ॥ १ ॥"

अतः पुष्पफलप्रतिपूर्णहस्तः सन् 'परेण' उत्कृष्टेन विनयेन तान् स्वप्नलक्षणपाठकान्प्रत्येवमवादीत् ।

७१-७२ एवं खलु-देवानुप्रियाः ! अद्य त्रिशलाक्षत्रियाणी तस्मिंस्तादृशके शयनीये यावत्सुप्तजागरा अल्पनिद्रां कुर्वती इमानेतद्रूपानुदारांश्चतुर्दशमहास्वप्नान् दृष्ट्वा प्रतिबुद्धा । तद्यथा-'गयवसहे'ति गाथा व्याख्येयाऽत्र ।

तं एएसिं चउद्दसण्हं महासुमिणाणं देवाणुप्पिया ! उरालाणं के मन्ने कल्लाणे फलवित्तिविसेसे भविस्सइ ? ॥ ७३ ॥

तए णं ते सुविणलक्खणपाढगा सिद्धत्थस्स खत्तियस्स अंतिए एअमट्ठं सोच्चा निसम्म हट्ठतुट्ठ जाव हयहियया ते सुमिणे ओगिण्हंति। ओगिण्हित्ता ईहं अणुपविसंति। अणुपविसित्ता अन्नमन्नेणं सद्धिं संचालेंति। संचालित्ता तेसिं सुमिणाणं लद्धट्ठा गहिअट्ठा पुच्छिअट्ठा विणिच्छियट्ठा अभिगयट्ठा सिद्धत्थस्स रण्णो पुरओ सुमिणसत्थाइं उच्चारेमाणा उच्चारेमाणा सिद्धत्थं खत्तियं एवं वयासी ॥ ७४ ॥

---

७३–तदेतेषां चतुर्दशानां महास्वप्नानां देवानुप्रियाः! उदाराणां कः कल्याणः फलवृत्तिविशेषो भविष्यतीति मन्ये।

७४–ततस्ते स्वप्नलक्षणपाठकाः सिद्धार्थस्य क्षत्रियस्यान्तिके एनमर्थं श्रुत्वा निशम्य हृष्टास्तुष्टाः, यावन्मेघधाराहतकदम्बपुष्पवद्विकसितहृदयास्तान् स्वप्नान् 'अवगृह्णन्ति' अवधारयन्ति। अवगृह्य 'ईहां' अर्थविचारणां अनुप्रविशन्ति। अनुप्रविश्य अन्योऽन्येन सार्द्धं 'सञ्चालयन्ति' पर्यालोचयन्ति। सञ्चाल्य तेषां स्वप्नानां लब्धार्थाः स्वबुद्धितः, गृहीतार्थाः पराभिप्रायग्रहणतः, पृष्टार्थाः संशये सति परस्परतः, अत एव विनिश्चितार्थाः, अभिगतार्थाः–ज्ञातनिश्चितार्थाः सन्तः सिद्धार्थस्य राज्ञः पुरतः स्वप्नशास्त्राणि उच्चारयन्तः २ सिद्धार्थं क्षत्रियमेवमवादिषुः—

अनु०–"अनुभूतः श्रुतो दृष्टः, प्रकृतेश्च विकारजः। स्वभावतः समुद्भूत–श्चिन्तासन्ततिसम्भवः ॥ १ ॥"
"देवताद्युपदेशोत्थो, धर्मकर्मप्रभावजः। पापोद्रेकसमुत्थश्च, स्वप्नः स्यान्नवधा नृणाम् ॥ २ ॥" युग्मम्।
"प्रकारैरादिमैः षड्भि–रशुभश्च शुभोऽपि वा। दृष्टो निरर्थकः स्वप्नः, सत्यस्तु त्रिभिरुत्तरैः ॥ ३ ॥"
"रात्रेश्चतुर्षु यामेषु, दृष्टः स्वप्नः फलप्रदः। मासैर्द्वादशभिः षड्भि–स्त्रिभिरेकेन च क्रमात् ॥ ४ ॥"

सूत्रे७३-७४ सिद्धार्थेन स्वप्नकथनं स्वप्नपाठकेभ्यस्तैश्च स्वप्नशास्त्रकथनम्

"निशाऽन्त्यघटिकायुग्मे, दशाहात्फलति ध्रुवम् । दृष्टः सूर्योदये स्वप्नः, सद्यः फलति निश्चितम् ॥ ५ ॥"
"मालास्वप्नोऽह्नि दृष्टश्च, तथाऽऽधिव्याधिसम्भवः । मलमूत्रादिपीडोत्थः, स्वप्नः सर्वो निरर्थकः ॥ ६ ॥"
"सुस्वप्नं प्रेक्ष्य न स्वप्यं, कथ्यमह्नि च सद्गुरोः । दुःस्वप्नं पुनरालोक्य, कार्यः प्रोक्तविपर्ययः ॥ ७ ॥"
"समधातोः प्रशान्तस्य, धार्मिकस्यातिनीरुजः । स्यातां पुंसो जिताक्षस्य, स्वप्नौ सत्यौ शुभाशुभौ ॥८॥"
आर्या—"पूर्वमनिष्टं दृष्ट्वा, स्वप्नं यः प्रेक्षते शुभं पश्चात् । स तु फलदस्तस्य भवेद्, द्रष्टव्यं तद्वदिष्टेऽपि ॥ ९ ॥" +

---

+ "स्वप्ने मानव-मृगपति–तुरङ्ग-मातङ्ग-वृषभ-सिंहीभिः । युक्तं रथमारूढो, यो गच्छति भूपतिः स भवेत् ॥ १ ॥ अपहारो हय-वारण–याना-सन-सदन-निवसनादीनां । नृपशङ्का-शोककरो, वन्धुविरोधा-र्थहानिकरः ॥ २ ॥ यः सूर्याचन्द्रमसो, विम्बं ग्रसते समग्रमपि पुरुषः । कलयति दीनोऽपि महीं, ससुवर्णां सार्णवां नियतम् ॥३॥ हरणं प्रहरण-भूषण–मणि-मौक्तिक-कनक-रूप्य-कुप्यानां । धनमानम्लानिकरं, दारुणमरणावहं वहुशः ॥ ४ ॥ आरूढः शुभ्रमिभं, नदीतटे शालिभोजनं कुरुते । भुङ्क्ते भूमिमखिलां, स जातिहीनोऽपि धर्मधनः ॥५॥ निजभार्याया हरणे, वसुनाशः परिभवे च सङ्क्लेशः । गोत्रस्त्रीणां तु नृणां, जायेते वन्धुवधवन्धौ ॥ ६ ॥ शुभ्रेण दक्षिणस्यां, यः फणिना दश्यते निजभुजायां । आसादयति सहस्रं, कनकस्य स पञ्चरात्रेण ॥ ७ ॥ जायेत यस्य हरणं, निजशयनो-पानहां पुनः स्वप्ने । तस्य म्रियते दयिता, निविडा स्वशरीरपीडा च ॥८॥ यो मानुषस्य मस्तक–चरण-भुजानां च भक्षणं कुरुते । राज्यं कनकसहस्रं, तदर्धमाप्नोत्यसौ क्रमशः ॥९॥ द्वारपरिघस्य शयन–प्रेङ्खोलन-पादुका–निकेतानाम् । भञ्जनमपि यः पश्यति, तस्यापि कलत्रनाशः स्यात् ॥ १० ॥ कमलाकर-रत्नाकर–जलसम्पूर्णाऽऽपगाः सुहृन्मरणम् । यः पश्यति लभ-

तेऽसा-वनिमित्तं वित्तमतिविपुलम् ॥ ११ ॥ अतितप्तं पानीयं, सगोमयं गड्डुलमौषधेन युतम् । यः पिबति सोऽपि नियतं, म्रियतेऽतीसाररोगेण ॥ १२ ॥ देवस्य प्रतिमाया, यात्रास्नपनोपहारपूजादीन् । यो विदधाति स्वप्ने, तस्य भवेत्सर्वतो वृद्धिः ॥ १३ ॥ स्वप्ने हृदयसरस्यां, यस्य प्रादुर्भवन्ति पद्मानि । कुष्ठविनष्टशरीरो, यमवसतिं याति स त्वरितम् ॥ १४ ॥ आज्यं प्राज्यं स्वप्ने, यो विन्दति वीक्षते यशस्तस्य । तस्याभ्यवहरणं वा, क्षीरान्नेनैव सह शस्तम् × ॥१५॥ हसने शोचनमचिरात्, प्रवर्त्तते नर्त्तने च वधबन्धौ । पठने कलहश्च नृणा-मेतत्प्राज्ञेन विज्ञेयम् ॥ १६ ॥ कृष्णं कृत्स्नमशस्तं, मुक्त्वा गो-वाजिराज-गजदेवान् । सकलं शुक्लं च शुभं, त्यक्त्वा कर्पासलवणादीन् ॥ १७ ॥ दृष्टाः स्वप्ना ये स्वं, प्रति तेऽत्र शुभाशुभा नृणां स्वस्य । ये प्रत्यपरं तस्य, ज्ञेयास्ते स्वस्य नो किञ्चित् ॥ १८ ॥ दुःस्वप्ने देवगुरून्, पूजयति करोति शक्तितश्च तपः । सततं धर्मरतानां, दुःस्वप्नो भवति सुस्वप्नः ॥ १९ ॥"

× तथा सिद्धान्तेऽपि-"+ इत्थी वा पुरिसो वा, सुविणंते एगं महंतं खीरकुंभं वा दहिकुंभं वा घयकुंभं वा महुकुंभं वा पासमाणे पासेइ, उप्पाडेमाणे उप्पाडेइ, उप्पाडिअमिति अप्पाणं मन्नइ, तक्खणमेव बुज्झइ, तेणेव भवग्गहणेणं सज्झइ, जाव अंतं करेइ । इत्थी वा पुरिसो वा, सुमिणंते एगं महंतं हिरण्णरासिं वा रयणरासिं वा सुवण्णरासिं वा वयररासिं वा पासमाणे पासेइ, दुरूहमाणे दुरूहइ, दुरूढमिति अप्पाणं मन्नइ, तक्खणमेव बुज्झइ, तेणेव भवग्गहणेणं जाव अंतं करेइ" एवमेव "× अयरासिं तउअरासिं रययरासिं तंबरासिं सीसगरासिं"ति सूत्राणि वाच्यानि, नवरं "* दुच्चेणं भवग्गहणेणं" इति वाच्यम् ।

+ स्त्री वा पुरुषो वा, स्वप्नान्तरेऽके महान्तं क्षीरकुम्भं वा दधिकुम्भं वा घृतकुम्भं वा मधुकुम्भं वा पश्यन्पश्यति, उत्पाटयन्नुत्पाटयति, उत्पाटितमित्यात्मानं मन्यते, तत्क्षणमेव बुध्यते, तेनैव भवग्रहणेन सिध्यति यावदन्तं करोति। स्त्री वा पुरुषो वा, स्वप्नान्तरेऽके महान्तं हिरण्यराशिं वा रत्नराशिं वा सुवर्णराशिं वा वज्रराशिं वा पश्यन्पश्यति, आरुहन्नारोहति, आरूढमित्यात्मानं मन्यते, तत्क्षणमेव बुध्यते, तेनैव भवग्रहणेन यावदन्तं करोति । × अयोराशिं त्रपूराशिं रजतराशिं-ताम्रराशिं शीशकराशिमिति ।
* द्वितीयेन भवग्रहणेनेति ।

एवं खलु देवाणुप्पिया ! अम्हं सुमिणसत्थे बायालीसं सुमिणा, तीसं महासुमिणा, बावत्तरिं सव्वसुमिणा दिट्ठा । तत्थ णं देवाणुप्पिया ! अरहंतमायरो वा चक्कवट्टिमायरो वा, अरहंतंसि [ग्रं० ४००] वा चक्कहरंसि वा गब्भं वक्कममाणंसि एएसिं तीसाए महासुमिणाणं इमे चउद्दस महासुमिणे पासित्ता णं पडिबुज्झंति ॥ ७५ ॥ तं जहा–'गयवसह' गाहा ॥ ७६ ॥

वासुदेवमायरो वा वासुदेवंसि गब्भं वक्कममाणंसि एएसिं चउद्दसण्हं महासुमिणाणं अन्नयरे सत्त महासुमिणे पासित्ता णं पडिबुज्झंति ७७

बलदेवमायरो वा बलदेवंसि गब्भं वक्कममाणंसि एएसिं चउद्दसण्हं महासुमिणाणं अन्नयरे चत्तारि महासुमिणे पासित्ता णं पडिबुज्झंति ७८

मंडलियमायरो वा मंडलियंसि गब्भं वक्कममाणंसि एएसिं चउद्दसण्हं महासुमिणाणं अन्नयरं एगं महासुमिणं पासित्ता णं पडिबुज्झंति ७९

---

७५-७६-एवं खलु देवानुप्रिय-राजन् ! अस्माकं स्वप्नशास्त्रे द्विचत्वारिंशत्स्वप्नाः-सामान्यफलप्रदाः, त्रिंशन्महास्वप्नाः-उत्तमफलप्रदाः, द्वासप्ततिः सर्वे स्वप्ना दृष्टाः-कथिताः सन्ति । तत्र देवानुप्रिय ! अर्हन्मातरो वा चक्रवर्त्तिमातरो वा, 'अर्हति' तीर्थङ्करे वा चक्रधरे वा गर्भं 'व्युत्क्रामति' प्रविशति सति एतेषां त्रिंशतो महास्वप्नानां मध्याद् इमांश्चतुर्दशमहास्वप्नान् दृष्ट्वा प्रतिबुध्यन्ते । तद्यथा-"गयवसह" इति गाथा व्याख्येया ।

७७-वासुदेवमातरो वा वासुदेवे गर्भं व्युत्क्रामति सति एतेषां चतुर्दशानां महास्वप्नानां मध्यादन्यतरान्सप्तमहास्वप्नान् दृष्ट्वा प्रतिबुध्यन्ते ।

७८-बलदेवमातरो वा बलदेवे गर्भं व्युत्क्रामति सत्येतेषां चतुर्दशानां महास्वप्नानां मध्यादन्यतरांश्चतुरो महास्वप्नान् दृष्ट्वा प्रतिबुध्यन्ते ।

७९-माण्डलिको-देशाधिपस्तस्य मातरो वा माण्डलिके गर्भं व्युत्क्रामति सत्येतेषां चतुर्दशानां महा-

इमे अ णं देवाणुप्पिया ! तिसलाए खत्तिआणीए चउद्दस महासुमिणा दिट्ठा, तं उराला णं देवाणुप्पिया ! तिसलाए खत्तिआणीए सुमिणा दिट्ठा; जाव मंगल्लकारगा णं देवाणुप्पिया ! तिसलाए खत्तिआणीए सुमिणा दिट्ठा । तं जहा-अत्थलाभो देवाणुप्पिया !, भोगलाभो०, पुत्तलाभो०, सुक्खलाभो०, रज्जलाभो देवाणुप्पिया !, एवं खलु देवाणुप्पिया ! तिसला खत्तियाणी नवण्हं मासाणं बहुपडिपुण्णाणं, अद्धट्ठमाणं राइंदिआणं विइक्कंताणं, तुम्हं कुलकेउं कुलदीवं कुलपव्वयं कुलवडिंसगं कुलतिलयं कुलकित्तिकरं कुलवित्तिकरं कुलदिणयरं कुलाहारं कुलनंदिकरं कुलजसकरं कुलपायवं कुलतंतुसंताणविवद्धणकरं सुकुमालपाणिपायं अहीणपडिपुण्णपंचिंदियसरीरं लक्खण-

स्वमानां मध्यादन्यतरमेकं महास्वमं दृष्ट्वा प्रतिबुध्यन्ते ।

८०-इमे च देवानुप्रिय ! त्रिशलया क्षत्रियाण्या चतुर्दश महास्वमा दृष्टाः, तदुदाराः देवानुप्रिय ! त्रिशलया क्षत्रियाण्या स्वमा दृष्टाः, यावन्माङ्गल्यकारका देवानुप्रिय ! त्रिशलया क्षत्रियाण्या स्वमा दृष्टाः । अतो वक्ष्यमाणं फलं भविष्यति, तद्यथा-अर्थलाभो देवानुप्रिय !, भोगलाभो०, पुत्रलाभो०, सौख्यलाभो०, राज्यलाभो०, एवं खलु देवानुप्रिय ! त्रिशला क्षत्रियाणी, आर्षत्वात्सप्तम्यर्थे षष्ठी, नवसु मासेषु बहुप्रतिपूर्णेषु 'अर्द्धाष्टमेषु' सार्द्धसप्तसु रात्रिन्दिवेषु व्यतिक्रान्तेषु सत्सु, युष्माकं कुले केतुसमानं, कुले दीपसमानं, कुले पर्वतसमानं, कुले अवतंसकसमानं-मुकुटतुल्यं, कुलस्य तिलकसमं, कुलस्य कीर्त्तिकारकं, कुलस्य 'वृत्तिः' निर्वाहस्तस्य कारकं, कुले 'दिनकरसमं' सूर्यतुल्यं, कुलस्याधारं, कुलस्य नन्दिः-वृद्धिस्तस्याः करं, कुलस्य यशस्कारकं, कुले पादपसमानं, कुले तन्तुरिवालम्बनभूतो यः स कुलतन्तुः, एवंविधस्य 'सन्तानस्य' पुत्रादिपरिवारस्य विवर्द्धनकारकं, सुकुमालपाणिपादं अहीनप्रतिपूर्णपञ्चेन्द्रियशरीरं लक्षणव्यञ्जनानां गुणैरुपपेतं मानो-

वंजणगुणोववेयं माणुम्माणपमाणपडिपुण्णसुजायसव्वंगसुंदरंगं ससिसोमाकारं कंतं पियदंसणं सुरूवं दारयं पयाहिसि ॥ ८० ॥

से वि य णं दारए उम्मुक्कबालभावे विन्नायपरिणयमित्ते जुव्वणगमणुपत्ते सूरे वीरे विक्कंते, विच्छिन्नविपुलबलवाहणे चाउरंतचक्कवट्टीरज्जवई राया भविस्सइ, जिणे वा तेलुक्कनायगे धम्मवर-चाउरंत-चक्कवट्टी ॥ ८१ ॥

तं उराला णं देवाणुप्पिया ! तिसलाए खत्तियाणीए सुमिणा दिट्ठा, जाव आरुग्ग-तुट्ठि-दीहाऊ-कल्लाण-मंगल्ल-कारगा णं देवाणु-

---

न्मानप्रमाणैः प्राग्व्याख्यातैः प्रतिपूर्णानि सुजातानि च सर्वाङ्गानि यत्र, एवंविधं सुन्दरं अङ्गं यस्य, तथा शशिवत्सौम्याकारं 'कान्तं' वल्लभं प्रियदर्शनं सुरूपं 'दारकं' पुत्रं प्रजनिष्यति ।

८१–सोऽपि च दारक उन्मुक्तबालभावो विज्ञातपरिणतमात्रः–परिणतमात्र एव परिपक्वविज्ञानो, यौवनमनुप्राप्तः सन् दानादिषु शूरः सङ्ग्रामादिषु वीरः विक्रान्तश्च–परमण्डलाक्रमणसमर्थः, तथा विस्तीर्णविपुलबलवाहनश्चातुरन्तचक्रवर्त्ती राज्यपती राजा भविष्यति, जिनो वा त्रैलोक्यनायको धर्मवरचातुरन्तचक्रवर्त्ती भविष्यति । तत्र जिनत्वे चतुर्दशानामपि स्वप्नानां पृथक् पृथक् फलमिदं—

"गजेन विश्वशौण्डीरो, धर्मधुर्यो वृषेण तु । सिंहेन निर्भयश्शूरः, श्रिया विश्वश्रियाऽन्वितः ॥ १ ॥"

"स्रजा मूर्ध्नोपरि स्थाता, शशिना नयनामृतम् । सूर्येण तमसां हर्त्ता, कुलोत्तंसो ध्वजेन तु ॥ २ ॥"

"कुम्भेन गुणसम्पूर्णः, सरसा विश्वतापहृत् । वार्धिना गुरुगम्भीरो, विमानेनामरश्रियः ॥ ३ ॥"

"महार्यो रत्नपुञ्जेन, दीप्तो निर्धूमवह्निना । एभिः स्वप्नैर्जिनः पुत्रो, भावी ते भूप ! ईदृशः ॥ ४ ॥"

८२–तस्मादुदाराः हे देवानुप्रिय ! त्रिशलया क्षत्रियाण्या स्वप्ना दृष्टाः, यावदारोग्यतुष्टिदीर्घायुःकल्याण-

प्पिया ! तिसलाए खत्तियाणीए सुमिणा दिट्ठा ॥ ८२ ॥

तए णं सिद्धत्थे राया तेसिं सुमिणलक्खणपाढगाणं अंतिए एयमट्ठं सोचा निसम्म हट्ठे तुट्ठे चित्तमाणंदिते पीयमणे परमसोमणस्सिए हरिसवस-विसप्पमाणहिअए करयल० जाव ते सुमिणलक्खणपाढगे एवं वयासी ॥ ८३ ॥

एवमेयं देवाणुप्पिया ! तहमेयं देवाणुप्पिया ! अवितहमेयं देवा० ! इच्छियमेयं देवा० ! पडिच्छियमेयं देवा० ! इच्छियपडिच्छियमेयं देवा० !, सच्चे णं एसमट्ठे, से जहेयं तुब्भे वयह त्ति कट्टु ते सुमिणे सम्मं पडिच्छइ। पडिच्छित्ता ते सुमिणलक्खणपाढए विउलेणं असणेणं पुप्फवत्थगंधमल्लालंकारेणं सक्कारेइ सम्माणेइ। सक्कारित्ता सम्माणित्ता विउलं जीवियारिहं पीइदाणं दलइ। दलइत्ता पडिविसज्जेइ ॥८४॥

---

माङ्गल्यकारकाः हे देवानुप्रिय ! त्रिशलया क्षत्रियाण्या स्वप्ना दृष्टाः ।

८३–ततः सिद्धार्थो राजा तेषां स्वप्नलक्षणपाठकानामन्तिके एनमर्थं श्रुत्वा निशम्य च हृष्टस्तुष्टश्चित्ते आनन्दितः प्रीतमनाः परमसौमनस्यितः हर्षवशेन विसर्पद् हृदयः करतलाभ्यां यावदञ्जलिं कृत्वा तान् स्वप्नलक्षणपाठकान् एवमवादीत् ।

८४–एवमेतद्देवानुप्रियाः ! हे पाठकाः ! तथैवैतद्देवानुप्रियाः ! अवितथं–यथास्थितमेतद्देवानुप्रियाः ! इच्छितमेतद्देवानुप्रियाः ! 'प्रतीच्छितं' युष्मन्मुखात्पतदेव गृहीतमेतद्देवानुप्रियाः ! 'इच्छितप्रतीच्छितं' पुनः पुनर्वाञ्छितमेतद्देवानुप्रियाः !, सत्य एषोऽर्थः 'यथा' येन प्रकारेणेमं अर्थं यूयं वदथ, इति कृत्वा तान्स्वप्नान् सम्यक् प्रतीच्छति । प्रतीच्छ्य तान्स्वप्नलक्षणपाठकान् विपुलेन अशनेन शाल्यादिना तथा 'पुष्पैः' अग्रथितैर्जात्यादिकुसुमैः, वस्त्रैः प्रतीतैः, 'गन्धैः' वासचूर्णैः 'माल्यैः' ग्रथितकुसुमैः अलङ्कारैश्च सत्कारयति, सन्मानयति च

सूत्रे८३-८४ स्वप्नपाठकमुखात् स्वप्नफलं श्रुत्वा तत्प्रतीच्छनं सिद्धार्थेन

तए णं से सिद्धत्थे खत्तिए सीहासणाओ अब्भुट्ठेइ। अब्भुट्ठित्ता जेणेव तिसला खत्तियाणी जवणिअंतरिया, तेणेव उवागच्छइ। उवागच्छित्ता तिसलं खत्तियाणिं एवं वयासी ॥ ८५ ॥

एवं खलु देवाणुप्पिए! सुमिणसत्थंसि बायालीसं सुमिणा, तीसं महासुमिणा, जाव एगं महासुमिणं पासित्ता णं पडिबुज्झंति ॥८६॥

इमे अ णं तुमे देवाणुप्पिए! चउद्दस महासुमिणा दिट्ठा, तं उराला णं तुमे० जाव जिणे वा तेलुक्कनायगे धम्मवरचाउरंतचक्कवट्टी ॥८७॥

तए णं सा तिसला खत्तिआणी एअमट्ठं सोच्चा निसम्म हट्ठ-तुट्ठ जाव हयहिअया करयल जाव ते सुमिणे सम्मं पडिच्छइ ॥ ८८ ॥

---

तथाविधविनयवचनादिप्रतिपत्त्या। सत्कार्य सन्मान्य च विपुलं 'जीविकार्हं' आजन्मनिर्वाहोचितं प्रीतिदानं ददाति। दत्त्वा च प्रतिविसर्जयति।

८५–ततः स सिद्धार्थः क्षत्रियः सिंहासनादभ्युत्तिष्ठति। अभ्युत्थाय यत्रैव त्रिशला क्षत्रियाणी यवनिकान्तरिताऽस्ति, तत्रैवोपागच्छति। उपागत्य त्रिशलां क्षत्रियाणीं एवमवादीत्।

८६–एवं खलु देवानुप्रिये! देवि! स्वप्नशास्त्रे द्विचत्वारिंशत्स्वप्नाः सामान्यफलाः, त्रिंशन्महास्वप्नाः इत्यादितो यावदेकं महास्वप्नं दृष्ट्वा प्रतिबुद्ध्यन्ते इत्यन्तः सर्वोऽपि वृत्तान्तः कथितः।

८७–इमे च त्वया देवानुप्रिये! चतुर्दश महास्वप्ना दृष्टाः, तस्मादुदारास्त्वया देवानुप्रिये! स्वप्ना दृष्टाः, यावज्जिनो वा त्रैलोक्यनायको धर्मवरचातुरन्तचक्रवर्ती तव पुत्रो भविष्यति।

८८–ततः सा त्रिशला क्षत्रियाणी एनमर्थं श्रुत्वा निशम्य च हृष्टा तुष्टा यावन्मेघधाराहतकदम्बपुष्पवद्विकसितहृदया करतलाभ्यां यावदञ्जलिं कृत्वा तान् स्वप्नान्सम्यक् प्रतीच्छति।

पडिच्छित्ता सिद्धत्थेणं रण्णा अब्भणुन्नाया समाणी नाणामणिरयणभत्तिचित्ताओ भद्दासणाओ अब्भुट्ठेइ । अब्भुट्ठित्ता अतुरिअं अचवलं असंभंताए अविलंबिआए रायहंससरिसीए गईए जेणेव सए भवणे, तेणेव उवागच्छइ । उवागच्छित्ता सयं भवणं अणुपविट्ठा ॥ ८९ ॥

जप्पभिइं च णं समणे भगवं महावीरे तंसि ना(रा)यकुलंसि साहरिए, तप्पभिइं च णं बहवे वेसमणकुंडधारिणो तिरियजंभगा देवा सक्कवयणेणं से जाइं इमाइं पुरापोराणाइं महानिहाणइं भवंति, तं जहा—पहीणसामिआइं पहीणसेउआइं पहीणगुत्तागाराइं, उच्छिन्न-

---

८९—प्रतीच्छ्य च सिद्धार्थेन राज्ञा अभ्यनुज्ञाता सती नानामणिरत्नभक्तिचित्राद्भद्रासनादभ्युत्तिष्ठति । अभ्युत्थाय अत्वरितमचपलं च यथा स्यात्तथा असम्भ्रान्तया अविलम्बितया च राजहंससदृश्या गत्या गच्छन्ती यत्रैव 'स्वकं' आत्मीयं भवनं, तत्रैवोपागच्छति । उपागत्य स्वकं भवनमनुप्रविष्टा ।

९०—'यत्प्रभृति' यद्दिनमारभ्य श्रमणो भगवान् महावीरस्तस्मिन् ज्ञात(राज)कुले 'संहृतः' मातुर्गर्भनालेन संयोज्य गर्भाधानतया स्थापितः 'तत्प्रभृति' तद्दिनमारभ्य बहवो 'वैश्रमणस्य' धनदस्य 'कुण्डधारिणः' आज्ञाधारिणः तिर्यग्लोकवासिनो जृम्भकजातीया देवाः शक्रवचनेन, शक्रेण वैश्रमण आदिष्टस्तेन च ते इति भावः, "से"त्ति अथशब्दार्थे, अथ यानि 'इमानि' वक्ष्यमाणस्वरूपाणि 'पुरा' प्राङ्‌निक्षिप्तत्वात् 'पुराणानि' चिरन्तनानि महानिधानानि भवन्ति, कीदृशानि ? तानीत्याह—तद्यथा—'प्रहीणाः' स्वल्पीभूताः स्वामिनो येषां, तानि प्रहीणस्वामिकानि, एवं प्रहीणसेक्तृकानि, सेक्तारो हि उपरि धनक्षेप्तारस्तेऽपि स्वामिन एव भवन्ति, पुनर्येषां महानिधानस्वामिनां गोत्राणि आगाराणि च 'प्रहीणानि' स्वल्पीभूतानि, तथा 'उच्छिन्नाः' निस्सत्ताकीभूताः स्वामिनो

सामिआइं उच्छिन्नसेउआइं उच्छिन्नगुत्तागाराइं, गामा-गर-नगर-खेड-कब्बड-मडंब-दोणमुह-पट्टणा-सम-संबाह-सन्निवेसेसु सिंघाडएसु वा तिएसु वा चउक्केसु वा चच्चरेसु वा चउम्मुहेसु वा महापहेसु वा गामट्ठाणेसु वा नगरट्ठाणेसु वा गामनिद्धमणेसु वा नगरनिद्धमणेसु वा आवणेसु वा देवकुलेसु वा सभासु वा पवासु वा आरामेसु वा उज्जाणेसु वा वणेसु वा वणसंडेसु वा सुसाण-सुन्नागार-गिरिकंदर-

---

येषां, तानि उच्छिन्नस्वामिकानि, उच्छिन्नसेक्तृकानि उच्छिन्नगोत्रागाराणि। अथ केषु स्थानेषु तानि वर्त्तन्ते? इत्याह—ग्रामाः—करवन्तः, आकराः—लोहाद्युत्पत्तिभूमयः, नगराणि—कररहितानि, खेटानि—धूलिप्राकारोपेतानि, कर्वटानि—पर्वतपरिवृतानि, मडम्बानि—सर्वतोऽर्धयोजनात्परतोऽवस्थितग्रामाणि, द्रोणमुखानि—जलस्थलोभयपथयुक्तानि, पत्तनानि—जलस्थलपथयोरन्यतरेण युक्तानि, आश्रमाः—तापसस्थानादयः, सम्बाहाः—कृषीवलानां धान्यरक्षणस्थानानि 'खला' इति लोकप्रसिद्धानि, सन्निवेशाः—सार्थकटकाद्युत्तरणस्थानानि, ततो द्वन्द्वः, तेषु, तथा शृङ्गाटकेषु—शृङ्गाटकः फलविशेषस्तदाकारत्रिकोणस्थानेषु वा, त्रिकेषु—मार्गत्रयमिलनस्थानेषु वा, चतुष्केषु—मार्गचतुष्कमिलनस्थानेषु वा, चत्वरेषु—अनेकमार्गमिलनस्थानेषु वा चतुर्मुखेषु—चतुर्द्वारेषु देवकुलादिषु वा, महापथेषु—राजमार्गेषु वा, ग्रामस्थानेषु—ग्रामाणामुद्वसितभूमिषु वा, एवं उद्वसितनगरस्थानेषु वा, तथा ग्रामस्य निर्धमनेषु—जलनिर्गमेषु "खाल" इति प्रसिद्धेषु वा, एवं नगरनिर्धमनेषु वा, आपणेषु—हट्टेषु वा, देवकुलेषु—यक्षशिवाद्यायतनेषु वा, सभासु—जनोपवेशनस्थानेषु वा, प्रपासु—पानीयशालासु वा, आरामेषु—विविधलतोपेतकदल्याद्याच्छादितेषु स्त्रीपुंसयोः क्रीडाऽऽस्थानभूमिषु वा, उद्यानेषु—सपुष्पफलवृक्षेषु बहुजनभोग्येषु उद्यानिकाऽऽस्थानिकास्थानेषु वा,

संति-सेलो-वट्ठाण-भवणगिहेसु वा, सन्निक्खित्ताइं चिट्ठंति, ताइं सिद्धत्थरायभवणंसि साहरंति ॥ ९० ॥

जं रयणिं च णं समणे भगवं महावीरे नायकुलंसि साहरिए तं रयणिं च णं नायकुलं हिरण्णेणं वड्ढित्था, सुवण्णेणं वड्ढित्था, धणेणं धन्नेणं रज्जेणं रट्ठेणं बलेणं वाहणेणं कोसेणं कोट्ठागारेणं पुरेणं अंतेउरेणं जणवएणं जसवाएणं वड्ढित्था, विपुल-धण-कणग-रयण-मणि-

---

वनेषु—एकजातीयवृक्षसमूहेषु वा, वनषण्डेषु—अनेकजातीयोत्तमवृक्षसमूहेषु वा, तथा श्मशानानि प्रतीतानि, शून्यागाराणि—शून्यगृहाणि, गिरिकन्दराः—पर्वतगुहाः, शान्तिगृहाणि—शान्तिक्रियाकरणस्थानानि, शैलगृहाणि—पर्वतमुत्कीर्य कृतानि, उपस्थानगृहाणि—आस्थानमण्डपानि, सभा इत्यर्थः, भवनगृहाणि—कुटुम्बिवसनस्थानानि वा, ततो द्वन्द्वः, तेषु यानि महानिधानानि 'सन्निक्षिप्तानि' प्राक्पुरुषैः स्थापितानि तिष्ठन्ति, तानि ते तिर्यग्जृम्भका देवाः सिद्धार्थराजभवने 'संहरन्ति' वर्षयन्ति ।

९१—यस्यां रजन्यां श्रमणो भगवान् महावीरो ज्ञातकुले संहृतस्तस्यां रजन्यां, ततः प्रभृतीत्यर्थः, ज्ञातकुलं, 'हिरण्येन' रूप्येनाघटितसुवर्णेन वाऽवर्द्धत, सुवर्णेन (घटितेन) अवर्द्धत, एवं धनेन गणिम-धरिम-मेय-पारिच्छेद्य-भेदाच्चतुर्विधेन, धान्येन—यवगोधूमशाल्यादिचतुर्विंशतिविधेन, राज्येन मन्त्रिपुरोहितादिसप्ताङ्गिकेन, 'राष्ट्रेण' देशेन, बलेन—गजतुरगादिचतुरङ्गेन सैन्येन, वाहनेन—गजाश्वप्रभृतिना, 'कोशेन' भाण्डागारेण, 'कोष्ठागारेण' धान्यगृहेण, 'पुरेण' नगरेण, अन्तःपुरेण—प्रतीतेन, 'जनपदेन' देशवासिजनेन, 'यशोवादेन' साधुवादेनावर्द्धत, 'विपुलं' विस्तीर्णं यद्धनं—गवादिकं, कनकं—घटिताघटितभेदाद्द्विविधं, रत्नानि—कर्केतनादीन्यनेक-

॥ ६४ ॥

मोत्तिय-संख-सिल-प्पवाल-रत्तरयणमाइएणं संतसारसावइज्जेणं पीइसक्कारसमुदएणं अईव अईव अभिवड्ढित्था। तए णं समणस्स भगवओ महावीरस्स अम्मापिऊणं अयमेयारूवे अब्भत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था ॥ ९१ ॥

जप्पभिइं च णं अम्हं एस दारए कुच्छिंसि गब्भत्ताए वक्कंते, तप्पभिइं च णं अम्हे हिरण्णेणं वड्ढामो, सुवण्णेणं वड्ढामो, धणेणं धन्नेणं रज्जेणं रट्ठेणं बलेणं वाहणेणं कोसेणं कोट्ठागारेणं पुरेणं अंतेउरेणं जणवएणं जसवाएणं वड्ढामो, विपुल-धण-कणग-रयण-मणि-मोत्तिय-संख-सिल-प्पवाल-रत्तरयणमाइएणं संतसारसावइज्जेणं पीइसक्कारेणं अईव अईव अभिवड्ढामो, तं जया णं अम्हं एस दारए जाए भवि-

---

विधानि, मणयश्चन्द्रकान्तादयः, मौक्तिकानि प्रतीतानि, शङ्खाः–दक्षिणावर्त्ताः, शिला–राजपट्टादिरूपाः, प्रवालानि–विद्रुमाणि, रक्तरत्नानि–पद्मरागादयः, आदिशब्दाद्वस्त्रकम्बलादयस्तैः, तथा 'सत्' विद्यमानं, न त्विन्द्रजालवदविद्यमानं, यत् 'सारस्वापतेयं' प्रधानद्रव्यं, तेन, तथा प्रीतिर्मानसिकी तुष्टिः, सत्कारो–वस्त्रादिभिर्जनकृत आदरस्तत्समुदयेन अतीवातीवाभ्यवर्धत। ततः श्रमणस्य भगवतो महावीरस्य मातापित्रोः अयमेतद्रूपोऽभ्यर्थितश्चिन्तितः प्रार्थितो मनोगतः सङ्कल्पः समुदपद्यत।

९२–यत्प्रभृति अस्माकं एष दारकः कुक्षौ गर्भतया व्युत्क्रान्तस्तत्प्रभृति वयं हिरण्येन वर्धामहे, सुवर्णेन वर्धामहे, धनेन धान्येन राज्येन राष्ट्रेण बलेन वाहनेन कोशेन कोष्ठागारेण पुरेण अन्तःपुरेण जनपदेन यशोवादेन वर्धामहे, विपुल-धन-कनक-रत्न-मणि-मौक्तिक-शङ्ख-शिला-प्रवाल-रक्तरत्नादयः प्राग्व्याख्याताः, तैस्तथा 'सता' विद्यमानेन सारस्वापतेयेन प्रीतिसत्कारेण च अतीवातीव अभिवर्धामहे, तस्माद्यदाऽस्माकमेष

गुणनिष्पन्ननामकरणमनोरथः पित्रोः, मातुरनुकम्पया निश्चलत्वं च प्रभोः

स्सइ, तया णं अम्हे एअस्स दारगस्स पयाणुरूवं गुण्णं गुणनिप्फन्नं नामधिज्जं करिस्सामो वद्धमाणु त्ति ॥ ९२ ॥

तए णं समणे भगवं महावीरे माउअणुकंपणट्ठाए निच्चले निप्फंदे निरेयणे अल्लीणपल्लीणगुत्ते आवि होत्था ॥ ९३ ॥

तए णं तीसे तिसलाए खत्तियाणीए अयमेयारूवे जाव संकप्पे समुप्पज्जित्था–हडे मे से गब्भे ?, मडे मे से गब्भे ?, चुए मे से गब्भे ?, गलिए मे से गब्भे ?, एस मे गब्भे पुव्विं एयइ इयाणिं नो एयइ त्ति कट्टु ओहयमणसंकप्पा चिंतासोगसागरसंपविट्ठा करयल-

---

दारको जातो भविष्यति तदा वयमेतस्य दारकस्य एतदनुरूपं–धनादिवृद्धेरनुकूलं 'गौणं' गुणेभ्य आगतं, अतो गुणनिष्पन्नं नामधेयं करिष्यामो वर्द्धमान इति ।

९३–ततः श्रमणो भगवान् महावीरो 'मयि स्पन्दमाने मातुः कष्टं मा भू'दिति मातुः अनुकम्पनार्थं–भक्त्यर्थं, अन्यैरपि मातुर्भक्तिरेवं कर्त्तव्येति दर्शनार्थं च निश्चलो 'निष्पन्दः' किञ्चिदपि चलनक्रियारहितः, अतो 'निरेजनो' निष्कम्पः, आ–ईषल्लीनोऽङ्गसंयमनात्, प्रकर्षेण लीनः–उपाङ्गसंयमनात्, अत एव गुप्तोऽभवत्, 'आवि'त्ति समुच्चयार्थः।

अत्र कविः–"एकान्ते किमु मोहराजविजये मन्त्रं प्रकुर्वन्निव, ध्यानं किञ्चिदगोचरं विरचयत्येकः परब्रह्मणि ? ।
किं कल्याणरसं प्रसाधयति? वा देवो विलुप्यात्मकं, रूपं कामविनिग्रहाय जननीकुक्षावसौ वः श्रिये ॥१॥"

९४–ततस्तस्यास्त्रिशलायाः क्षत्रियाण्याः अयमेतद्रूपो यावत्सङ्कल्पः समुदपद्यत, कोऽसौ ? इत्याह–किं हृतः स मे गर्भः केनचिद्देवादिना ?, यद्वा किं मृतः स मे गर्भः ?, किं वा 'च्युतो' गर्भस्वभावात्परिभ्रष्टः स मे गर्भः ?, किं वा 'गलितो' द्रवतामापद्य क्षरितः स मे गर्भः ?, यत एष मे गर्भः पूर्वं 'एजते' कम्पमानोऽभूत् इदानीं 'नैजते' न कम्पते इति कृत्वा, विचारमिति शेषः । 'उपहतमनःसङ्कल्पा' कलुषीभूतान्तःकरणा 'चिन्ता'

पल्हत्थमुही अट्टज्झाणोवगया भूमिगयदिट्ठिया झियायइ। तं पि य सिद्धत्थराय-वरभवणं उवरय-मुइंग-तंती-तल-ताल-नाडइज्जजण-

गर्भहरणादिविकल्पसम्भवा अर्त्तिस्तया यः शोकः, स एव सागरस्तत्र सम्प्रविष्टा, अत एव करतलपर्यस्तमुखी आर्त्तध्यानोपगता भूमिगतदृष्टिका ध्यायति, तथाहि—

"यदि सत्यमिदं जज्ञे, गर्भस्यास्य कथञ्चन। तदा नूनमभाग्याहं, भूमौ निष्पुण्यकावधिः ॥ १ ॥"

"किं करोमि क्व गच्छामि, कस्याग्रे वा वदाम्यहम्। दुर्विदग्धेन दैवेन, जग्धा (ग्रसिता) दग्धेव पावकैः ॥२॥" ×

---

× "यद्वा चिन्तारत्नं, नहि नन्दति भाग्यहीनजनसदने। नापि च रत्ननिधानं, दरिद्रगृहसङ्गती भवति ॥१॥ कल्पतरुर्मरुभूमौ, न प्रादुर्भवति भूम्यभाग्यवशात्। नहि निष्पुण्यपिपासित–नृणां पीयूषसामग्री ॥ २ ॥ हा!! धिग् धिग् दैवं प्रति, किं चक्रे तेन सततवक्रेण ?। यन्मे मनोरथतरु–मूलादुन्मूलितोऽनेन ॥ ३ ॥ आत्तं दत्त्वाऽपि च मे, लोचनयुगलं कलङ्कविकलमलं। दत्त्वा पुनरुद्दालित–मधमेनानेन निधिरत्नम् ॥ ४ ॥ आरोप्य मेरुशिखरं, प्रपातिता पापिनाऽमुनाऽहमियं। परिवेष्याप्याकृष्टं, भोजन-भाजनमलज्जेन ॥५॥ यद्वा मयाऽपराद्धं, भवान्तरेऽस्मिन् भवेऽपि किं? धातः!। यस्मादेवं कुर्व-न्नुचितानुचितं न चिन्तयसि ॥६॥ किं राज्येनाप्यमुना ?, किं वा कृत्रिमसुखैर्विषयजन्यैः ?। किं वा दुकूलशय्या–शयनोद्भवशर्महर्म्येण ? ॥ ७ ॥ गजवृषभादि-स्वप्नैः, सूचितमुचितं शुचि त्रिजगदर्च्यम्। त्रिभुवनजनासपत्नं, विना जनानन्दिसुतरत्नम् ॥ ८ ॥ युग्मम् ॥ धिक् संसारमसारं, धिग्दुःखव्याप्तविषयसुखलेशान्। मधुलिप्तखड्गधारा–लेहनतुलितानहो!! ललितान् ॥ ९ ॥ यद्वा मयका किञ्चि–त्तथाविधं दुष्कृतं कृतं कर्म। पूर्वभवे यद्वपिसिः, प्रोक्तमिदं धर्मशास्त्रेषु ॥१०॥ 'पसुपक्खिमाणुसाणं, बाले जो वि हु विओयए पावो। सो

अस्मिन्नवसरे तत्सिद्धार्थराजभवनं यादृशं जातं तत्सूत्रकृदेवाह-तदपि च सिद्धार्थराजवरभवनं, मृदङ्गः

अणवच्चो जायइ, अह जायइ तो विवज्जिज्जा § ॥ ११ ॥' तत्पङ्का मया किं, त्यक्ता वा त्याजिता अधमबुद्ध्या ? । लघुवत्सानां मात्रा, समं वियोगः कृतः किं वा ? ॥१२॥ तेषां दुग्धापायो-ऽकारि मया कारितोऽथवा लोकैः । किं वा सबालकोन्दुरु-विलानि परिपूरितानि जलैः ? ॥ १३ ॥ किं वा साण्डशिशून्यपि, खगनीडानि प्रपातितानि भुवि । पिकशुककुर्कुटकादे-र्बालवियोगोऽथवा विहितः ॥१४॥ किं वा बालकहत्या-ऽकारि सपत्नीसुताद्युपरि दुष्टं । चिन्तितमचिन्त्यमपि वा, कृतानि किं कार्मणादीनि ? ॥१५॥ किं वा गर्भस्तम्भन-शातनपातनमुखं मया चक्रे ? । तन्मन्त्रभेषजान्यपि, किं वा मयका प्रयुक्तानि ? ॥ १६ ॥ अथवा भवान्तरे किं ?, मया कृतं शीलखण्डनं बहुशः । यदिदं दुःखं तस्मा-द्विना न सम्भवति जीवानाम् ॥ १७ ॥ यदुक्तं-'कुरंडरंडत्तणदुब्भगाइं, वंझत्तनिंदुविसकन्नगाइं । लहंति जम्मंतरभग्गसीला, नाऊण कुज्जा दढसीलभावं † ॥ १८ ॥' एवं चिन्ताक्रान्ता, ध्यायन्ती म्लानकमलसमवदना । दृष्टा शिष्टेन सखी-जनेन तत्कारणं पृष्टा ॥ १९ ॥ प्रोवाच साश्रुलोचन-रचनानिःश्वासकलितवचनेन । किं मन्दभागधेया, वदामि ? यज्जीवितं मेऽगात् ॥ २० ॥ सख्यो जगुरथ रे सखि !, शान्तममङ्गलमशेषमन्यदिह । गर्भस्य तेऽस्ति ? कुशलं, न वेति वद कोविदे ! सत्यम् ॥ २१ ॥ सा प्रोचे गर्भस्य च, कुशले किमकुशलमस्ति ? मे सख्यः ! । इत्याद्युक्त्वा मूर्च्छा-मापन्ना पतति भूपीठे ॥ २२ ॥ शीतलवातप्रभृतिभि-रुपचारैर्बहुतरैः सखीभिः सा । सम्प्रापितचैतन्यो-त्तिष्ठति विलपति

§ पशुपक्षिमानुषाणां, बालान् योऽपि दुर्वियोजयति पापः । सोऽनपत्यो जायते, अथ जायते तदा विपद्येत ॥ १ ॥

† कुरण्डरण्डत्वदुर्भगत्वानि, वन्ध्यत्वनिन्दु(मृतापत्यप्रसूः)विषकन्यकत्वानि । लभन्ते जन्मान्तरभग्नशीला, ज्ञात्वा कुर्याद् दृढं शीलभावम् ॥ १ ॥

मणुन्नं दीणविमणं विहरइ ॥ ९४ ॥ तए णं से समणे भगवं महावीरे माऊए अयमेयारूवं अब्भत्थिअं पत्थिअं मणोगयं संकप्पं समुप्पन्नं

प्रतीतः, 'तन्त्री' वीणा, 'तलताला' हस्तताला:, यद्वा 'तला' हस्ताः 'ताला:' कांस्यिकाः; नाटकीयजनाश्च, एतेषां मनोज्ञत्वमुपरतं यत्रैवंविधं, अत एव दीनं सद्विमनस्कं 'विहरति' आस्ते ।

९५–ततः स श्रमणो भगवान् महावीरो मातुरिममेतद्रूपं 'अभ्यर्थितं' आत्मविषयं प्रार्थितं मनोगतं सङ्कल्पं

---

न पुनरेवम् ॥ २३ ॥ ‡ 'गरुए अणोरपारे, रयणनिहाणे अ सायरे पत्तो । छिद्दघडो न भरिज्जइ, ता किं दोसो जलनिहिस्स ? ॥ २४ ॥ पत्ते वसंतमासे, रिद्धिं पावंति सयलवणराई । जं न करीरे पत्तं, ता किं दोसो वसंतस्स ? ॥ २५ ॥'

समीहितं यन्न लभामहे वयं, प्रभो ! न दोषस्तव कर्मणो मम । दिवाऽप्युलूको यदि नावलोकते, तदा स दोषः कथमंशुमालिनः ? ॥ २६ ॥ अथ मे मरणं शरणं, किं करणं विफलजीवितव्येन ? । तच्छ्रुत्वेति व्यलपत, सख्यादिः सकलपरिवारः ॥२७॥ हा ! ! किमुपस्थितमेतत् ?, निष्कारणवैरीविधिनियोगेन । हा ! ! कुलदेव्यः ! क्व गताः ?, यदुदासीनाः स्थिता यूयम् ॥२८॥ अथ तत्र प्रत्यूहे, विचक्षणाः कारयन्ति कुलवृद्धाः । शान्तिकपौष्टिकमन्त्रो–पयाचितादीनि कृत्यानि ॥ २९ ॥ पृच्छन्ति च दैवज्ञान्, निषेधयन्त्यपि च नाटकादीनि । अतिगाढशब्दविरचित–वचनानि निवारयन्त्यपि च ॥ ३० ॥ राजाऽपि लोककलितः, शोकाकुलितोऽजनिष्ट शिष्टमतिः । किंकर्त्तव्यविमूढाः, सञ्जाता मन्त्रिणः सर्वे ॥ ३१ ॥"

---

‡ गुरुकेऽनारपारे, रत्ननिधाने च सागरे प्राप्तः । छिद्रघटो न भ्रियते, तर्हि किं दोषो जलनिधेः ? ॥ २४ ॥
प्राप्ते वसन्तमासे, ऋद्धिं प्राप्नोति सकलवनराजिः । यन्न करीरे पत्रं, तर्हि किं दोषो वसन्तस्य ? ॥ २५ ॥

वियाणित्ता एगदेसेणं एयइ । तए णं सा तिसला खत्तियाणी हट्ठ-तुट्ठा जाव हयहिअया एवं वयासी ॥ ९५ ॥ नो खलु मे गब्भे हडे जाव नो गलिए, एस मे गब्भे पुव्विं नो एयइ इयाणिं एयइ त्ति कट्टु हट्ठ-तुट्ठा जाव हयहियया एवं विहरइ । तए णं समणे भगवं महावीरे

समुत्पन्नं अवधिना विज्ञायाचिन्तयत्—

"किं कुर्मः ? कस्य वा ब्रूमो ?, मोहस्य गतिरीदृशी । दुषेर्धातोरिवास्माकं, दोषनिष्पत्तये गुणः ॥ १ ॥"

"मया मातुः प्रमोदाय, कृतं जातं तु खेदकृत् । भाविनः कलिकालस्य, सूचको लक्षणं ह्यदः ॥ २ ॥"

"पञ्चमारे गुणो यस्माद्, भावी दोषकरो नृणाम् । नालिकेराम्भसि न्यस्तः, कर्पूरो मृतये यथा ॥ ३ ॥"

इति चिन्तयित्वा एकदेशेन अङ्गुल्यादिना एजते, ततः सा त्रिशला क्षत्रियाणी हृष्टा तुष्टा यावन्मेघधाराहतकदम्बपुष्पवद्धर्षपूर्णहृदया एवं अवादीत्—

९६–नो खलु मे गर्भो हृतः केनापि देवादिना, यावनो गलितः । एष मे गर्भः पूर्वं 'नैजते' नाकम्पत, इदानीमेजते, इति कृत्वा हृष्टा तुष्टा यावन्मेघधाराहतकदम्बपुष्पवद्धर्षपूर्णहृदया सती एवं विहरति–आस्ते ।

अथ हर्षिता त्रिशला यथाऽचेष्टत तथा लिख्यते—

"प्रोवाच मधुरवाचा, गर्भे मे विद्यतेऽथ कल्याणम् । हा !! धिङ्मयकाऽनुचितं, चिन्तितमतिमोहमतिकतया ॥१॥"

"सन्त्यथ मम भाग्यानि, त्रिभुवनमान्या तथा च धन्याऽहं । श्लाघ्यं च जीवितं मे, कृतार्थतामाप मे जन्म ॥२॥"

"श्रीजिनपादाः प्रसेदुः, कृताः प्रसादाश्च गोत्रदेवीभिः । जिनधर्मकल्पवृक्ष–स्त्वाजन्माराधितः फलितः ॥३॥"

गब्भत्थे चेव इमेयारूवं अभिग्गहं अभिगिण्हइ–नो खलु मे कप्पइ अम्मापिऊहिं जीवंतेहिं मुंडे भवित्ता आगाराओ अणगारिअं पव्वइत्तए ९६

तए णं सा तिसला खत्तियाणी ण्हाया कयबलिकम्मा कयकोउय-मंगल-पायच्छित्ता सव्वालंकारविभूसिया तं गब्भं नाइसीएहिं नाइ-

"एवं सहर्षचित्तां, देवीमालोक्य वृद्धनारीणाम्। जय जय नन्देत्याद्या–शिषः प्रवृत्ता मुखकजेभ्यः ॥ ४ ॥"
"हर्षात्प्रवर्त्तितान्यथ, कुलनारीभिश्च ललितधवलानि। उत्तम्भिताः पताका, मुक्तानां स्वस्तिका न्यस्ताः ॥५॥"
"आनन्दाद्वैतमयं, राजकुलं तद्बभूव सकलमपि। आतोद्य-गीत-नृत्यैः, सुरलोकसमं महाशोभम् ॥ ६ ॥"
"वर्धापनागता धन–कोटीर्गृह्णन् ददच्च धनकोटीः। सुरतरुरिव सिद्धार्थः, सञ्जातः परमहर्षभरः ॥ ७ ॥"

ततः श्रमणो भगवान् महावीरो गर्भस्थ एव पक्षाधिके मासषट्के व्यतिक्रान्ते इमं एतद्रूपं अभिग्रहं अभिगृह्णाति, कं? इत्याह–नो खलु मम कल्पते मातापितृषु जीवत्सु मुण्डो भूत्वा 'आगारात्' गृहान्निष्क्रम्य 'अनगारितां' साधुतां प्रव्रजितुं–दीक्षां स्वीकर्त्तुमिति भावः। यदुक्तम्–"अह सत्तमम्मि मासे, गब्भत्थो चेवऽभिग्गहं गिण्हइ। नाहं समणो होहं, अम्मापियरे य जीवंते × ॥ १ ॥" एतच्चाभिग्रहग्रहणं गर्भस्थेऽपि मयि मातुरीदृशः स्नेहोऽस्ति तर्हि जाते तु कीदृशो भविष्यतीति धियाऽन्येषां मातरि बहुमानदर्शनार्थं च, यतः–"आस्तन्यपानाज्जननी पशूना–मादारलाभाच्च नराधमानाम्। आगेहकृत्याच्च विमध्यमाना–माजीवितात्तीर्थमिवोत्तमानाम् ॥१॥"

९७–ततः सा त्रिशला क्षत्रियाणी स्नाता कृतबलिकर्मा कृतकौतुकमङ्गलप्रायश्चित्ता सर्वालङ्कारविभूषिता

× अथ सप्तमे मासे, गर्भस्थश्चैवाभिग्रहं गृह्णाति। नाहं श्रमणो भविष्यामि, मातापित्रोश्च जीवतोः ॥ १ ॥

उण्हेहिं नाइतित्तेहिं नाइकडुएहिं नाइकसाएहिं नाइअंबिलेहिं नाइमहुरेहिं नाइनिद्धेहिं नाइलुक्खेहिं नाइउल्लेहिं नाइसुक्केहिं, सव्वत्तुगभयमाणसुहेहिं भोयणाच्छायणगंधमल्लेहिं, ववगयरोगसोगमोहभयपरिस्समा सा जं तस्स गब्भस्स हिअं मियं पत्थं गब्भपोसणं, तं देसे

सती तं गर्भं नातिशीतैर्नात्युष्णैर्नातितिक्तैर्नातिकटुकैर्नातिकषायैर्नात्यम्लैर्नातिमधुरैर्नातिस्निग्धैर्नातिरूक्षैर्नात्यार्द्रैर्नातिशुष्कैः, सर्वर्त्तुषु 'भज्यमानाः' सेव्यमाना ये 'सुखाः' सुखकारिणस्तैः, यथा चोक्तं–"वर्षासु लवणममृतं, शरदि जलं गोपयश्च हेमन्ते। शिशिरे चामलकरसो, घृतं वसन्ते गुडश्चान्ते ॥ १ ॥" एवंविधैर्भोजनाच्छादनगन्धमाल्यैस्तं गर्भं पोषयतीति शेषः। यतो नातिशीतलाद्याहारादयो गर्भस्य हिताः, ते हि केचिद्वातिकाः केचित्पैत्तिकाः केचिच्छ्लेष्मकराश्च भवन्ति, अतो गर्भस्याहिताः, यदुक्तम्–"वातलैश्च भवेद्गर्भः, कुब्जान्धजडवामनः। पित्तलैः खलतिः[1] पिङ्गः[2] श्वित्री[3] पाण्डुः कफात्मभिः ॥ १ ॥" तथा–"अत्युष्णं हरति बलं, ह्यतिशीतं मारुतं प्रकोपयति। अतिलवणमचाक्षुष्य-मतिस्नेहं दुर्जरं भवति ॥ १ ॥" अतो नातिशीतलाद्यैस्तं गर्भं सा पोषयतीति युक्तम्। पुनः सा त्रिशला कथम्भूता? 'रोगाः' ज्वराद्याः, 'शोकः' इष्टवियोगादिजनितः, 'मोहो' मूर्च्छा 'भयं' भीतिः 'परिश्रमो' व्यायामः, एते व्यपगता यस्याः, रोगादिरहितेति भावः। यतस्ते गर्भस्याहिताः, तदुक्तं सुश्रुते वैद्यकग्रन्थे (शारीरस्थाने अ. २।२६)–"दिवा स्वपन्त्याः स्त्रियाः स्वापशीलो गर्भः, अञ्जनादन्धः, रोदनाद्विकृतदृष्टिः, स्नानानुलेपनाद्दुःखशीलः, तैलाभ्यङ्गात्कुष्ठी, नखापकर्त्तनात्कुनखी, प्रधावनाच्चञ्चलः, हसनात् श्या[म]वदन्तौष्ठताल्जिह्वः, अतिकथनाच्च

1 खल्वाटः। 2 दीपशिखावर्णवद्वर्णवान्। 3 चित्रं–पाण्डुरं कुष्ठं, तद्वान्।

ग काले अ आहारमाहारेमाणी, विवित्तमउएहिं सयणासणेहिं, पइरिकसुहाए मणोऽणुकूलाए विहारभूमीए, पसत्थदोहला संपुण्ण

प्रलापी, अतिशब्दश्रवणाद्बधिरः, अवलेखनात्खलतिः [ विरलकेशत्वं ], [ व्यजनक्षेपणादि ] मारुतायाससेवनादुन्मत्तः स्यात्" । तथा न कुलवृद्धाः त्रिशलां शिक्षयन्ति—"मन्दं सञ्चर मन्दमेव निगद व्यामुञ्च कोपक्रमं, पथ्यं भुङ्क्ष्व बधान नीविमनघां मामाऽट्टहासं कृथा । आकाशे भव मा शयिष्व शयने नीचैर्बहिर्गच्छ मा, देवी गर्भभरालसा निजसखीवृन्देन सा शिक्ष्यते ॥ १ ॥" एवंविधा सा—त्रिशला यत्तस्य गर्भस्य 'हितं' मेधावृद्ध्यादिगुणकरं, यथा—"सर्वे बुद्धिप्रदा गौल्याः, सर्वे क्षारा मलापहाः । कापाय्या रञ्जकाः सर्वे, सर्वे अम्ला विषोपमाः ॥ १ ॥" हितमपि मितं, न तु न्यूनमधिकं वा, तदपि 'पथ्यं' आरोग्यजनकं, अत एव गर्भपोषणं, तदपि 'देशे' भोजनोचितस्थाने, न त्वाकाशादौ 'काले' भोजनसमये, न तु अकाले, एवमाहारमाहारयन्ती तथा, 'विविक्तैः' जनसङ्कीर्णतारहितैर्मृदुकैश्च शयनासनैस्तथा 'प्रतिरिक्ता' अन्यजनापेक्षया निर्जना, अत एव 'सुखा' सुखकारिणी, एवंविधा या मनोऽनुकूला तया 'विहारभूम्या' चङ्क्रमणासनादिभूम्या तं गर्भं पोषयति । पुनः कथम्भूता त्रिशला ?, 'प्रशस्ताः' प्रधाना 'दोहदा' गर्भानुभावेनोद्भूता मनोरथा यस्याः, ते चैवम्—

"जानात्यमारिपटहं पटु घोषयामि, दानं ददामि सुगुरून् परिपूजयामि । तीर्थेश्वरार्चनमहं रचयामि सङ्घे, वात्सल्यमुत्सवभृतं बहुधा करोमि ॥ १ ॥ निष्कास्य कारागृहतो वराकान्, मलीमसान् किं स्नपयामि सद्यः । बुभुक्षितान् तानथ भोजयित्वा, विसर्जयामि स्वगृहेषु तुष्टा ॥ २ ॥ सिंहासने समुपविश्य धरातपत्रा, संवीज्य-

उण्हेहिं नाइतित्तेहिं नाइकडुएहिं नाइकसाएहिं नाइअंबिलेहिं नाइमहुरेहिं नाइनिद्धेहिं नाइलुक्खेहिं नाइउल्लेहिं नाइसुक्केहिं, सव्वत्तुगभयमाणसुहेहिं भोयणाच्छायणगंधमल्लेहिं, ववगयरोगसोगमोहभयपरिस्समा सा जं तस्स गब्भस्स हिअं मियं पत्थं गब्भपोसणं, तं देसे

सती तं गर्भं नातिशीतैर्नात्युष्णैर्नातितिक्तैर्नातिकटुकैर्नातिकषायैर्नात्यम्लैर्नातिमधुरैर्नातिस्निग्धैर्नातिरूक्षैर्नात्यार्द्रैर्नातिशुष्कैः, सर्वर्त्तुषु 'भज्यमानाः' सेव्यमाना ये "सुखाः" सुखकारिणस्तैः, यथा चोक्तं—"वर्षासु लवणममृतं, शरदि जलं गोपयश्च हेमन्ते । शिशिरे चामलकरसो, घृतं वसन्ते गुडश्चान्ते ॥ १ ॥" एवंविधैर्भोजनाच्छादनगन्धमाल्यैस्तं गर्भं पोषयतीति शेषः । यतो नातिशीतलाद्याहारादयो गर्भस्य हिताः, ते हि केचिद्वातिकाः केचित्पैत्तिकाः केचिच्छ्लेष्मकराश्च भवन्ति, अतो गर्भस्याहिताः, यदुक्तम्—"वातलैश्च भवेद्गर्भः, कुब्जान्धजडवामनः । पित्तलैः खलतिः[1] पिङ्गः[2] श्वित्री[3] पाण्डुः कफात्मभिः ॥ १ ॥" तथा—"अत्युष्णं हरति बलं, ह्यतिशीतं मारुतं प्रकोपयति । अतिलवणमचाक्षुष्य-मतिस्नेहं दुर्जरं भवति ॥ १ ॥" अतो नातिशीतलाद्यैस्तं गर्भं सा पोषयतीति युक्तम् । पुनः सा त्रिशला कथम्भूता ? 'रोगाः' ज्वराद्याः, 'शोकः' इष्टवियोगादिजनितः 'मोहो' मूर्च्छा 'भयं' भीतिः 'परिश्रमो' व्यायामः, एते व्यपगता यस्याः, रोगादिरहितेति भावः । यतस्ते गर्भस्याहिताः, तदुक्तं सुश्रुते वैद्यकग्रन्थे (शारीरस्थाने अ. २।२६)—"दिवा स्वपन्त्याः स्त्रियाः स्वापशीलो गर्भः, अञ्जनादन्धः, रोदनाद्विकृतदृष्टिः, स्नानानुलेपनाद्दुश्शीलः, तैलाभ्यङ्गात्कुष्ठी, नखापकर्त्तनात्कुनखी, प्रधावनाच्चञ्चलः, हसनात् श्या[म]वदन्तौष्ठतालुजिह्वः, अतिकथनाच्च

१ खल्वाटः । २ दीपशिखावर्णवद्वर्णवान् । ३ चित्रं—पाण्डुरं कुष्ठं, तद्वान् ।

अ काले अ आहारमाहारेमाणी, विवित्तमउएहिं सयणासणेहिं, पइरिक्कसुहाए मणोऽणुकूलाए विहारभूमीए, पसत्थदोहला संपुण्ण

प्रलापी, अतिशब्दश्रवणाद्बधिरः, अवलेखनात्खलतिः [ विरलकेशत्वं ], [ व्यजनक्षेपणादि ] मारुतायाससेवनादुन्मत्तः स्यात्" । तथा च कुलवृद्धाः त्रियस्त्रिशलां शिक्षयन्ति—"मन्दं सञ्चर मन्दमेव निगद व्यामुञ्च कोपक्रमं, पथ्यं भुङ्क्ष्व बधान नीविमनघां मामाऽट्टहासं कृथा । आकाशे भव मा शयिष्व शयने नीचैर्बहिर्गच्छ मा, देवी गर्भभरालसा निजसखीवृन्देन सा शिक्ष्यते ॥ १ ॥" एवंविधा सा—त्रिशला यत्तस्य गर्भस्य 'हितं' मेधावृद्ध्यादिगुणकरं, यथा—"सर्वे बुद्धिप्रदा गौल्याः, सर्वे क्षारा मलापहाः । काषाय्या रञ्जकाः सर्वे, सर्वे अम्ला विषोपमाः ॥ १ ॥" हितमपि मितं, न तु न्यूनमधिकं वा, तदपि 'पथ्यं' आरोग्यजनकं, अत एव गर्भपोषणं, तदपि 'देशे' भोजनोचितस्थाने, न त्वाकाशादौ 'काले' भोजनसमये, न तु अकाले, एवमाहारमाहारयन्ती तथा, 'विविक्तैः' जनसङ्कीर्णतारहितैर्मृदुकैश्च शयनासनैस्तथा 'प्रतिरिक्ता' अन्यजनापेक्षया निर्जना, अत एव 'सुखा' सुखकारिणी, एवंविधा या मनोऽनुकूला तया 'विहारभूम्या' चङ्क्रमणासनादिभूम्या तं गर्भं पोषयति । पुनः कथम्भूता त्रिशला ?, 'प्रशस्ताः' प्रधाना 'दोहदा' गर्भानुभावेनोद्भूता मनोरथा यस्याः, ते चैवम्—

"जानात्यमारिपटहं पटु घोषयामि, दानं ददामि सुगुरून् परिपूजयामि । तीर्थेश्वरार्चनमहं रचयामि सङ्घे, वात्सल्यमुत्सवभृतं बहुधा करोमि ॥ १ ॥ निष्कास्य कारागृहतो वराकान्, मलीमसान् किं स्नपयामि सद्यः । बुभुक्षितान् तानथ भोजयित्वा, विसर्जयामि स्वगृहेषु तुष्टा ॥ २ ॥ सिंहासने समुपविश्य वरातपत्रा, संवीज्य-

दोहला सम्माणियदोहला अविमाणिअदोहला वुच्छिन्नदोहला ववणीअदोहला, सुहंसुहेणं आसइ सयइ चिट्ठइ निसीअइ तुयट्टइ विहरइ, सुहंसुहेणं तं गब्भं परिवहइ ॥ ९७ ॥

---

मानकरणा सितचामराभ्यां । आज्ञेश्वरत्वमुदिताऽनुभवामि सम्यग्, भूपालमौलिमणिलालितपादपीठा ॥ ३ ॥ आरुह्य कुञ्जरशिरः प्रचलत्पताका, वादित्रनादपरिपूरितदिग्विभागा । लोकैः स्तुता जय जयेति रवैः प्रमोदा-दुद्यानकेलिमनघां कलयामि जाने ॥ ४ ॥ समुद्रपानेऽमृतचन्द्रपाने, दाने तथा दैवतभोजने च । इच्छा सुगन्धेषु विभूषणेषु, अभूच्च तस्या वरपुण्यकृत्यैः ॥ ५ ॥"

ततः 'सम्पूर्णदोहदा' सिद्धार्थराजेन सर्वमनोरथानां पूरितत्वात्तथा तेन पूरयितुमशक्यानां इन्द्रेण पूरितत्वात्, यथा चैकदा इन्द्राण्याः कुण्डलयुगलं बलादगृहीत्वाऽहं परिदधामीतीच्छा त्रिशलाया अभवत्, तां च शक्रः समागत्य दुर्गरचनापुरस्सरं सिद्धार्थेन सह युद्धं कुर्वन् स्वयमेव हारयित्वा पूरितवान् ।

अतः सम्मानितदोहदा प्राप्ताभिलषितत्वेन तेषां निवर्त्तितत्वात् 'अविमानितदोहदा' कस्यापि दोहदस्यावगणनाभावात् क्षणमपि नापूर्णमनोरथा 'व्युच्छिन्नदोहदा' त्रुटिताकाङ्क्षा, अतो 'व्यपनीतदोहदा' सर्वथाऽसद्दोहदा सती 'सुखंसुखेन' गर्भानाबाधया 'आश्रयति' आश्रयणीयं स्तम्भादिकमवलम्बते 'शेते' निद्रायति, तिष्ठति ऊर्ध्वं, 'निषीदति' उपविशत्यासनादौ 'त्वग्वर्त्तयति' निद्रां विना शय्यायां शेते 'विहरति' कुट्टिमे विचरति, एवं सुखंसुखेन तं गर्भं परिवहति ।

ते णं काले णं ते णं समए णं समणे भगवं महावीरे जेसे गिम्हाणं पढमे मासे दुच्चे पक्खे, चित्तसुद्धे, तस्स णं चित्तसुद्धस्स तेरसीदिवसेणं, नवण्हं मासाणं बहुपडिपुन्नाणं अद्धऽट्ठमाणं राइंदियाणं विइक्कंताणं, उच्चट्ठाणगएसु गहेसु, पढमे चंदजोए, सोमासु दिसासु

९८–तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरो योऽसौ 'ग्रीष्मस्य' उष्णकालस्य प्रथमो मासो द्वितीयः पक्षश्चैत्रशुद्धः, तस्य चैत्रशुद्धस्य त्रयोदशीदिवसे नवसु मासेषु बहुप्रतिपूर्णेषु 'अर्द्धाष्टमेषु' सार्धसप्तसु 'रात्रिन्दिवेषु' अहोरात्रेषु, अधिकेषु इति शेषः, व्यतिक्रान्तेषु, यदुक्तं–"दुण्हं × वरमहिलाणं, गब्भे वसिऊण गब्भसुकुमालो । नवमासे पडिपुन्ने, सत्त य दिवसे समइरेगे ॥ १ ॥" इदं च गर्भस्थितिमानं न सर्वेषां जिनानां तुल्यं, तथा चोक्तं सप्ततिशतस्थानके–"दु-चउत्थ-नवम-बारस–तेरस-पन्नरस-सेस(१८)गब्भट्ठिई । मासा अड नव तदुवरि, उसहाउ कमेणिमे दिवसा ॥ १ ॥ चउ-पणवीसं छद्दिण, अडवीसं छच्चे छच्चिगुणवीसं । संग-छेवीसं छच्चे य, [12]वीसि-[13]गंवीसं [14]छ [15]छवीसं ॥ २ ॥ छ-पण अड सत्तऽट्ठ य, अडऽट्ठ य छ सत्त होंति गब्भदिणा ।" इति ॥

| जिनाः | ऋषभ | अजित | संभव | अभि० | सुमति | पद्म० | सुपार्श्व | चन्द्र० | सुविधि | शीतल | श्रेयांस | वासु० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मा०दि० | ९।४ | ८।२५ | ९।६ | ८।२८ | ९।६ | ९।६ | ९।१९ | ९।७ | ८।२६ | ९।६ | ९।६ | ८।२० |
| जिनाः | विमल | अनंत | धर्म | शांति | कुन्थु | अर | मल्लि | मुनि० | नमि | नेमि | पार्श्व | वीर |
| मा०दि० | ८।२१ | ९।६ | ८।२६ | ९।६ | ९।५ | ९।८ | ९।७ | ९।८ | ९।८ | ९।८ | ९।६ | ९।७ |

× द्वयोर्वरमहिलयो-र्गर्भे उषित्वा गर्भसुकुमारः । नवमासान् प्रतिपूर्णान्, सप्त च दिवसान्समतिरेकान् ॥ १ ॥

वितिमिरासु विसुद्धासु, जइएसु सव्वसउणेसु, पयाहिणाणुकूलंसि भूमिसप्पंसि मारुयंसि पवायंसि, निप्फन्नमेइणीयंसि कालंसि, पमु-

पुनः उच्चस्थानं 'गतेषु' प्राप्तेषु ग्रहेषु, ग्रहाणामुच्चस्थानान्येवं-"अर्काद्युच्चान्यजं-वृषं-मृग-कन्या-कर्क-मीन-वणिजोंऽशैः। दिग्-दहना-ष्टाविंशति-तिथी-षु-नक्षत्र-विंशतिभिः ॥ १ ॥"

| राशयः | ग्रहाः | अंशाः |
|---|---|---|
| मेषः | सूर्यः | १० |
| वृषः | चन्द्रः | ३ |
| मकरः | मंगलः | २८ |
| कन्या | बुधः | १५ |
| कर्कः | गुरुः | ५ |
| मीनः | शुक्रः | २७ |
| तुला | शनिः | २० |

अयम्भावः-मेषादिराशिगताः सूर्यादयो ग्रहा उच्चास्तत्रापि दशादीनंशान् यावत्परमोच्चाः। फलं त्वेतेषां-"सुखी भोगी धनी नेता, जायते मण्डलाधिपः। नृपतिश्चक्रवर्त्ती च, क्रमादुच्चग्रहे फलम् ॥ १ ॥ × तिहिं उच्चेहिं नारिंदो, पंचहिं तह होइ अद्धचक्की अ। छहिं होइ चक्कवट्टी, सत्तहिं तित्थंकरो होइ ॥ २ ॥" तथा "त्रिभिर्नीचैर्भवेद्दासस्त्रिभिरुच्चैर्नराधिपः। त्रिभिः स्वस्थानगैर्मन्त्री, त्रिभिरस्तमितैर्जडः ॥ ३ ॥" पुनः 'प्रथमे' प्रधाने चन्द्रयोगे प्राप्ते सति, 'सौम्यासु' रजोवृष्ट्यादिरहितत्वात् शान्तासु दिक्षु, वर्त्तमानासु इति शेषः, पुनः 'वितिमिरासु' अन्धकाररहितासु, भगवज्जन्मसमये सर्वत्रोद्योतसद्भावात्, यदुक्तं स्थानाङ्गे-"तिहिं ठाणेहिं लोगु(देवु)ज्जोए सिया, तं जहा-अरहंतेहिं जायमाणेहिं, अरहंतेसु पव्वयमाणेसु, अरहंताणं णाणुप्पायमहिमासु" *। न हि गर्भाधाने निर्वाणेऽपि चावश्यम्भावेनोद्योतभवनं स्वीकृतं कैरपि

× त्रिभिरुच्चैर्नरेन्द्रः, पञ्चभिस्तथा भवत्यर्धचक्री च। षड्भिर्भवति चक्रवर्त्ती, सप्तभिस्तीर्थङ्करो भवति ॥ १ ॥ * एतेन सिद्धं यदर्हतां गर्भाधानादिपञ्चस्वपि कल्याणकेष्ववश्यंभावेन सर्वत्रोद्योतो भवतीति मतं सूत्रोत्तीर्णवादिनां, तथा च यस्मिन्नोद्योतस्तन्न कल्याणकमित्यपि मतमपाकृतमेव ।

अयणमिणिप्पत्तेसु जणवएसु, पुव्वरत्तावरत्तकालसमयंसि, हत्थुत्तराहिं नक्खत्तेणं चंदे णं जोगमुवागए णं, आरुग्गा आरुग्गं दारयं पयाया ॥२८॥

शास्त्रकारैरिति । पुनर्विशुद्धासु दिग्दाहाद्यभावात् । पुनः 'जयिकेषु' जयकरेषु 'सर्वेषु' काकोलूकदुर्गादिजल्पनप्रभृतिषु 'शकुनेषु' भाव्यर्थसूचकनिमित्तेषु सत्सु, पुनः 'प्रदक्षिणे' प्रदक्षिणावर्त्तिनि 'अनुकूले' सुरभिशीतत्वात्सुखप्रदे तथा मृदुत्वाद्भूमिसर्पिणि, चण्डवातो ह्युच्चैस्सर्पति, ईदृशे मारुते प्रवातुमारब्धे सति, तथा 'निष्पन्नमेदिनीये' उत्पन्नसर्वशस्या मेदिनी यत्र, एवंविधे काले सति 'प्रमुदितेषु' सुभिक्षादिना हर्षितेषु, अत एव 'प्रक्रीडितेषु' वसन्तोत्सवादिना क्रीडितुमारब्धेषु 'जनपदेषु' देशवासिजनेषु सत्सु, पूर्वरात्रापररात्रकालसमये हस्तोत्तराभिस्समं योगमुपागते चन्द्रे सति 'आरोग्या' व्याबाधारहिता त्रिशला 'आरोग्यं' बाधारहितं 'दारकं' पुत्रं 'प्रजाता' सुषुवे इति भावः ।

इति श्रीपर्युषणाकल्पावचूर्यन्तर्वाच्यादिविविधव्याख्यासुपजीव्य प्रवचनप्रभावकश्रीखरतरगच्छनभोनभोमणि–क्रियोद्धारक–श्रीमन्मोहनमुनीश्वरविनेयविनेयानुयोगाचार्य–श्रीमत्केशरमुनिजीगणिवरसंगृहीतायां कल्पार्थबोधिनीनामपर्युषणाकल्पव्याख्यायां प्रभोर्जन्मकल्याणकव्यावर्णनबन्धुरं चतुर्थं व्याख्यानम् ।

ग्रं० १०३–२–३ मूलं, २८४–२–३ वृत्तिः, ४२–२–० टि० नं० १, १०–०–७ टि० नं० २, ६–१–३ टि० नं० ३, सर्वाग्रेण ४४७–१–०, चतुर्णामपि व्या० २६६६–०–६ । ( एवैव शुद्धा गणना, स्खलनायुतत्वात्प्राग्वर्त्तिव्याख्यानत्रयस्य गणनायाः )

नाम्ना 'मोहनलाले'ति, प्रसिद्धा जगतीतले । खरतरगणोत्तंसा, जैनशासनभूषणाः ॥ १ ॥

## ॥ इति कल्पार्थबोधिन्याश्चतुर्थं व्याख्यानम् ॥

तेषां प्रशिष्यपंन्यास–गणि'केशर'सन्मुनेः । शिष्यं बुद्ध्यब्धिनामानं, भद्रं तन्वन्तु तेऽन्वहम् ॥ २ ॥ युग्मम् ।

# अथ पञ्चमं व्याख्यानम्—

जं रयणिं च णं समणे भगवं महावीरे जाए, सा णं रयणी बहूहिं देवेहिं देवेहि य ओवयंतेहिं उप्पयंतेहि य उप्पिंजलमाणभूआ कहकहगभूआ आवि हुत्था ॥ ९९ ॥

९९—यस्यां रजन्यां श्रमणो भगवान् महावीरो जातः, सा रजनी बहुभिर्देवैः शक्रादिभिर्बह्वीभिर्देवीभिश्च दिक्कुमार्यादिभिः 'अवपतद्भिः' जन्मोत्सवार्थं स्वर्गाद्भुवमवतरद्भिः 'उत्पतद्भिः' मेरुशिखरादौ गमनायोर्द्ध्वं गच्छद्भिः भूतशब्दस्योपमानार्थत्वाद् 'उत्पिञ्जलन्तीव' भृशमाकुला इव 'कहकहकभूतेव' हर्षाट्टहासादिनाऽव्यक्तवर्णकोलाहलमयीवाभवत्। अनेन च सूत्रेण दिक्कुमार्यादिदेवकृतः सविस्तरो जन्मोत्सवः सूचितः, स चैवम्—

"उद्योतस्त्रिजगत्यासीद्, दध्वान दिवि दुन्दुभिः। नारका अप्यमोदन्त, भूरप्युच्छ्वासमासदत् ॥ १ ॥"

तत्रादौ जन्मोत्सवे पूर्वं षट्पञ्चाशद्दिक्कुमार्यः समागत्य शाश्वतिकं स्वाचारं कुर्वन्ति, तद्यथा—

"अधोलोककृतावासा-स्ततोऽष्टौ दिक्कुमारिकाः। समीयुस्त्रिशलादेव्याः, संमदाः सूतिमन्दिरम् ॥ २ ॥"

"भोगङ्करा भोगवती, सुभोगा भोगमालिनी। सुवत्सा वत्समित्रा च, पुष्पमाला त्वनिन्दिता ॥ ३ ॥"

"नत्वा प्रभुं तदम्बां चे-शाने सूतिगृहं व्यधुः। संवर्त्तेनाशोधयन्क्ष्मा-मायोजनमितो गृहात् ॥ ४ ॥"

"मेघङ्करा मेघवती, सुमेघा मेघमालिनी। तोयधारा विचित्रा च, वारिषेणा बलाहिका ॥ ५ ॥"

"तीर्थकृत् तीर्थकृन्मात्रो-स्तास्तथैव नतिस्तुती। कृत्वा विचक्रिरे मेघान्, पुण्यारामम्मदप्रदान् ॥ ६ ॥"

"अथ नन्दो-त्तरानन्दे, आनन्दा-नन्दिवर्द्धने। विजया वैजयन्ती च, जयन्ती चापराजिता ॥ ५ ॥"

एताः पूर्वरुचकपर्वतादेत्य विलोकनार्थमग्रे दर्पणं धरन्ति।

"समाहारा सुप्रदत्ता, सुप्रबुद्धा यशोधरा। लक्ष्मीवती शेषवती, चित्रगुप्ता वसुन्धरा ॥ ६ ॥ एता जिनं जिनाम्बां च, नत्वाऽऽत्मानं निवेद्य च। तस्थुर्भृङ्गारशृङ्गार-पाणयो दक्षिणेन तु ॥ ७ ॥ आययुर्दिक्कुमार्योऽष्ट, पश्चिमरुचकाद्रितः। प्रेरिताः प्रियसख्येव, भक्त्या सेवाकृते प्रभोः ॥ ८ ॥ इलादेवी सुरादेवी, पृथिवी पद्मवत्यपि। एकनासा नवमिका, भद्रा शीतेति सञ्ज्ञिताः ॥९॥ कृत्वा नतिं स्वमाख्याय, प्राग्वज्जिन-जिनाम्बयोः। गायन्त्यः पश्चिमेनैता, हस्तस्थव्यजनाः स्थिताः ॥१०॥ अष्ट दिक्कन्यकाश्चेयु-रौदीच्यरुचकाद्रितः। यानैरतिमनोयोगै-राभियोगिकयोगतः ॥ ११ ॥ अलम्बुसा मिश्रकेशी, पुण्डरीका च वारुणी। हासा सर्वप्रभा ह्री श्री-रित्याह्वानसमन्विताः ॥१२॥ प्राग्वत्प्रभुं प्रभोरम्बां, नत्वाऽऽत्मानं निवेद्य ताः। गायन्त्यश्चामरकरा, उत्तरेणावतस्थिरे ॥१३॥ दिक्कन्या विदिग्रुचका-द्रिभ्योऽभ्येयुश्चतुर्मिताः। चित्रा चित्रकनका स-तेजाः सौदामिनी तथा॥१४॥"

एता ईशानादिविदिक्षु स्थिता दीपहस्ता भगवद्गुणान् गायन्ति।

"रुचकद्वीपतोऽभ्येयु-श्चतस्रो दिक्कुमारिकाः। रूपा रूपासिका चापि, सुरूपा रूपकावती ॥ १५ ॥ चतुरङ्गुलतो नालं, छित्त्वा खातोदरेऽक्षिपन्। समापूर्य च वैडूर्यै-स्तस्योर्ध्वं पीठमादधुः ॥ १६ ॥ बद्ध्वा तद्दूर्वया जन्मगेहाद्रम्भागृहत्रयम्। ताः पूर्वस्यां दक्षिणस्या-मुत्तरस्यां व्यधुस्ततः ॥ १७ ॥ याम्यरम्भागृहे नीत्वा-ऽभ्यङ्ग

तेनुस्तु तास्तयोः । स्नानचर्चांशुकालङ्का-रादि पूर्वगृहे ततः ॥ १८॥ उत्तरेऽरणिकाष्ठाभ्या-मुत्पाद्याग्निं सुचन्दनैः ।
होमं कृत्वा बबन्धुस्ता, रक्षापोट्टलिकां द्वयोः ॥१९॥ पर्वतायुर्भवेत्युक्त्वा-ऽऽस्फालयन्त्योऽश्मगोलकौ । जन्मस्थानं
च नौ नीत्वा, स्वस्वदिक्षु स्थिता जगुः ॥२०॥ अर्हतोऽर्हज्जनन्याश्च, गुणैर्गौरवितानि ताः । गायन्त्यो मङ्गलान्युच्चै-
रासीनास्तस्थुरुन्मुदा ॥ २१ ॥"

"सामानिकानां प्रत्येकं, चत्वारिंशच्छतैर्युताः । महत्तराभिः प्रत्येकं, तथा चतसृभिर्युताः ॥ २२ ॥"

"अङ्गरक्षैः षोडशभिः, सहस्रैः सप्तभिस्तथा । कटकैस्तदधीशैश्च, सुरैश्चान्यैर्महर्द्धिभिः ॥ २३ ॥"

परिवृता आभियोगिकदेवकृतैर्योजनोन्मितैर्विमानैरत्रायान्तीति दिक्कुमारिकाकृतो जन्मोत्सवः ।

"ततः सिंहासनं शाक्रं, चचालाचलनिश्चलम् । प्रयुज्याथावधिं ज्ञात्वा, जन्मान्तिमजिनेशितुः ॥ २४ ॥"

"वर्ज्यैकयोजनां घण्टां, सुघोषां नैगमेषिणा । अवादयत्ततो घण्टा, रेणुः सर्वविमानगाः ॥२५॥" युग्मम् ॥

"शक्रादेशं ततः सोच्चैः, सुरेभ्योऽज्ञापयत्स्वयम् । तेन प्रमुदिता देवा-श्चलनोपक्रमं व्यधुः ॥ २६ ॥"

"पालकाख्यामरकृतं, लक्षयोजनसम्मितम् । विमानं पालकं नामा-ऽध्यारोहत्त्रिदशेश्वरः ॥ २७ ॥"

तत्र पालकविमाने तावदिन्द्रसिंहासनाग्रेऽग्रमहिषीणामष्टौ भद्रासनानि, वामे चतुरशीतिसहस्रसामानिकानां
तावन्ति भद्रासनानि, दक्षिणे द्वादश-चतुर्दश-षोडशसहस्राणामाभ्यन्तर-मध्यम-बाह्यपार्षद्देवानां तावन्ति २,
सर्वमीलने च द्विचत्वारिंशत्सहस्राणि भद्रासनानि, पृष्ठे सप्तानीकाधिपानां सप्त भद्रासनानि, मध्ये शक्रासनं, ततः ।

"पुरतोऽग्रमहिष्योऽष्टौ, वामे सामानिकाः सुराः । दक्षिणे त्रिसभादेवाः, सप्तानीकानि पृष्ठतः ॥ २८ ॥ अन्यैरपि घनैर्देवै-र्वृतः सिंहासनस्थितः । गीयमानगुणोऽचाली-दपरेऽपि सुरास्ततः ॥ २९ ॥ देवेन्द्रशासनात्के-चित्, केचिन्मित्रानुवर्त्तनात् । पत्नीभिः प्रेरिताः केचित्, केचिदात्मीयभावतः ॥ ३० ॥ केऽपि कौतुकतः केऽपि, विस्मयात्केऽपि भक्तितः । चेलुरेवं सुराः सर्वे, विविधैर्वाहनैर्युताः ॥ ३१ ॥ विविधैस्तूर्यनिर्घोषै-र्घण्टानां क्वणितैरपि । कोलाहलेन देवानां, शब्दाद्वैतं तदाऽजनि ॥ ३२ ॥ सिंहस्थो वक्ति हस्तिस्थं, दूरे स्वीयं गजं कुरु । हनिष्यत्यन्यथा नूनं, दुर्द्धरो मम केसरी ॥ ३३ ॥ वाजिस्थं कासरारूढो, गरुडस्थो हि सर्पगम् । छागस्थं चित्रकस्थोऽथ, वदत्येवं तदाऽऽदरात् ॥ ३४ ॥ सुराणां कोटिकोटीभि-र्विविधैर्वाहनैर्घनैः । विस्तीर्णोऽपि नभोमार्गो-ऽतिसङ्कीर्णोऽभवत्तदा ॥ ३५ ॥ मित्रं केऽपि परित्यज्य, दक्षत्वेनाग्रतो ययुः । प्रतीक्षस्व क्षणं भ्रात-र्मामन्त्र्येत्य-परोऽवदत् ॥ ३६ ॥ केचिद्वदन्ति भो देवाः !, सङ्कीर्णाः पर्ववासराः । भवन्त्येवंविधा नूनं, तस्मान्मौनं विधत्त भोः ! ॥ ३७ ॥ नभस्यागच्छतां तेषां, शीर्षे चन्द्रकरैः स्थितैः । शोभन्ते निर्जरास्तत्र, सजरा इव केवलम् ॥३८॥ नन्दीश्वरे विमानानि, सङ्क्षिप्यागात्सुराधिपः । जिनेन्द्रं च जिनाम्बां च, त्रिः प्रादक्षिणयत्ततः ॥ ३९ ॥ वन्दित्वा च नमस्यित्वे-त्येवं देवेश्वरोऽवदत् । नमोऽस्तु ते रत्नकुक्षि-धारिके ! विश्वदीपिके ! ॥४०॥ सूनोर्जन्म-महं कर्त्तु-महं ते चरमार्हतः । सौधर्मेन्द्रः समेतोऽस्मि, न भेतव्यं शुभे ! त्वया ॥ ४१ ॥ इत्युक्त्वा त्रिशलायां च, शक्रोऽवस्वापिनीं ददौ । तत्पार्श्वे च प्रभोश्चक्रे, प्रतिच्छन्दममन्दधीः ॥ ४२ ॥ भगवन्तं तीर्थंकरं, गृहीत्वा

करसम्पुटे । विचक्रे पञ्चधा रूपं, सर्वश्रेयोऽर्थिकः स्वयम् ॥ ४३ ॥ एको गृहीततीर्थेशः, पार्श्वे द्वौ चात्तचामरौ । एको गृहीतातपत्रः, एको वज्रधरः पुनः ॥४४॥ अग्रगः पृष्ठगं स्तौति, पृष्ठस्थोऽप्यग्रगं पुनः । नेत्रे पश्चात्समीहन्ते, केचनाग्रेतनाः सुराः ॥४५॥ शक्रः सुमेरुशृङ्गस्थं, गत्वाऽथो पाण्डुकं वनम् । मेरुचूलादक्षिणेना–तिपाण्डुकम्बलासने ॥४६॥ कृत्वोत्सङ्गे जिनं पूर्वा–भिमुखोऽसौ निषीदति । समस्ता अपि देवेन्द्राः, स्वामिपादान्तमेयरुः ॥४७॥”

तत्र दश वैमानिकाः, विंशतिर्भवनपतयः, द्वात्रिंशद्व्यन्तराः, द्वौ ज्योतिष्काविती‍न्द्राणां चतुःषष्टिः ।

“सौवर्णा राजता रात्नाः, स्वर्णरूप्यमया अपि । स्वर्णरत्नमयाश्चापि, रूप्यरत्नमया अपि ॥ ४८ ॥”

“स्वर्णरूप्यरत्नमया, अपि मृत्स्नामया अपि । कुम्भाः प्रत्येकमष्टाढ्यं, प्रत्येकं योजनाननाः ॥ ४९ ॥”

गडुकम्–×“पणवीसजोअणतुंगो, बारस य जोअणाइं वित्थारो । जोअणमेगं नालुअ, इगकोडी सट्ठिलक्खाइं ॥५०॥”

एवमेवाष्टाष्टप्रकाराणि प्रत्येकमष्टोत्तरसहस्राणि भृङ्गार-दर्पणादिसर्वाण्यपि पूजोपकरणान्यकारयदानाययच्च मागधादितीर्थानां मृदं जलं च, गङ्गादीनां पद्महृदादीनां च पद्मानि जलं च, क्षुल्लहिमवद्वर्षधर-वैताढ्य-विजय-वक्षस्कारादिभ्यः सिद्धार्थपुष्पगन्धान् सर्वौषधीश्च आभियोगिदेवैरच्युतेन्द्रः । ततः—

“क्षीरनीरघटैर्वक्षः–स्थलस्थैस्त्रिदशा बभुः । संसारौघं (जलवेगं) तरीतुं द्राग्, धृतकुम्भा इव स्फुटम् ॥५१॥”

शक्र–“कालभावाल्लघुतनुः, स्वस्वभक्त्या सुरैः कृतम् । इयद्भिरुदकैः स्नात्रं, कथं स्वामी सहिष्यते ? ॥ ५२ ॥”

---

× पञ्चविंशतियोजनोच्चत्वं, द्वादश च योजनानि विस्तारः । योजनमेकं नालकं, एका कोटिः षष्टिलक्षाः ॥ १ ॥

"इति क्लृप्तां हरेः शङ्कां, हर्त्तुं मेरुगिरिं प्रभुः । लीलयाऽचालयद्वाम-पादाङ्गुष्ठाग्रपीडनात् ॥ ५३ ॥"
"तद्विज्ञायावधिज्ञानात्, प्रभोर्लीलायितं हरिः । स्वामिन्! मिथ्या वितर्कं मे, क्षमस्वेति ननाम च ॥५४॥"
अत्र कविः–"सङ्ख्याऽतीतार्हतां मध्ये, स्पृष्टः केनाऽपि नांह्रिणा । मेरुः कम्पमिषादित्या-नन्दादिव ननर्त्त सः॥५५॥"
यतः–"शैलेषु राजता मेऽभूत्, स्नात्रनीराभिषेकतः । तेनामी निर्जरा हाराः, स्वर्णापीडो जिनस्तथा ॥ ५६ ॥"
"तत्र पूर्वमच्युतेन्द्रो, विदधात्यभिषेचनम् । ततोऽनुपरिपाटीतो, यावच्चन्द्रार्यमादयः ॥५७॥" जलस्नात्रे कविघटना–
"श्वेतच्छत्रायमाणं शिरसि सुखशशिन्यंशुपूरायमाणं, कण्ठे हारायमाणं वपुषि च निखिले चीनचोलायमानम् । श्रीमज्जन्माभिषेकप्रगुणहरिगणोदस्तकुम्भौघगर्भाद्, भ्रश्यद्दुग्धाब्धिपाथश्चरमजिनपतेरङ्गसङ्गि श्रिये वः ॥५८॥"
"चतुर्वृषभरूपाणि, शक्रः कृत्वा ततः स्वयम् । शृङ्गाष्टकक्षरत्क्षीरै–रकरोदभिषेचनम् ॥५९॥ सत्यं ते विबुधा देवा, यैरन्तिमजिनेशितुः । सृजद्भिः सलिलैः स्नात्रं, स्वयं नैर्मल्यमादधे ॥ ६० ॥ समङ्गलप्रदीपं ते, विधायारात्रिकं पुनः । सनृत्यगीतवाद्यादि, व्यधुर्विविधमुत्सवम् ॥६१॥ उन्मृज्य गन्धकाषाय्या, दिव्ययाऽङ्गं हरिर्विभोः । विलिप्य चन्दनाद्यैश्च, पुष्पाद्यैस्तमपूजयत् ॥६२॥ दर्पणो वर्द्धमानश्च, कलशो मीनयोर्युगम् । श्रीवत्सः स्वस्तिको नन्द्या–वर्त्त-भद्रासने इति ॥ ६३ ॥ अनन्तमङ्गलासङ्ग–चङ्गस्याप्यष्टमङ्गलीम् । लेखाग्रणीर्लिलेखाग्रे, भक्तिव्यक्त्या जगत्प्रभोः ॥ ६४ ॥ युग्मम् । इलातलमिलन्मौलिः, पौलोमीवल्लभः प्रभुम् । स्तुत्वा शक्रस्तवेनेति, पुनः स्तोतुं प्रचक्रमे ॥ ६५ ॥ नमस्ते विश्वदीपाय, नमस्ते विश्वशासिने । नमस्ते विश्वनाथाय, नमस्ते चरमार्हते ॥ ६६ ॥

जं रयणिं च णं समणे भगवं महावीरे जाए तं रयणिं च णं बहवे वेसमणकुंडधारीतिरियंजंभगा देवा सिद्धत्थरायभवणंसि हिरण्णवासं च सुवण्णवासं च वयरवासं च वत्थवासं च आभरणवासं च पत्तवासं च पुप्फवासं च फलवासं च बीअवासं च मल्लवासं च

---

यत्र त्वं भरतक्षेत्रे, धर्मकल्पद्रुमोऽभवः । कल्पकल्पद्रुमेशानां, प्रभो ! सेव्यं बभूव तत् ॥ ६७ ॥ यत्र त्वं कालचक्रारे, जातश्चरमतीर्थकृत् । एषोऽरेषु चतुर्थोऽपि, प्रथमः कथमस्तु मा ? ॥ ६८ ॥ इति स्तुत्वा प्रमोदाश्रुस्तोमो रोमोद्गमं दधत् । ईशानेशाङ्कतः शक्रो, जग्राह त्रिजगत्पतिम् ॥ ६९ ॥ ततश्च जिनमानीय, विमुच्याम्बान्तिके स्फुटं । सञ्जहार प्रतीबिम्बा-वस्वापिन्यौ स्वशक्तितः ॥ ७० ॥ कुण्डले क्षौमयुग्मं चो-च्छीर्षे मुक्त्वा हरिर्न्यधात् । श्रीदामरत्नदामाढ्य-मुल्लोचे स्वर्णकन्दुकम् ॥ ७१ ॥ द्वात्रिंशद्रत्नैरूप्य-कोटिवृष्टिं विरच्य सः । वाऽमाघोषयामास, सुरैरित्याभियोगिकैः ॥ ७२ ॥ स्वामिनः स्वामिमातुश्च, करिष्यत्यशुभं मनः । सप्तधाऽऽर्यमञ्जरीव, शिरस्तस्य स्फुटिष्यति ॥ ७३ ॥ स्वाम्यङ्गुष्ठेऽमृतं न्यस्ये-त्यर्हज्जन्मोत्सवं सुराः । नन्दीश्वरेष्टाहिकां च, कृत्वा जग्मुर्यथाऽऽगतम् ॥ ७४ ॥" इति देवकृतः श्रीमहावीरजन्मोत्सवः ।

१००–यस्यां रजन्यां श्रमणो भगवान् महावीरो जातस्तस्यां रजन्यां बहवो 'वैश्रमणकुण्डधारिणः' धनदाज्ञाधारकास्तिर्यग्जृम्भका देवाः सिद्धार्थराजभवने 'हिरण्यस्य' रूप्यस्य 'वर्षं' वर्षणं तथैव सुवर्णस्य प्रतीतस्य वर्षं 'वज्राणां' हीरकाणां, वस्त्राणां चीनांशुकादीनां, आभरणानां मुकुटादीनां, पत्राणां नागवल्ल्यादेः, पुष्पाणां कुन्दचम्पकादेः, फलानां नालिकेरादेः, बीजानां शाल्यादेः, माल्यानां तथा 'गन्धानां' कोष्ठपुटादीनां 'चूर्णानां'

गंधवासं च चुण्णवासं च वण्णवासं च वसुहारवासं च वासिंसु ॥ १०० ॥

तए णं से सिद्धत्थे खत्तिए भवणवइ-वाणमंतर-जोइस-वेमाणिएहिं देवेहिं तित्थयरजम्मणाभिसेयमहिमाए कयाए समाणीए पच्चूस-कालसमयंसि नगरगुत्तिए सद्दावेइ। सद्दावित्ता एवं वयासी ॥ १०१ ॥

खिप्पामेव भो देवाणुप्पिया! कुंडपुरे नगरे चारगसोहणं करेह। करित्ता माणुम्माणवद्धणं करेह। करित्ता कुंडपुरं नगरं

---

वासयोगादीनां 'वर्णानां' हिङ्गुलादीनां, 'वसुधारायाः' निरन्तरद्रव्यधाराया वर्षं अवर्षयन्।

"अस्मिन्नवसरे राज्ञे, दासी नाम्नी प्रियंवदा। तं पुत्रजननोदन्तं, गत्वा शीघ्रं न्यवेदयत् ॥ १ ॥"

"सिद्धार्थोऽपि तदाकर्ण्य, प्रमोदभरमेदुरः। हर्षगद्गदगी रोमोद्-गमदन्तुरभूघनः ॥ २ ॥"

"विना किरीटं तस्यै स्वां, सर्वाङ्गालङ्कृतिं ददौ। तां धौतमस्तकां चक्रे, दासत्वापगमाय सः ॥ ३ ॥"

१०१–ततः स सिद्धार्थः क्षत्रियः भवनपतिवानव्यन्तरज्योतिष्कवैमानिकैर्देवैस्तीर्थकृज्जन्माभिषेकमहिम्नि कृते सति 'प्रत्यूषकालसमये' प्रातःकाले 'नगरगुप्तिकान्' पुरारक्षकान् शब्दयति। शब्दयित्वा एवमवादीत्।

१०२–क्षिप्रमेव भो देवानुप्रियाः! 'कुण्डपुरे' क्षत्रियकुण्डग्रामे नगरे 'चारकशोधनं' बन्दिमोचनं कुरुत, यतः—

"युवराजाभिषेके च, परराष्ट्रापमर्दने। पुत्रजन्मनि वा मोक्षो, बद्धानां प्रविधीयते ॥१॥" इति राजनीतिः।

तथा कृत्वा मानं–रसधान्यादिविषयमुन्मानं–तुलाविषयं, एतयोः 'वर्द्धनं' प्रमाणवृद्धिं कुरुत। कृत्वा कुण्डपुरं नगरं साभ्यन्तरबाह्यं वक्ष्यमाणविशेषणविशिष्टं कुरुत, स्वयमन्यैश्च कारयत। किंविशिष्टं?, आसिक्तं गन्धो-

सूत्राणि १००-१०२ हिरण्यादिवर्षणं नगरगुप्तिकानामाह्वानं, चारकशोधनादिकं च

मब्भिंतर-बाहिरियं, आसिय-सम्मज्जिओ-वलित्तं, सिंघाडग-तिग-चउक्क-चच्चर-चउम्मुह-महापह-पहेसु सित्त-सुइ-सम्मट्ठ-रत्थंतरा-वणवीहियं मंचाइमंचकलिअं, नाणाविहरागभूसिअज्झयपडागमंडियं, ला[इय]उल्लोइयमहिअं, गोसीस-सरस-रत्तचंदण-दद्दर-दिन्नपंचंगुलितलं, उवचियचंदणकलसं, चंदणघडसुकयतोरणपडिदुवारदेसभागं, आसत्तोसत्त-विपुल-वट्ट-वग्घारिय-मल्लदाम-कलावं, पंचवण्ण-सरस-सुरभि-

---

दकच्छटादानेन, सम्मार्जितं कचवरापनयनेन, उपलिप्तं च छगणादिना। पुनः 'शृङ्गाटकं' त्रिकोणस्थानं 'त्रिकं' मार्गत्रयसङ्गमः 'चतुष्कं' मार्गचतुष्कसङ्गमः 'चत्वरं' अनेकमार्गसङ्गमः, 'चतुर्मुखं' देवकुलादि, 'महापथाः' राजमार्गाः 'पन्थानः' सामान्यपथाः, एतेषु स्थानेषु यानि 'रथ्यान्तराणि' मार्गमध्यानि तथा 'आपणवीथयः' हट्टमार्गाश्च तानि सिक्तानि जलेन, अत एव 'शुचीनि' पवित्रीकृतानि, सम्मृष्टानि कचवरापनयनेन यस्मिन्। पुनः 'मञ्चाः' प्रेक्षणकद्रष्टृणामुपवेशनार्थं रचिता मालकाः, 'अतिमञ्चाः' तेषामप्युपरि मालकास्तैः कलितं। तथा नानाविधरागैः कौसुम्भादिभि'र्भूषिताः' शोभिता ये 'ध्वजाः' सिंहादिरूपोपेता बृहत्पटरूपाः 'पताका'स्ता एव लघ्व्यस्ताभि'र्मण्डितं' विभूषितं। तथा "लाइयं" छगणादिना भूमौ लेपनं "उल्लोइअं" खटिकादिना भित्त्यादिधवलनं, तैः 'महितं' पूजितमिव। गोशीर्षस्य—चन्दनविशेषस्य 'सरसस्य' सद्यस्कस्य रक्तचन्दनस्य दर्दरनामाद्रिजातस्य च चन्दनस्य दत्ताः पञ्चाङ्गुलितलाः—हस्तका यत्र। पुनः 'उपचिताः' स्थापिता गृहान्तश्चतुष्कोणेषु 'चन्दनकलशाः' माङ्गल्यघटा यत्र। तथा चन्दनघटैः सुकृतानि रम्याणि तोरणानि 'प्रतिद्वारदेशभागं' द्वारद्वारस्य देशभागेषु यत्र। 'आसक्तो' भूमिलग्नः 'उत्सक्तः' उपरिलग्नो 'विपुलो' विस्तीर्णो 'वृत्तो' वर्त्तुलः

मुक्कपुप्फपुंजोवयारकलिअं, कालागुरु-पवरकुंदुरुक्क-तुरुक्क-डज्झंत-धूव-मघमघंत-गंधुद्धुआभिरामं, सुगंधवरगंधिअं, गंधवट्टिभूअं, नड-नट्टग-जल्ल-मल्ल-मुट्ठिय-वेलंबग-पवग-कहग-पाढग-लासग-आर[ आइ ]क्खग-लंख-मंख-तूणइल्ल-तुंववीणिय-अणेगतालायराणुचरिअं करेह कारवेह । करित्ता कारवेत्ता य जूअसहस्सं मुसलसहस्सं च उस्सवेह । उस्सवित्ता मम एयमाणत्तिअं पच्चप्पिणेह ॥ १०२ ॥

"वग्घारिय"त्ति प्रलम्बितः पुष्पगृहाकारो माल्यदाम्नां 'कलापः' समूहो यत्र । पञ्चवर्णाः सरसाः सुरभयो ये मुक्ताः पुष्पपुञ्जास्तैर्य 'उपचारो' भूमेः पूजा, तया कलितं । दह्यमाना ये कृष्णागुरुप्रवरकुन्दुरुक्कतुरुष्का धूपास्तेषां मघमघायमानः 'उद्धूतः' प्रसृतो यो गन्धस्तेन 'अभिरामं' मनोहरं। 'सुगन्धवरैः' सुगन्धिचूर्णैः 'गन्धितं' वासितं 'गन्धवृत्तिभूतं' गन्धगुटिकासमानं। तथा 'नटाः' नाटयितारः 'नर्त्तकाः स्वयं नृत्यकर्त्तारः 'जल्लाः' वरत्राखेलकाः, मल्लाः प्रतीताः 'मौष्टिकाः' मुष्टिभिः प्रहारका मल्लविशेषा एव 'विडम्बकाः' विदूषकतया जनानां हास्यकारिणो यद्वा समुखविकारमुत्प्लुत्योत्प्लुत्य नर्त्तकाः 'प्लवकाः' उत्प्लवनेन नद्यादिलङ्घयितारः 'कथकाः' सरसकथाकथकाः 'पाठकाः' सूक्तादिवक्तारः 'लास्यकाः' रासकदायिनः 'आरक्षकाः' तलवराः "कैटवाल" इति लोके, क्वचिद् "आइक्खग" इति पाठस्तत्र 'आख्यायकाः' शुभाशुभभाविवक्तारः 'लङ्खाः' वंशाग्रखेलकाः 'मङ्खाः' सचित्रफलकहस्ता भिक्षुकाः "गौरिपुत्रा" इति प्रसिद्धाः "तूणइल्ल"त्ति तूणाख्यवादित्रवन्तो भिक्षव एव 'तुम्बवीणिकाः' वीणावादकाः, तथा अनेके ये 'तालाचराः' तालादानेन प्रेक्षाकारिणस्तालान्वा कुट्टयन्तः कथां कथयन्ति, तैः 'अनुचरितं' सहितं, एवंविधं क्षत्रियकुण्डग्रामं नगरं कुरुत स्वयमन्यैश्च कारयत । कृत्वा कारयित्वा च 'यूपानां' शकटयुगानां सहस्रं मुशलसहस्रं च 'उच्छ्रायत' ऊर्ध्वीकुरुत, शकटखेटनधान्यकण्डनादेर्निषेधः

तए णं ते कोडुंबियपुरिसा सिद्धत्थेणं रण्णा एवं वुत्ता समाणा हट्ठ-तुट्ठा जाव हियया करयल जाव पडिसुणित्ता खिप्पामेव कुंडपुरे नगरे चारगसोहणं, जाव उस्सवित्ता जेणेव सिद्धत्थे राया, तेणेव उवागच्छंति । उवागच्छित्ता करयल जाव कट्टु सिद्धत्थस्स रण्णो तमाणत्तियं पच्चप्पिणंति ॥ १०३ ॥

तए णं से सिद्धत्थे राया जेणेव अट्टणसाला तेणेव उवागच्छइ । उवागच्छित्ता जाव सव्वोरोहेणं सव्वपुप्फ-गंध-वत्थ-मल्लालंकार-विभूसाए सव्वतुडियसद्दनिनाएणं महया इड्ढीए महया जुईए महया बलेणं महया वाहणेणं महया समुदएणं महया वरतुडिय-जमगसमग-

क्रियतामित्यर्थः । तथा कृत्वा ममैतामाज्ञासिकां प्रत्यर्पयत ।

१०३–ततस्ते कौटुम्बिकपुरुषाः सिद्धार्थेन राज्ञा एवमुक्ताः सन्तो हृष्टास्तुष्टाः, यावद्धर्षपूर्णहृदयाः करतलाभ्यामञ्जलिं कृत्वा यावद्विनयेन तामाज्ञां प्रतिश्रुत्य क्षिप्रमेव क्षत्रियकुण्डग्रामे नगरे चारकशोधनं कुर्वन्ति, यावन्मुशलसहस्रमूर्ध्वीकृत्य यत्रैव सिद्धार्थो राजा, तत्रैवोपागच्छन्ति । उपागत्य करतलाभ्यां यावदञ्जलिं कृत्वा सिद्धार्थस्य राज्ञस्तामाज्ञासिकां प्रत्यर्पयन्ति ।

१०४–ततः स सिद्धार्थो राजा यत्रैवाट्टनशाला तत्रैवोपागच्छति । उपागत्य यावत्तत्र मल्लयुद्ध-मज्जनादिकरणपुरस्सरं नानाविधभूषणैर्भूषितः। ततः सर्वया ऋद्ध्या–छत्रादिराजचिह्नरूपया, सर्वया 'युक्त्या' उचितवस्तुसंयोगेनाभरणादियुत्या वा, सर्वेण 'बलेन' चतुरङ्गसैन्येन, सर्वेण वाहनेन शिबिकादिना, सर्वेण 'समुदयेन' स्वजनपरिवारादिसमूहेन सर्वेण 'अवरोधेन' अन्तःपुरेण, सर्वया पुष्पगन्धवस्त्रमाल्यालङ्काराणां विभूषया, सर्वेषां 'उदितानां' वादित्राणां यः शब्दो 'निनादश्च' प्रतिरवः, तेन युक्तः, दृश्यते स्वल्पेऽपि सर्वशब्दप्रवृत्तिः, अत

पवाइएणं संख-पणव-भेरि-झल्लरि-खरमुहि-हुडुक्क-मुरज-मुइंग-दुंदुहि-निग्घोस-नाइयरवेणं, उस्सुक्कं उक्करं उक्किट्ठं अदिज्जं अमिज्जं अभडप्पवेसं अदंडकोदंडिमं अधरिमं गणिआवरनाडइज्जकलिअं अणेगतालायराणुचरिअं अणुद्धुअमुइंगं (ग्रं० ५००) अमिलायमल्लदामं पमुइय-

आह—महत्या ऋद्ध्या, महत्या युक्त्या द्युत्या वा, महता 'बलेन' महता वाहनेन, महता समुदयेन तथा महता 'वराणां' प्रधानानां 'त्रुटितानां' वादित्राणां 'यमकसमकं' युगपत् 'प्रवादितेन' शब्दितेन, तथा शङ्खः प्रतीतः 'पणवो' मृत्पटहः 'भेरी' ढक्का, झल्लरी "झालर" इति लोके प्रतीता, 'खरमुखी' काहला 'हुडुक्का' तिवलितुल्यो वाद्यविशेषः 'मुरजो' मर्दलः 'मृदङ्गः' मृन्मयः स एव, 'दुन्दुभिः' देववाद्यं, एतेषां यो 'निर्घोषो' महाशब्दः 'नादितं' प्रतिशब्दश्च, तद्रूपो यो रवो—मधुरशब्दस्तेन, एवंविधयाऽखिलसामग्र्या सह सिद्धार्थो राजा दशदिवसान् यावत् 'स्थितिपतितां' कुलमर्यादां महोत्सवलक्षणां करोतीति योजना। अथ किंविशिष्टां स्थितिपतितां? इत्याह—'उच्छुल्कां' शुल्केन—विक्रेतव्यवस्तु प्रति राजग्राह्यद्रव्येण रहितां 'उत्करां' गवादीन् प्रति प्रतिवर्षं राजग्राह्यकररहितां 'उत्कृष्टां, सर्वेषां हर्षहेतुत्वादुत्तमां। 'अदेयां' वस्तुमूल्यदानरहितां, यद्यस्य युज्यते तत्सर्वमापणाद्ग्राह्यं, न तु मूल्यं देयं, तत्तु राजा ददातीति भावः। 'अमेयां' अमितानेकवस्तुयोगां क्रयविक्रयरहितां वा, 'अभटप्रवेशां' कस्यापि गृहे राजाज्ञादायिपुरुषप्रवेशरहितां 'अदण्डकुदण्डिमां' दण्डो—यथाऽपराधं राजग्राह्यं धनं, कुदण्डं—महत्यप्यपराधे तदेवाल्पं, ताभ्यां रहितां, 'अधरिमां' ऋणरहितां, ऋणस्य नृपेण दत्तत्वात्। 'गणिकावरनाटकीयैः' नाटकप्रतिबद्धपात्रैः 'कलितां' युक्तां, अनेकैः 'तालाचरैः' प्रेक्षाकारिभिः 'अनुचरितां'

पक्कीलियगपुरजणजाणवयं दसदिवसं ठिइवडियं करेइ ॥ १०४ ॥

तए णं से सिद्धत्थे राया दसाहियाए ठिइवडियाए वट्टमाणीए सइए अ साहस्सिए अ सयसाहस्सिए अ जाए अ दाए अ भाए अ दलमाणे अ दवावेमाणे अ, सइए अ साहस्सिए अ सयसाहस्सिए अ लंभे पडिच्छमाणे अ पडिच्छावेमाणे अ, एवं विहरइ ॥ १०५ ॥

तए णं समणस्स भगवओ महावीरस्स अम्मापियरो पढमे दिवसे ठिइवडियं करिंति, तइए दिवसे चंदसूरदंसणिअं करिंति,

सेवितां 'अनुद्धूतमृदङ्गां' वादकैरपरित्यक्तमृदङ्गां, पुनः 'अम्लानानि' विकसितानि माल्यदामानि यस्यां, तथा 'प्रमुदिताः' प्रमोदवन्तः, अत एव 'प्रक्रीडिताः' क्रीडितुमारब्धाः पुरजनसहिताः 'जानपदाः' देशवासिनो यत्र, एवंविधां 'स्थितिपतितां' कुलमर्यादागतां वर्धापनिकादिक्रियां दशदिवसान् यावत् करोति ।

१०५—ततः स सिद्धार्थो राजा दशाहिकायां स्थितिपतितायां वर्त्तमानायां 'शतिकान्' शतमितान्, एवं साहस्रिकान् शतसाहस्रिकान्—लक्षमितांश्च 'यागान्' अर्हत्प्रतिमापूजाः ×, 'दायान्' पर्वादौ दानानि 'भागान्' लब्धद्रव्यविभागान्मानितद्रव्यांशान्वा, ददत्स्वयं दापयंश्च सेवकैः, तथैव शतिकान् साहस्रिकान् शतसाहस्रिकांश्च 'लाभान्' वर्धापनागतद्रव्याणि 'प्रतीच्छन्' स्वयं गृण्हन् 'प्रतीच्छयन्' ग्राहयंश्च सेवकैः, एवं विहरति ।

१०६—ततः श्रमणस्य भगवतो महावीरस्य मातापितरौ प्रथमे दिवसे 'स्थितिपतितां' कुलक्रमागतपुत्रजन्मो-

× 'इति देवपूजानां' इति भावो'यागान्' देवपूजाः । देवशब्देनार्हत्प्रतिमैव ग्राह्या, यतो भगवन्मातापित्रोः श्रीपार्श्वनाथापत्यत्वेन श्रमणोपासकत्वादन्ययागाय-[illegible], श्रीपार्श्वापत्यं चाचारांगसूत्रे प्रतिपादितम् ।

छट्ठे दिवसे धम्मजागरियं करिंति, इक्कारसमे दिवसे विइक्कंते, निव्वत्तिए असुइजम्मकम्मकरणे, संपत्ते बारसाहे दिवसे, विउलं असणं

त्सवोचितां क्रियां कुरुतः, तृतीये दिवसे चन्दसूर्यदर्शनिकां—तयोर्दर्शनार्थं उत्सवविशेषं कुरुतः। तद्विधिश्चायम्—

जन्मदिवसाद्दिनद्वयेऽतीते गृहस्थगुरुरर्हत्प्रतिमाऽग्रे रूप्यमयीं चन्द्रमूर्त्तिं प्रतिष्ठाप्य पूजयित्वा च विधिना स्थापयेत्, ततः स्नातां सुवस्त्राभरणां सपुत्रां जननीं चन्द्रोदये प्रत्यक्षं चन्द्राभिमुखं नीत्वा "ॐ अर्हं चन्द्रोऽसि निशाकरोऽसि नक्षत्रपतिरसि सुधाकरोऽसि औषधिगर्भोऽसि, अस्य कुलस्य वृद्धिं कुरु कुरु स्वाहा" इति चन्द्रमन्त्रमुच्चारयँश्चन्द्रं दर्शयेत्। सपुत्रा माता गुरुं प्रणमति, गुरुश्चाशीर्वादं ददाति, स चायं—

"सर्वौषधिमिश्रमरीचिराजिः, सर्वापदां संहरणे प्रवीणः। करोतु वृद्धिं सकलेऽपि वंशे, युष्माकमिन्दुः सततं प्रसन्नः॥ [ ॥१॥"

ततो मूर्त्तेर्विसर्जनं करोति। वार्दलादिना चन्द्रादर्शनेऽपि तस्यामेवापरस्यां वा निशायामयं विधिः क्रियते।

एवं सूर्यस्यापि दर्शनं, नवरं मूर्त्तिः काञ्चनमयी ताम्रमयी वा, मन्त्रश्च—"ॐ अर्हं सूर्योऽसि दिनकरोऽसि तमोऽपहोऽसि सहस्रकिरणोऽसि जगच्चक्षुरसि, प्रसीद, अस्य कुलस्य तुष्टिं पुष्टिं प्रमोदं कुरु कुरु स्वाहा" आशीर्वादश्चायम्—

"सर्वसुरासुरवन्द्यः, कारयिताऽपूर्वसर्वकार्याणाम्। भूयात्त्रिजगच्चक्षु-र्मङ्गलदस्ते स पुत्रायाः ॥ १ ॥"

इति चन्द्रसूर्यदर्शनविधिः। साम्प्रतं तु तत्स्थाने शिशोर्दर्पणो दर्श्यते।

ततः षष्ठे दिवसे कुलस्य लोकस्य वा 'धर्मेण' व्यवहारेण रात्रौ जागरणं—धर्मजागरिका, तां जागृतः, षष्ठ्यां रात्रौ जागरणोत्सवं कुरुत इति भावः। एकादशमे दिवसे व्यतिक्रान्ते 'निर्वर्त्तिते' समापिते च अशुचीनां जन्मकर्मणां यत्करणं,

तं जया णं अम्हं एस दारए जाए भविस्सइ, तया णं अम्हे एयस्स दारगस्स इमं एयाणुरूवं गुण्णं गुणनिप्फन्नं नामधिज्जं करिस्सामो 'वद्धमाणु' त्ति। ता अज्ज अम्ह मणोरहसंपत्ती जाया, तं होउ णं अम्हं कुमारे 'वद्धमाणे' नामेणं ॥१०९॥ समणे भगवं महावीरे कासवगुत्ते णं, तस्स णं तओ नामधिज्जा एवमाहिज्जंति, तं जहा–अम्मापिउसंतिए 'वद्धमाणे' १, सहसमुइआए 'समणे' २, अयले भयभेरवाणं, परीसहोवसग्गाणं खंतिखमे, पडिमाण पालगे धीमं अरइरइसहे दविए वीरिअसंपन्ने, देवेहिं से नामं कयं 'समणे भगवं महावीरे' ३ ॥११०॥

१०९–तस्माद्यदाऽस्माकमेष दारको जातो भविष्यति, तदा वयमेतस्य दारकस्येमं एतद्रूपं 'गौण्यं' गुणेभ्य आगतं गुणनिष्पन्नं 'नामधेयं' अभिधानं करिष्यामो 'वर्द्धमान' इति। सा अद्य अस्माकं मनोरथसम्पत्तिर्जाता, तस्माद्भवतु अस्माकं कुमारो 'वर्द्धमान' इति नाम्ना।

११०–श्रमणो भगवान् महावीरः काश्यपगोत्रः, तस्य त्रीणि नामधेयानि एवमाख्यायन्ते, तद्यथा–'मातापितृसत्कं' मातापितृभ्यां दत्तं 'वर्द्धमान' इति प्रथमं नाम, तथा "सह"त्ति जन्मतो सहभाविनी या 'समुदिता' रागद्वेषाभावता, तया 'श्रमणः' तपोनिधि इति द्वितीयं नाम, तथा 'अचलो' निष्प्रकम्पो भयभैरवयोर्विषये, तत्र भयं–अकस्माद्विद्युदादिजातं भैरवं–सिंहादिजं भयमेव। परीषहाः क्षुत्पिपासादयो द्वाविंशतिः, उपसर्गाः देवमनुजादिकृताः, तेषां क्षान्त्या, न त्वसमर्थत्वेन, 'क्षमः' सहेता, प्रतिमानां भद्रादीनामेकरात्रिक्यादीनां तत्तदभिग्रहविशेषाणां वा पालकः, धीमान् ज्ञानत्रयोपेतत्वात्, अरतिरत्योः 'सहः' सहेता, न तु तत्र हर्षविषादौ कृतवान् इत्यर्थः, तथा 'द्रविकः' इष्टानिष्टेष्वर्थेषु रागद्वेषरहितः*, 'वीर्यं' पराक्रमस्तेन सम्पन्नः, अतो देवैस्तस्य

* "दवितो–नाम न रागं गच्छति" इत्याचाराङ्गचूर्णौ "रागद्वेषविरहाद्द्रविको भगवान्" इति च तद्वृत्तौ।

जिमिअभुत्तुत्तरागया वि अ णं समाणा आयंता चुक्खा परमसुइभूआ तं मित्त-नाइ-नियग-सयण-संबंधि-परिजणं नायए खत्तिए य विउलेणं पुप्फ-वत्थ-गंध-मल्लालंकारेणं सक्कारिंति सम्माणिंति । सक्कारित्ता सम्माणित्ता तस्सेव मित्त-नाइ-नियय-सयण-संबंधि-परियणस्स नायाणं खत्तिआण य पुरओ एवं वयासी ॥ १०७ ॥

पुव्विंपि णं देवाणुप्पिया ! अम्हं एयंसि दारगंसि गब्भं वक्कंतंसि समाणंसि इमे एयारूवे अब्भत्थिए चिंतिए जाव समुप्पज्जित्था–जप्पभिइं च णं अम्हं एस दारए कुच्छिंसि गब्भत्ताए वक्कंते, तप्पभिइं च णं अम्हे हिरण्णेणं वड्ढामो, सुवण्णेणं धणेणं धन्नेणं रज्जेणं सावइज्जेणं जाव पीइसक्कारेणं अईव अईव अभिवड्ढामो, सामंतरायाणो वसमागया य ॥ १०८ ॥

---

१०७–ततो 'जिमितौ' भुक्तवन्तौ 'भुक्त्युत्तरं' भोजनानन्तरं च आगतौ, उपवेशनस्थाने इति गम्यते । 'अपि च' निश्चयेनैवंविधौ सन्तौ–'आचान्तौ' शुद्धोदकेन कृताचमनौ, ततश्च सिक्थाद्यपनयनेन चोक्षौ, अतः परमशुचिभूतौ सन्तौ तं मित्र-ज्ञाति-निजक-स्वजन-सम्बन्धि-परिजनं ज्ञातजान् क्षत्रियांश्च विपुलेन पुष्प-वस्त्र-गन्ध-माल्या-लङ्कारेण सत्कारयतः सन्मानयतः । सत्कार्य सन्मान्य च तस्यैव मित्र-ज्ञाति-निजक-स्वजन-सम्बन्धिपरिजनस्य ज्ञातजानां क्षत्रियाणां च पुरत एवं अवादिष्टाम् ।

१०८–पूर्वमपि देवानुप्रियाः ! भोः स्वजनाः ! अस्माकं एतस्मिन् दारके गर्भं व्युत्क्रान्ते सति अयमेतद्रूपोऽभ्यर्थितश्चिन्तितो यावत्सङ्कल्पः समुत्पन्नोऽभूत्, कोऽसौ ? इत्याह–'यत्प्रभृति' यद्दिनादारभ्य अस्माकमेष दारकः कुक्षौ गर्भतया व्युत्क्रान्तः 'तत्प्रभृति' तद्दिनादारभ्य वयं 'हिरण्येन' रूप्येन वर्द्धामहे, सुवर्णेन धनेन धान्येन राज्येन 'स्वापतेयेन' द्रव्येण यावत्प्रीतिसत्कारेणातीवातीवाभिवर्द्धामहे, सामन्तराजानो वशमागताश्च ।

तं जया णं अम्हं एस दारए जाए भविस्सइ, तया णं अम्हे एयस्स दारगस्स इमं एयाणुरूवं गुण्णं गुणनिप्फन्नं नामधिज्जं करिस्सामो 'वद्धमाणु' त्ति । ता अज्ज अम्ह मणोरहसंपत्ती जाया, तं होउ णं अम्हं कुमारे 'वद्धमाणे' नामेणं ॥१०९॥ समणे भगवं महावीरे कासवगुत्ते णं, तस्स णं तओ नामधिज्जा एवमाहिज्जंति, तं जहा-अम्मापिउसंतिए 'वद्धमाणे' १, सहसमुइआए 'समणे' २, अयले भयभेरवाणं, परीसहोवसग्गाणं खंतिखमे, पडिमाण पालगे धीमं अरइरइसहे दविए वीरिअसंपन्ने, देवेहिं से नामं कयं 'समणे भगवं महावीरे' ३ ॥११०॥

१०९-तस्माद्यदाऽस्माकमेष दारको जातो भविष्यति, तदा वयमेतस्य दारकस्येमं एतद्रूपं 'गौण्यं' गुणेभ्य आगतं गुणनिष्पन्नं 'नामधेयं' अभिधानं करिष्यामो 'वर्द्धमान' इति। सा अद्य अस्माकं मनोरथसम्पत्तिर्जाता, तस्माद्भवतु अस्माकं कुमारो 'वर्द्धमान' इति नाम्ना।

११०-श्रमणो भगवान् महावीरः काश्यपगोत्रः, तस्य त्रीणि नामधेयानि एवमाख्यायन्ते, तद्यथा-'मातापितृसत्कं' मातापितृभ्यां दत्तं 'वर्द्धमान' इति प्रथमं नाम, तथा "सह"त्ति जन्मतो सहभाविनी या 'समुदिता' रागद्वेषाभावता, तया 'श्रमणः' तपोनिधि इति द्वितीयं नाम, तथा 'अचलो' निष्प्रकम्पो भयभैरवयोर्विषये, तत्र भयं-अकस्माद्विद्युदादिजातं भैरवं-सिंहादिजं भयमेव। परीषहाः क्षुत्पिपासादयो द्वाविंशतिः, उपसर्गाः देवमनुजादिकृताः, तेषां क्षान्त्या, न त्वसमर्थत्वेन, 'क्षमः' सहेता, प्रतिमानां भद्रादीनामेकरात्रिक्यादीनां तत्तदभिग्रहविशेषाणां वा पालकः, धीमान् ज्ञानत्रयोपेतत्वात्, अरतिरत्योः 'सहः' सहेता, न तु तत्र हर्षविषादौ कुरुत इत्यर्थः, तथा 'द्रविकः' इष्टानिष्टेष्वर्थेषु रागद्वेषरहितः*, 'वीर्यं' पराक्रमस्तेन सम्पन्नः, अतो देवैस्तस्य

* "द्रवितो-नाम न रागं गच्छति" इत्याचाराङ्गचूर्णौ "रागद्वेषविरहाद्द्रविको भगवान्" इति च तद्वृत्तौ।

भगवतो नाम कृतं 'श्रमणो भगवान् महावीर' इति तृतीयम् । तच्चैवम्—

"न्यूनाब्दहायनः सार्द्धं, सवयोभिर्नृपात्मजैः । विभुर्वयोऽनुरूपाभिः, क्रीडाभिः क्रीडतिस्म सः ॥१॥ तदाऽवदद्युसन्नाथो, द्युसदः सदसोऽन्तरा । 'महावीर'प्रभुर्धीरः, क्षोभ्यो भुवि न केनचित् ॥२॥ तं वीरं क्षोभयाम्येष, इति द्वेषधरः सुरः । कोऽपि त्वरापरः प्राप, समीपं क्रीडतः प्रभोः ॥ ३ ॥ कुर्वन्नामलकीं क्रीडां, यत्रारूढस्तरौ विभुः । स सर्पीभूय भोगेन, तं दुष्टोऽवेष्टयत्तले ॥ ४ ॥ भीग्रस्तेषु समस्तेषु, त्रस्तेषु नृपसूनुषु । प्रभुरुत्क्षिप्य साक्षेपं, दूरे चिक्षेप पन्नगम् ॥ ५ ॥ रन्तुं पुनः समीयुस्ते, कुमारास्तत्र सत्रपाः । कुमाराकारतां कृत्वा, रेमे तेष्वमरोऽपि सः ॥६॥ पणोऽयमभवत्तत्र, क्रीडायां पूर्वमेव यः । पादपस्याग्रमारोहेत्, कुमारः स जयी भवेत् ॥ ७ ॥ विनिर्जिताश्च जेतारं, पृष्ठारूढं वहन्ति ते । जित्वा वीरविभुः पृष्ठा-रूढश्चान्यानवाहयत् ॥ ८ ॥ पृष्ठारूढः क्रमाद्वीरो, वर्द्धमानं सुरं दिवि । निर्भयो मुष्टिना पृष्ठे, हत्वा तं वामनं व्यधात् ॥९॥ स्वं रूपं शक्रसङ्क्रसां, प्रभोर्धैर्यस्तुतिं च ताम् । प्रकाश्य स प्रभुं नत्वा, क्षमयित्वा ययौ सुरः ॥१०॥" अथ भगवतो लेखशालायामुपनयनम्—

"तत्र च मातापितरौ, मोहवशाद्विविधमुत्सवं कुरुतः । लग्नादिकव्यवस्थिति-पुरस्सरं परमसन्तुष्ट्या ॥ १ ॥"

तथाहि—"गजतुरगसमूहैः स्फारकेयूरहारैः, कनकघटितमुद्राकुण्डलैः कङ्कणाद्यैः ।
रुचिरतरदुकूलैः पञ्चवर्णैस्तदानीं, स्वजनमुखनरेन्द्राः सत्क्रियन्ते स्म भक्त्या ॥ २ ॥"

तथा—"पण्डितयोग्यं नाना-वस्त्रालङ्कारनालिकेरादि । अथ लेखशालिकानां, दानार्थमनेकवस्तूनि ॥ ३ ॥"

तथाहि–"पूगीफलशृङ्गाटक–खर्जूरसितोपलास्तथा खण्डा। चारुकुलिचारुबीजा–द्राक्षादिसुखाशिकावृन्दम् ॥४॥"

"सौवर्णरत्नराजत–मिश्राणि च पुस्तकोपकरणानि। कमनीयमषीभाजन–लेखनिकापट्टिकादीनि ॥ ५ ॥"

"वाग्देवीप्रतिमाऽर्चा–कृतये सौवर्णभूषणं भव्यम्। नव्यबहुरत्नखचितं, छात्राणां विविधवस्त्राणि ॥ ६ ॥"

इत्याद्यखिलसामग्रीयुतः, कुलवृद्धाभिस्तीर्थोदकैः स्नपितः, परिहितविविधालङ्कारः, शिरोधृतश्वेतातपत्रश्चतुश्चामरवीज्यमानाङ्गश्चतुरङ्गसैन्यसमन्वितो वाद्यमानविविधवादित्रः पण्डितगेहमुपाजगाम, पण्डितोऽपि भूपालपुत्रपाठनोचितां पर्वपरिधेयक्षीरोदकल्पधौतिक-हैमयज्ञोपवीत-द्वादशतिलकादिसामग्रीं यावत्करोति तावत्—

"वातान्दोलितकेतुवज्जलनिधौ सङ्क्रान्तशीतांशुवत्, प्रोद्दामद्विपकर्णवन्मृगदृशः स्वाभाविकस्वान्तवत्।"

"भूपोत्तापितहेमवद्ध्रुवमपि प्रौढप्रभावात्प्रभो–रकम्पेन चलाचलं समभवद्देवेन्द्रसिंहासनम् ॥ १ ॥"

ततोऽवधिना ज्ञातवृत्तः शक्रो देवानित्थमवादीत्–हंहो! महच्चित्रं!! यदर्हतोऽपि लेखशालानयनं, यतः—

"साम्रे चन्दनमालिका स मधुरीकारः सुधायाः स च, ब्राह्म्याः पाठविधिः स शुभ्रिमगुणारोपः सुधादीधितौ।"

"कल्याणे कनकच्छटाप्रकटनं पावित्र्यसम्पत्तये, शास्त्राध्यापनमर्हतोऽपि यदिदं सल्लेखशालाकृते ॥ १ ॥"

"मातुः पुरो मातुलवर्णनं त–ल्लङ्कानगर्यां लहरीयकं तत्। तत्प्राभृतं लावणमम्बुराशेः, प्रभोः पुरो यद्वचसां विलासः [॥२॥"

यतः–"अनध्ययनविद्वांसो, निर्द्रव्यपरमेश्वराः। अनलङ्कारसुभगाः, पान्तु युष्मान् जिनेश्वराः ॥ ३ ॥"

इत्यादि वदन् कृतविप्ररूपस्त्वरितं यत्र पण्डितगेहे भगवांस्तिष्ठति, तत्र समागत्य पण्डितोचिते आसने

प्रभुमुपवेश्य पण्डितमनोगतान् सन्देहान् पप्रच्छ, प्रभुरपि 'बालोऽयं किं वक्ष्यती'ति चिन्तयत्सु सकलजनेषु सर्वाण्युत्तराणि ददौ। ततो जैनेन्द्रं व्याकरणं जज्ञे, यदुक्तम्—

"प्रार्थितः प्रभुरिन्द्राय, तदा शब्दानुशासनम्। यज्जल्पति स्म तल्लोके, जैनेन्द्रमिति विश्रुतम् ॥ १ ॥"

ततोऽहो!! बालेनापि वर्द्धमानकुमारेणैतावती विद्या कुत्राधीतेति जातसंशयान् जनानवोचदिन्द्रः—

"यद्वत्सहस्रकरशुभ्रकरप्रदीपा, ज्योतिश्चयैः प्रसृमरैः सहिताः सदैव।"

"आगर्भतः सततसर्वगुणस्तथैव, ज्ञानत्रयेण सहितो जिनवर्द्धमानः ॥ १ ॥" पण्डितोऽपि चिन्तयामास—

"आबालकालादपि मामकीनान्, यान् संशयान् कोऽपि निरासयन्न।"

"विभेद तांस्तान्निखिलान्स एषः, बालोऽपि भोः! पश्यत चित्रमेतत् ॥ १ ॥" शालोपजातिः

किञ्च—अहो!! ईदृशस्य विद्याविशारदस्यापि ईदृशं गाम्भीर्यं!!, यद्वा युक्तमेवेदं ईदृशस्य महात्मनः, यतः—

"गर्जति शरदि न वर्षति, वर्षति वर्षासु निःस्वनो मेघः। नीचो वदति न कुरुते, न वदति साधुः करोत्येव ॥१॥"

तथा—"असारस्य पदार्थस्य, प्रायेणाडम्बरो महान्। नहि स्वर्णे ध्वनिस्तादृग्, यादृक्कांस्ये प्रजायते ॥ २ ॥"

इत्यादि चिन्तयन्तं पण्डितं शक्रः प्रोवाच—"मनुष्यमात्रशिशुरेष विप्र!, न शङ्कनीयो भवता स्वचित्ते।"

"विश्वत्रयीनायक एष वीरो, जिनेश्वरो वाङ्मयपारदृश्वा ॥ १ ॥"

इत्यादिस्तुतिं भगवतः कृत्वा शक्रः स्वस्थानं जगाम, भगवानपि समस्तज्ञातक्षत्रियैस्सहितः स्वगृहमगात्।×

×इति लेखशालाकरणम् ॥

सूत्रं ११० प्रभोर्लेखशालायामुपनयनं, इन्द्रपृच्छायां पण्डितशङ्कानिरासः

समणस्स णं भगवओ महावीरस्स पिआ कासवगुत्ते णं, तस्स णं तओ नामधिज्जा एवमाहिज्जंति, तं जहा-सिद्धत्थे इ वा सिज्जंसे इ वा जसंसे इ वा। समणस्स णं भगवओ महावीरस्स माया वासिट्ठी गुत्तेणं, तीसे तओ नामधिज्जा एवमाहिज्जंति, तं जहा-तिसला इ वा विदेहदिन्ना इ वा पीइकारिणी इ वा। समणस्स णं भगवओ महावीरस्स पित्तिज्जे सुपासे, जिट्ठे भाया नन्दिवद्धणे, भगिणी सुदंसणा, भारिया जसोआ कोडिन्ना गुत्तेणं। समणस्स णं भगवओ महावीरस्स धूआ कासवी गुत्तेणं, तीसे दो नामधिज्जा एवमाहिज्जंति, तं जहा-अणोज्जा इ वा पियदंसणा इ वा। समणस्स णं महावीरस्स नत्तुई कोसिअ गुत्तेणं, तीसे णं दुवे नामधिज्जा एवमाहिज्जंति, तं

---

एवं बाल्यावस्थानिवृत्तौ सम्प्राप्तयौवनो भगवान् मातापितृभ्यां शुभे मुहूर्त्ते प्रसेनजिन्नृपपुत्रीं यशोदां परिणायितः, तया सह सुखमनुभवतो भगवतः पुत्री प्रियदर्शनाख्या जाता, साऽपि प्रवरनृपसुतस्य स्वभागिनेयस्य जमालेः परिणायिता, तस्या अपि शेषवतीनाम्नी पुत्री जाता, सा च भगवतो दौहित्री।

१११-श्रमणस्य भगवतो महावीरस्य पिता काश्यपगोत्रः, तस्य त्रीणि नामधेयानि एवमाख्यायन्ते, तद्यथा-'सिद्धार्थ' इति वा 'श्रेयांस' इति वा 'यशस्वी' इति वा। श्रमणस्य भगवतो महावीरस्य माता वाशिष्ठी गोत्रेण, तस्यास्त्रीणि नामधेयानि एवमाख्यायन्ते, तद्यथा-'त्रिशला' इति वा 'विदेहदिन्ना' इति वा 'प्रीतिकारिणी'ति वा। श्रमणस्य भगवतो महावीरस्य पितृव्यः 'काको' इति लोके, सुपार्श्वः, ज्येष्ठो भ्राता नन्दिवर्द्धनः, भगिनी सुदर्शना, भार्या यशोदा कौडिन्या गोत्रेण। श्रमणस्य भगवतो महावीरस्य 'दुहिता' पुत्री काश्यपी गोत्रेण, तस्या द्वे नामधेये एवमाख्यायेते, तद्यथा-'अनवद्या' इति वा 'प्रियदर्शना' इति वा। श्रमणस्य भगवतो महावीरस्य 'नप्त्री' दौहित्री कौशिका गोत्रेण, तस्या द्वे नामधेये एवमाख्यायेते, तद्यथा-'शेषवती' इति वा 'यशस्वती' इति वा।

जहा-सेसवई इ वा जसवई इ वा ॥ १११ ॥

समणे भगवं महावीरे दक्खे दक्खपइन्ने पडिरूवे आलीणे भद्दए विणीए नाए नायपुत्ते नायकुलचंदे, विदेहे विदेहदिन्ने विदेहजऽच्चे विदेहसूमाले, तीसं वासाइं विदेहंसि कट्टु अम्मापिऊहिं देवत्तगएहिं गुरुमहत्तरएहिं अब्भणुन्नाए समत्तपइन्ने। पुणरवि लोगंतिएहिं

११२—श्रमणो भगवान् महावीरो 'दक्षः' सकलकलाकुशलः, दक्षप्रतिज्ञः—समीचीनामेव प्रतिज्ञां करोति, तां च सम्यङ्निर्वहति 'प्रतिरूपः' सुन्दररूपवान् 'आलीनः' सर्वगुणैराश्लिष्टः 'भद्रकः' सरलो विनीतो 'ज्ञातः' प्रसिद्धः 'ज्ञातपुत्रः' सिद्धार्थराजसूनुः, नैतावन्मात्रमेव, किन्तु ज्ञातकुले चन्द्र इव। पुनः 'विदेहः' विशिष्टदेहवान्, आद्यसंहनन-संस्थानोपेतत्वात्, विदेहदिन्ना—त्रिशला, तस्या अपत्यं—वैदेहदिन्नः, विदेहा—त्रिशला, तस्यां जाता अर्चा—शरीरं यस्य स विदेजार्चः। 'विदेहो' गृहवासस्तत्रैव सुकुमारः, न पुनर्व्रते, कालचक्राद्युपसर्गसहने वज्रकर्कशत्वात्। ईदृशो भगवान् त्रिंशद्वर्षाणि 'विदेहे' गृहवासे 'कृत्वा' स्थित्वा मातापित्रोर्देवत्वं गतयोः 'गुरुणा' ज्येष्ठभ्रात्रा नन्दिवर्द्धनेन 'महत्तरकैः' राज्यप्रधानैश्चापि अभ्यनुज्ञातः समाप्तप्रतिज्ञश्च, 'मातापित्रोर्जीवतो नाहं प्रव्रजिष्यामी'ति गर्भस्थगृहीतायाः प्रतिज्ञायाः पूरणात्, स वृत्तान्तस्त्वेवम्—जन्मतोऽष्टाविंशतिवर्षातिक्रमे भगवतो मातापितरौ आवश्यकाभिप्रायेण तुर्ये माहेन्द्रे कल्पे आचाराङ्गाभिप्रायेण चानशनेनाच्युते कल्पे गतौ। ततो भगवता ज्येष्ठभ्राता नन्दिवर्द्धनो राजा पृष्टः—राजन्! पूर्णो ममाभिग्रहोऽतः प्रव्रजामि। ततो नन्दिवर्द्धनोऽवोचत्—भ्रातः! मातापितृविरहदुःखितस्य ममानया वार्त्तया किं क्षतेः क्षारं क्षिपसि?। भगवतोक्तं—'राजन्!

णीअफग्गिणहिं देवेहिं ताहिं इट्ठाहिं कंताहिं पियाहिं मणुन्नाहिं मणामाहिं उरालाहिं कल्लाणाहिं सिवाहिं धन्नाहिं मंगल्लाहिं मिअमहुरसस्सिरी-

“×पियमाइभाइभइणी-भज्जापुत्तत्तणेण सव्वे वि । जीवा जाया बहुसो, जीवस्स उ एगमेगस्स ॥ १ ॥”

ततः कुत्र कुत्र प्रतिबन्धो विधीयते?। नन्दिवर्द्धनेनोक्तं-भ्रातः! अहमपि जानामि इदं, परं प्राणादपि प्रियस्य तव वियोगो मामतितरां बाधते, अतो ममानुरोधेन वर्षद्वयं गृहे तिष्ठ। भगवतोक्तं-राजन्! एवं भवतु, परं मन्निमित्तो न कोऽप्यारम्भो विधेयः, प्रासुकाशनपानेन स्थास्याम्यहं। राज्ञाऽपि तथैव प्रतिपन्नं। ततः समधिकं वर्षद्वयं यावद्वस्त्रालङ्कारविभूषितोऽपि प्रासुकैषणीयाहारो भगवान् सचित्ताहारादिकमभुञ्जानो गृहे स्थितः। ततः प्रभृति च भगवता अचित्तेनापि वारिणा सर्वस्नानं न कृतं, दीक्षोत्सवे तु तथा कल्पत्वात्सचित्तोदकेन कृतं। एवं वैराग्यरङ्गरञ्जितं प्रभुं विलोक्य चतुर्दशस्वप्नसूचितत्वाच्चक्रवर्त्तिधिया सेवमानाश्चण्डप्रद्योत-श्रेणिकादयो राजकुमाराः स्वं स्वं स्थानं जग्मुः।

एवं तावत्स्वयमेव भगवान् समाप्तप्रतिज्ञः, पुनरपि लोकान्ते-संसारान्ते भवा लोकान्तिकाः “सारस्वता-दित्य-वह्न्य-रुण-गर्दतोय-तुषिता-व्याबाधा-रिष्ट-मरुतः” [तत्त्वार्थ०-४-२७] इत्यभिधाना नवविधाः, पुनः किंवि०?,-‘जीतेन’ अवश्यम्भावेन ‘कल्पः’ आचारो येषां, तैर्देवैस्ताभिरिष्टाभिः कान्ताभिः प्रियाभिर्मनोज्ञाभिः ‘मनोऽमाभिः’ चिरमविस्मरणीयाभिः उदाराभिः कल्याणाभिः शिवाभिर्धन्याभिर्माङ्गल्याभिर्मितमधुरसश्रीका-

× पितृमातृभ्रातृभगिनी-भार्यापुत्रत्वेन सर्वेऽपि। जीवा जाता बहुशो, जीवस्य त्वेकैकस्य ॥ १ ॥

आहिं हिययगमणिज्जाहिं हिययपल्हायणिज्जाहिं गंभीराहिं अपुणरुत्ताहिं वग्गूहिं अणवरयं अभिनंदमाणा य अभिथुव्वमाणा य एवं वयासी ११२

जय जय नंदा!, जय जय भद्दा!, भद्दं ते, जय जय खत्तिअवरवसहा!, बुज्झाहि भगवं! लोगनाहा!, सयलजगज्जीवहियं पवत्तेहि धम्मतित्थं, हियसुहनिस्सेयसकरं सव्वलोए सव्वजीवाणं भविस्सइ त्ति कट्टु जय जय सद्दं पउंजंति ॥ ११३ ॥

पुव्विंपि णं समणस्स भगवओ महावीरस्स माणुस्सगाओ गिहत्थधम्माओ अणुत्तरे आभोइए अप्पडिवाई नाणदंसणे हुत्था। तए णं समणे भगवं महावीरे तेणं अणुत्तरेणं आभोइएणं नाणदंसणेणं अप्पणो निक्खमणकालं आभोएइ। आभोइत्ता चिच्चा हिरण्णं

---

भिर्हृदयगमनीयाभिः 'हृदयप्रह्लादनीयाभिः' हृदयाह्लादकारिकाभिर्गम्भीराभिरपुनरुक्ताभिर्वाग्भिः 'अनवरतं' निरन्तरं भगवन्तं 'अभिनन्दयन्तः' प्रशंसन्तः 'अभिष्टुवन्तः' स्तुवन्तश्च एवमवादिषुः।

११३–सम्भ्रमे द्विरुक्तत्वात् 'जय जय' जयं लभस्व, नन्दति–समृद्धो भवतीति नन्दस्तस्य सम्बोधनं हे 'नन्द!' समृद्धिमन्!, दीर्घत्वं प्राकृतत्वात्, एवं जय जय हे भद्र!, भद्रं तव भवतु, जय जय क्षत्रियवरवृषभ!, बुद्ध्यस्व भगवन्! लोकनाथ!, सकलजगज्जीवहितं प्रवर्त्तय धर्मतीर्थं, यत इदमेव धर्मतीर्थं हितसुखनिःश्रेयसकरं सर्वलोके सर्वजीवानां भविष्यतीति कृत्वा जय जय शब्दं प्रयुञ्जन्ति। यद्यपि स्वयम्बुद्धो भगवाँस्तदुपदेशं नापेक्षते, परं तेषामयमाचारः।

११४–"पुव्विंपि णं" इति पदं "गिहत्थधम्माओ" इत्यस्मादग्रे योज्यं, ततः श्रमणस्य भगवतो महावीरस्य 'मानुष्यकात्' मनुष्योचितात् 'गृहस्थधर्मात्' विवाहादिगृहव्यवहारात् पूर्वमपि 'अनुत्तरं' सर्वोत्कृष्टं आभोगिकं–आभोग(विलोकन)शीलं 'अप्रतिपाति' अनिवर्त्तकमाकेवलोत्पत्तेः, ईदृशं ज्ञानं दर्शनं च अवध्याख्यमभूत्। ततः श्रमणो भगवान् महावीरः तेनानुत्तरेणाभोगिकेन ज्ञानदर्शनेनात्मनो निष्क्रमणकालं 'आभोगयति'

विलोकयति। आभोग्य च त्यक्त्वा 'हिरण्यं' रूप्यं त्यक्त्वा सुवर्णं त्यक्त्वा धनं त्यक्त्वा राज्यं त्यक्त्वा राष्ट्रं, एवं 'बलं' सैन्यं वाहनं कोशं कोष्ठागारं; त्यक्त्वा 'पुरं' नगरं त्यक्त्वाऽन्तःपुरं त्यक्त्वा 'जनपदं' देशवासिजनं, त्यक्त्वा विपुलधन-कनक-रत्न-मणि-मौक्तिक-शङ्ख-शिला-प्रवाल-रक्तरत्नादिकं सन्तं सारस्वापतेयं, पुनः 'विच्छर्द्य' विशेषेण त्यक्त्वा 'विगोप्य' तदेव द्रव्यं गुप्तं सद्दानातिशयात्प्रकटीकृत्य यद्वा कुत्सनीयमेतदस्थिरत्वादित्याद्युक्त्वा, तथा दीयते इति दानं-धनं, तद् दायाय-दानार्थं आकच्छन्ति-आगच्छन्तीति दायाराः-याचकास्तेभ्यः 'परिभाज्य' विभागै-र्दत्त्वा यद्वा 'परिभाव्य' आलोच्य, एतेभ्य एतेभ्य इदमिदं दातव्यमिति विचार्येत्यर्थः, पुनः 'दानं' धनं 'दायि-केभ्यो' गोत्रिकेभ्यः 'परिभाज्य' विभागशो दत्त्वा, दीक्षार्थमुद्यतो जात इति गम्यः।

अनेन सूत्रेण सांवत्सरिकदानप्रदानं सूचितं, तच्चैवम्—भगवान् दीक्षादिनात्प्राग्वर्षेऽवशिष्यमाणे प्रातर्वार्षिकं दानं दातुमारभते, तत्र सूर्योदयादारभ्य भोजनवेलापर्यन्तं अष्टलक्षाधिकां कोटिं सौवर्णिकानां प्रत्यहं ददाति, 'वृणुत वरं वृणुत वरं' इत्युद्घोषणापूर्वकं यो यन्मार्गयति तत्तस्मै दीयते, तच्च सर्वं तिर्यग्जृम्भका देवाः शक्रा-

देशेन पूरयन्ति । एवं च—"प्रयच्छतः कोटिशतत्रयं प्रभो-रशीतिरष्टाभ्यधिकाश्च कोटयः ।"
"अशीतिलक्षाण्यपि सर्वसङ्ख्यया, समग्रवर्षेण सुवर्णमित्यभूत् ॥ १ ॥"

तथा च कवयः—"तत्तद्वार्षिकदानवर्षविरमद्दारिद्र्यदावानलाः, सद्यः सज्जितवाजिराजवसनालङ्कारदुर्लक्ष्यभाः । सम्प्राप्ताः स्वगृहेऽर्थिनः सशपथं प्रत्याययन्तोऽङ्गनाः, स्वामिन्! षिङ्गजनैर्निरुद्धहसितैः के यूयमित्यूचिरे ॥ २ ॥"

एवं च दानं दत्त्वा भगवता पुनर्नन्दिवर्द्धनः पृष्टः—राजंस्तव सत्कोऽप्यवधिः समाप्तस्तदहं प्रव्रजामि । ततो नन्दिवर्द्धनेन ध्वजहट्टालङ्कारतोरणादिभिः समग्रं पुरं सुरलोकसमं कृतं । ततो नन्दिवर्द्धनो नृपः शक्रादयश्च कनकमयाद्यष्टविधान् प्रत्येकमष्टोत्तरसहस्रान् कलशान् यावदन्यामपि सकलां सामग्रीं कारयन्ति । ततोऽच्युतेन्द्राद्यैश्चतुःषष्टिसुरेन्द्रैरभिषेके कृते सुरकृताः कलशा दिव्यानुभावेन नृपकारितकलशेषु प्रविष्टा अतस्तेऽत्यन्तं शोभितवन्तः । ततो नन्दिवर्द्धनो नृपः प्रभुं पूर्वाभिमुखं सिंहासने निवेश्य सुरानीतक्षीरोदनीरैस्सर्वतीर्थमृत्तिकाकषायै[रौषधै]श्चाभिषेकं करोति, इन्द्रादिदेवाः भृङ्गारादिहस्ता जय-जय-शब्दं प्रयुञ्जानाः पुरतस्तिष्ठन्ति । ततो भगवान् गन्धकाषाय्या रूक्षिताङ्गो दिव्यचन्दनानुलिप्तदेहो विविधवस्त्रालङ्कारभूषिताङ्गोऽभवत्, ततः—

"षट्त्रिंशत्कार्मुकप्रोच्चां, पञ्चाशद्धनुरायताम् । पञ्चविंशतिकोदण्ड-विस्तरां शिबिकोत्तमाम् ॥ १ ॥"
"चन्द्रप्रभाऽभिधां नन्दि-वर्द्धनो निरमापयत् । तादृशीमेव शक्रोऽपि, चक्रेऽन्यां शिबिकां पुनः ॥२॥" युग्मम् ।
"विशांपतेः(नृपस्य)शिबिकायां,शक्रस्य शिबिका परा । देवशक्त्याऽन्तर्हिताऽऽसी-त्तत्रारूढो जगत्पतिः ॥३॥" ततः

सूत्रं ११४ गोत्रिकाणां विभागेन धनप्रदानपूर्वकं वार्षिकदानं दीक्षाभिषेकश्च

ते णं काले णं ते णं समए णं समणे भगवं महावीरे जे से हेमंताणं पढमे मासे पढमे पक्खे, मग्गसिरबहुले, तस्स णं मग्गसिरबहुलस्स दसमीपक्खे णं, पाईणगामिणीए छायाए, पोरिसीए अभिनिवट्टाए पमाणपत्ताए, सुव्वएणं दिवसेणं, विजएणं मुहुत्तेणं, चंदप्पभाए

११५–तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरो योऽसौ 'हेमन्तस्य' शीतकालस्य प्रथमो मासः प्रथमः पक्षः, मार्गशीर्षबहुलः, तस्य मार्गशीर्षबहुलस्य दशम्याः 'पक्षे' दिवसे, 'प्राचीनगामिन्यां' पूर्वदिग्यायिन्यां छायायां, पौरुष्यां पाश्चात्यायां 'अभिनिवृत्तायां' जातायां, प्रमाणप्राप्तायां—न तु न्यूनाधिकायां, सुव्रताख्ये दिवसे, विजयाख्ये मुहूर्त्ते, उत्कृष्टरूपायां चन्द्रप्रभाऽभिधायां शिबिकायां कृतषष्ठतपाः विशुद्ध्यमानलेश्याकः सिंहासने पूर्वाभिमुखो निषीदति। ततः प्रभोर्दक्षिणे कुलमहत्तरिका हंसलक्षणं पटशाटकमादाय, वामे च प्रभोरम्बधात्री दीक्षोपकरणान्यादाय, पृष्ठे चैका वरतरुणी स्फारशृङ्गारा धवलातपत्रं धृत्वा, ईशाने चैका पूर्णकलशहस्ता, आग्नेये त्वेका कनकदण्डमणिमयतालवृन्तहस्ता भद्रासने निषीदति। ततो नगरप्रतोलीं यावन्नन्दिवर्द्धनादिष्टा नराः हृष्टास्सन्तः शिबिकामुत्पाटयन्ति, पश्चात् शक्रो दक्षिणामुपरितनीं बाहां, ईशानेन्द्र उत्तरामुपरितनीं बाहां, चमरेन्द्रो दक्षिणामधस्तनीं बाहां, बलीन्द्र उत्तरामधस्तनीं बाहामुत्पाटयति, शेषाश्च भवनपतिव्यन्तरज्योतिष्कवैमानिकेन्द्राश्चलचञ्चलकुण्डलाद्याभरणाः पञ्चवर्णकुसुमवृष्टिं कुर्वन्तो दुन्दुभीं ताडयन्तो यथाऽर्हं शिबिकामुत्पाटयन्ति, तदा शक्रेशानेन्द्रौ बाहां त्यक्त्वा प्रभोश्चामराणि वीजयतः। एवं शिबिकामारुह्य प्रस्थिते भगवति शरदि पद्मसर इव, पुष्पितं अतसी-कर्णिका-चम्पक-तिलकवनमिवातिरमणीयं नभस्तलं सुरवरैरभूत्।

किञ्च–निरन्तरं वाद्यमानझम्झा–भेरी–मृदङ्ग–दुन्दुभि–शङ्खाद्यनेकविधवादित्रनादेन सहसा—

"व्यवसायान्व्यापारांश्च, मुक्त्वा द्रष्टुं ययुर्नराः। स्त्रियो निजं निजं कर्म, त्यक्त्वाऽगुः कौतुकोत्सुकाः ॥ १ ॥"

"श्रुत्वा वाद्यौघनिर्घोषं, स्त्रियोऽभूवन् सुविह्वलाः। चक्रुर्नानाविधाश्चेष्टाः, सर्वेषां विस्मयप्रदाः ॥ २ ॥" यथा–

"स्वगल्लयोः काचन कज्जलाङ्कं, कस्तूरिकाभिर्नयनाञ्जनं च। गले चलन्नूपुरमंह्रिपीठे, ग्रैवेयकं चारु चकार बाला ॥ ३ ॥ कटीतटे काऽपि बबन्ध हारं, काचित्कणत्किङ्किणिकां च कण्ठे। गोशीर्षपङ्केन ररञ्ज पादा–वलक्तपङ्केन वपुर्लिलेप ॥ ४ ॥ अर्धस्नाता काचन बाला, विगलत्सलिला विश्लथबाला। तत्र प्रथममुपेता त्रासं, व्यधित न केषां ज्ञाता हासम् ॥ ५ ॥ काऽपि परिच्युतविश्लथवसना, मूढा करधृतकेवलरसना। चित्रं तत्र गता न ललज्जे, सर्वजने जिनवीक्षणसज्जे ॥ ६ ॥ सन्त्यज्य काचित्तरुणी रुदन्तं, स्वपोतमोतुं च करे विधृत्य। निवेश्य कट्यां व्रजन्ती, हासावकाशं न चकार केषाम् ॥ ७ ॥ अहो !! महो रूपमहो !! महौजः, सौभाग्यमेतत्कटरे ? गृह्णामि दुःखानि करस्य धातु–र्यच्छिल्पमीदृग् वदति स्म काचित् ॥८॥ काचिन्महेला विकसत्कपोला, श्रीवीरवक्त्रेक्षणगाढलोला। विस्रस्य दूरे पतितानि तानि, नाज्ञासिषुः काञ्चनभूषणानि ॥९॥ हस्ताम्बुजाभ्यां शुचि- घै–रवाकिरन् काश्चन चञ्चलाक्ष्यः। काश्चिज्जगुर्मञ्जुलमङ्गलानि, प्रमोदपूर्णा ननृतुश्च काश्चित् ॥ १० ॥"

रनारीनिरीक्ष्यमाणविभवप्रकर्षस्य प्रभोः पुरतस्तावत्स्वस्तिक-श्रीवत्स-नन्द्यावर्त्त-वर्द्धमानक-भद्रासन- युग्म-दर्पणेत्यष्टौ मङ्गलानि रत्नमयानि प्रस्थितानि, ततोऽनुक्रमेण पूर्णकलश-भृङ्गार-चामराणि, ततो

णीयाए, सदेवमणुआसुराए परिसाए समणुगम्ममाणमग्गे, संखिय-चक्किय-नंगलिय-मुहमंगलिय-वद्धमाण-पूसमाण-घंटियगणेहिं ताहिं इट्ठाहिं कंताहिं पियाहिं मणुन्नाहिं मणामाहिं उरालाहिं कल्लाणाहिं सिवाहिं धन्नाहिं मंगल्लाहिं मियमहुरसस्सिरीयाहिं वग्गूहिं अभिनंदमाणा अभिथुव्वमाणा य एवं वयासी ॥ ११५ ॥

---

महती वैजयन्ती, ततश्छत्रं, ततो मणिस्वर्णमयं सपादपीठं सिंहासनं, ततोऽष्टशतं आरोहरहितानां वरकुञ्जरतुरगाणां, ततस्तावन्तो घण्टापताकाऽभिरामाः शस्त्रपूर्णा रथाः, ततस्तावन्तो वरपुरुषाः, ततः क्रमेण चतुरङ्गं सैन्यं, ततो लघुपताकासहस्रमण्डितः सहस्रयोजनोच्चो महेन्द्रध्वजः, ततः खड्गकुन्ताद्यायुधग्राहाः, ततो हास्यनर्त्तनकारकाः कान्दर्पिकाश्च जय-जय-शब्दं प्रयुञ्जानाः, तदनन्तरं बहव उग्रा भोगा राजन्याः क्षत्रियास्तलवरा माडम्बिकाः कौटुम्बिकाः श्रेष्ठिनः सार्थवाहा देवा देव्यश्च भगवतः पुरतः प्रस्थिताः।

ततः सदेवमनुजासुरया 'परिषदा' जनसमूहेन 'समनुगम्यमानं' सम्यगनुयायमानं, पुनः "अग्गे"त्ति अग्रतः 'शङ्खिकाः' शङ्खवादकाः, 'चाक्रिकाः' चक्रप्रहरणधराः 'नाङ्गलिकाः' गलावलम्बितसुवर्णादिमयलाङ्गलाकारधारिणो भट्टविशेषाः 'मुखमाङ्गलिकाः' मुखे प्रियभाषिणः 'वर्द्धमानाः' स्कन्धारोपितपुरुषा मनुजाः 'पुष्यमाणाः' मागधा मान्या वा, घण्टया चरन्तीति घाण्टिकाः राउलिया इति लोके, एतेषां गणैः परिवृतं प्रभुमिति शेषः, प्रक्रमात्कुलमहत्तरादयस्ताभिरिष्टाभिः कान्ताभिः प्रियाभिर्मनोज्ञाभिर्मनोऽमाभिरुदाराभिः कल्याणाभिः शिवाभिर्धन्याभिर्माङ्गल्याभिर्मितमधुरसश्रीकाभिर्वाग्भिः 'अभिनन्दन्तः' प्रशंसन्तः अभिष्टुवन्तश्च एवमवादिषुः।

"जय जय नंदा !, जय जय भद्दा !, भद्दं ते खत्तियवरवसहा !, अभग्गेहिं नाणदंसणचरित्तेहिं अजियाइं जिणाहि इंदियाइं, जिअं च पालेहि समणधम्मं, जियविग्घोवि य वसाहि तं देव ! सिद्धिमज्झे, निहणाहि रागद्दोसमल्ले तवेणं, धिइधणिअबद्धकच्छे मद्दाहि अट्ठकम्मसत्तू झाणेणं उत्तमेणं सुक्केणं, अप्पमत्तो हराहि आराहणपडागं च वीर ! तेलुक्करंगमज्झे, पाव य वितिमिरमणुत्तरं केवलवरनाणं, गच्छ य मुक्खं परं पयं जिणवरोवइट्ठेणं मग्गेणं अकुडिलेणं, हंता परीसहचमूं। जय जय खत्तिअवरवसहा ! बहूइं दिवसाइं बहूइं पक्खाइं

---

११६–हे नन्द !–हे समृद्धिमन् ! त्वं जय जय, हे भद्र त्वं जय जय, भद्रं तेऽस्तु हे क्षत्रियवरवृषभ !, 'अभग्नैः' निरतिचारैर्ज्ञानदर्शनचारित्रैः अजितानि इन्द्रियाणि 'जय' वशीकुरु, 'जितं' स्वायत्तीकृतं च पालय श्रमणधर्मं, जितविघ्नोऽपि च हे देव ! त्वं वस सिद्धिमध्ये, सिद्धिशब्देनात्र श्रमणधर्मस्य वशीकारस्तस्य मध्यं–सेवनप्रकर्षस्तत्र त्वं निरन्तरायं तिष्ठेत्यर्थः। अत एव रागद्वेषमल्लौ 'निजहि' निगृहाण, केन ?, तपसा बाह्याभ्यन्तरेण, तथा 'धृतौ' सन्तोषे धैर्ये वा, "धणिअ"त्ति अत्यर्थं बद्धकक्षः सन् मर्दयाष्टकर्मशत्रून्, केन ?, ध्यानेनोत्तमेन शुक्लेन, अप्रमत्तस्सन् 'आहर' गृहाण आराधनपताकां हे वीर ! त्रैलोक्यरङ्गमध्ये, यथा मल्लः प्रतिमल्लं विजित्य जयपताकां गृह्णाति तथा त्वमपि कर्मशत्रून्निर्जित्याराधनपताकां गृहाणेति भावः। प्राप्नुहि च 'वितिमिरं' अज्ञानान्धकाररहितं 'अनुत्तरं' अनुपमं केवलवरज्ञानं, गच्छ च मोक्षाख्यं परं पदं जिनवरोपदिष्टेन मार्गेण 'अकुटिलेन' विषयकषायादिकौटिल्यरहितेन, हत्वा परीषहचमूं। जय जय क्षत्रियवरवृषभ ! बहून् दिवसान् बहून् पक्षान् बहून् मासान् बहून् ऋतून् द्विमासात्मिकान्, बहूनि अयनानि–दक्षिणोत्तरायणरूपाणि षाण्मासिकानि,

बहूइं मासाइं बहूइं उऊइं बहूइं अयणाइं बहूइं संवच्छराइं, अभीए परीसहोवसग्गाणं, खंतिखमे भयभेरवाणं, धम्मे ते अविग्घं भवउ" त्ति कट्टु जय-जय-सद्दं पउंजंति ॥ ११६ ॥

तए णं समणे भगवं महावीरे नयणमालासहस्सेहिं पिच्छिज्जमाणे पिच्छिज्जमाणे, वयणमालासहस्सेहिं अभिथुव्वमाणे अभिथुव्वमाणे, हिययमालासहस्सेहिं उन्नंदिज्जमाणे उन्नंदिज्जमाणे, मणोरहमालासहस्सेहिं विच्छिप्पमाणे विच्छिप्पमाणे, कंतिरूवगुणेहिं पत्थिज्जमाणे पत्थिज्जमाणे, अंगुलिमालासहस्सेहिं दाइज्जमाणे दाइज्जमाणे, दाहिणहत्थेणं बहूणं नरनारीसहस्साणं अंजलिमालासहस्साइं पडिच्छमाणे पडिच्छमाणे, भवणपंतिसहस्साइं समइच्छमाणे समइच्छमाणे, तंतीतलतालतुडियगीयवाइअरवेणं महुरेण य मणहरेणं जय-

---

बहून् संवत्सरान् यावदभीतः परीषहोपसर्गेभ्यः क्षान्त्या, न त्वसमर्थत्वेन, क्षमः—सहेता भयभैरवाणां विद्युत्सिंहादीनां, एवंविधस्सस्त्वं जय, अपरं च धर्मे ते अविघ्नं भवतु, इति 'कृत्वा' उक्त्वा जय-जय-शब्दं प्रयुञ्जन्ति ।

११७—ततः श्रमणो भगवान् महावीरो नयनमालासहस्रैः प्रेक्ष्यमाणः प्रेक्ष्यमाणः—पुनः पुनरवलोक्यमानः, वदनमालासहस्रैः पुनः पुनरभिष्टूयमानः, हृदयमालासहस्रैः 'उन्नन्द्यमानः २' जयतु जीवतु इत्यादिचिन्तनेन समृद्धिं प्राप्यमाणः, मनोरथमालासहस्रैः 'विस्पृश्यमानः २' वयमेतेषामाज्ञाविधायिनो भवाम इत्यादिभिर्जनविकल्पैर्विशेषेण वाञ्छ्यमानः, कान्तिरूपगुणैः 'प्रार्थ्यमानः २' स्वामित्वेन वाञ्छ्यमानः, अङ्गुलिमालासहस्रैर्दर्श्यमानः दर्श्यमानः, दक्षिणहस्तेन बहूनां नरनारीसहस्राणां 'अञ्जलिमालासहस्राणि' नैकसहस्रान्नमस्कारान् 'प्रतीच्छन् २' गृण्हन् २, भवनपङ्क्तिसहस्राणि 'समतिक्रामन् २' उल्लङ्घयन् २, पुनः 'तन्त्री' वीणा 'तलतालाः' हस्ततालाः 'त्रुटितानि' वादित्राणि 'एतेषां 'गीते' गीतान्तर्यद्वादनं, तस्य यो 'रवः' शब्दस्तेन मधुरेण च मनोहरेण जय-

जयसद्दघोसमीसिएणं मंजुमंजुणा घोसेण य पडिवुज्झमाणे पडिवुज्झमाणे, सव्विड्ढीए सव्वजुईए सव्वबलेणं सव्ववाहणेणं सव्वसमुदएणं सव्वायरेणं सव्वविभूईए सव्वविभूसाए सव्वसंभमेणं सव्वसंगमेणं सव्वपगईहिं सव्वनाडएहिं सव्वतालायरेहिं सव्वोरोहेणं सव्वपुप्फ-गंध-वत्थ-मल्लालंकारविभूसाए सव्वतुडियसद्दसन्निनाएणं, महया इड्ढीए महया जुईए महया बलेणं महया वाहणेणं महया समुदएणं, महया वरतुडियजमगसमगप्पवाइएणं संख-पणव-पडह-भेरि-झल्लरि-खरमुहि-हुडुक्क-दुंदुहिनिग्घोसनाइयरवेणं कुंडपुरं नगरं मज्झंमज्झेणं निग्गच्छइ-

---

जय-शब्दघोषमिश्रितेन 'मञ्जुमञ्जुना' अतिकोमलेन 'घोषेण' जनस्वरेण च 'प्रतिबुद्ध्यमानः २' सावधानी भवन्, सर्वया छत्रादिराजचिह्नरूपया ऋद्ध्या, सर्वया आभरणादिसम्बन्धिन्या द्युत्या, सर्वबलेन—हस्त्यादिचतुरङ्ग सैन्येन, सर्वेण करभवेसरादिलक्षणेन वाहनेन, सर्वसमुदयेन—पौरादिमेलापकेन, सर्वबलेन, सर्ववाहनेन सर्वसमुदायेन, सर्वादरेण—सर्वौचित्यकरणेन, सर्वविभूत्या, सर्वविभूषया, सर्वसम्भ्रमेण—प्रमोदकृतौत्सुक्येन, सर्वेण 'सङ्गमेन' स्वजनमेलापकेन, सर्वाभिः 'प्रकृतिभिः' नैगमाद्यष्टादशभिर्नगरवास्तव्यप्रजाभिः, सर्वनाटकैः सर्वतालाचरैः 'सर्वावरोधेन' सर्वान्तःपुरेण, सर्वपुष्प—गन्ध—वस्त्र-माल्या-लङ्कारविभूषया सर्वत्रुटितशब्दानां 'सन्निनादेन' प्रतिरवेण, अल्पेष्वपि ऋद्ध्यादिषु सर्वशब्दप्रवृत्तिर्दृश्यते, अत आह—महत्या ऋद्ध्या महत्या द्युत्या महता बलेन महता वाहनेन महता समुदयेन 'महता' उच्चैस्तरेण 'वरत्रुटितानां' प्रधानवादित्राणां 'यमकसमकं' समकालं यत्प्रवादनं तेन, शङ्ख-पणव-पटह-भेरी-झल्लरी-खरमुखी-हुडुक्क-दुन्दुभयः प्रागुक्तास्तेषां 'निर्घोषो' महाशब्दस्तथा 'नादितः' प्रतिशब्दस्तद्रूपेण 'रवेण' शब्देन युक्तं यथा स्यात्तथा, एवंविधया सामग्र्या व्रतादानाय

निग्गच्छित्ता जेणेव नायसंडवणे उज्जाणे जेणेव असोगवरपायवे, तेणेव उवागच्छइ ॥ ११७ ॥

उवागच्छित्ता असोगवरपायवस्स अहे सीयं ठावेइ। ठावित्ता सीयाओ पच्चोरुहइ। पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमु-

---

गच्छतो भगवतः पश्चाच्चतुरङ्गसैन्यपरिकलितो हस्तिस्कन्धाधिरूढो ललितच्छत्रचामरविराजितो नन्दिवर्द्धन-नृपोऽनुयाति। एवं प्रागुक्ताडम्बरयुतो भगवान् क्षत्रियकुण्डग्रामनगरस्य मध्यंमध्येन भूत्वा निर्गच्छति। निर्गत्य यत्रैव ज्ञातपण्डवनं नामोद्यानं, यत्रैवाशोकवरपादपस्तत्रैवोपागच्छति।

११८–उपागत्याशोकवरपादपस्याधस्तात् शिविकां स्थापयति। स्थापयित्वा शिविकातः प्रत्यवतरति। प्रत्यवतीर्य स्वयमेवाभरणमाल्यालङ्कारान् 'उन्मुञ्चति' उत्तारयति। तच्चैवम्—

"मौलेर्मौलिमपाकरोच्छ्रुतियुगात्सत्कुण्डले कण्ठतो, नैष्कं [सौवर्णिकं] हारमुरःस्थलाच्च सहसैवांसद्वयादङ्गदे।"
"पाणिभ्यां विपुले च वीरवलये मुद्रावलीमङ्गुली—वर्गाद्धारमिव प्रशान्तहृदयो वैराग्यरङ्गात्प्रभुः ॥ १ ॥"

तानि चाभरणानि कुलमहत्तरिका हंसलक्षणपटशाटके गृह्णाति। गृहीत्वा च भगवन्तं एवमवादीत्—

"णाएऽसि णं तुमं जाता!, कासवगोत्तेऽसि णं तुमं जाता!, उदितोदितणातकुलणभतलमियंकसिद्धत्थजच्चखत्तियसुतेऽसि णं

---

× ज्ञातोऽसि त्वं जात!, काश्यपगोत्रोऽसि त्वं जात!, उदितोदितज्ञातकुलनभस्तलमृगाङ्कजात्य(उत्तम)सिद्धार्थक्षत्रियसुतोऽसि त्वं जात!, वाशिष्ठगोत्रजात्यक्षत्रि-

यइ। ओमुइत्ता सयमेव पंचमुट्ठियं लोअं करेइ। करित्ता छट्ठेणं भत्तेणं अपाणएणं, हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं, एगं देवदूसमादाय एगे अवीए मुंडे भवित्ता अगाराओ अणगारिअं पवइए ॥ ११८ ॥

---

तुमं जाता !, वासिट्ठगोत्तजच्चखत्तियाणीए तिसलाए अत्तएऽसि णं तुमं जाया !, ×× देविंदणरिंदपहितकित्तीऽसि णं तुमं जाता !, सुहोसि णं तुमं जाया !, एत्थ य तिव्वं चंकमियव्वं, गरुअं आलंबेअव्वं, असिधारं महव्वयं चरिअव्वं, तं घडियव्वं जाया !, जतितव्वं जाया !, परक्कमेअव्वं जाता !, अस्सिं च णं अट्ठे णो पमाएअव्वं"

इत्याद्युक्त्वा वन्दित्वा नमस्यित्वा च एकतोऽपसरति। तत आभरणान्युन्मुच्य भगवान् स्वयमेवैकया मुष्ट्या कूर्चं, चतसृभिश्च शिरोजानि, एवं पञ्चमौष्टिकं लोचं करोति। शक्रश्च हंसलक्षणे पटशाटके केशान् गृहीत्वा क्षीरोदधौ प्रवाहयति। लोचं कृत्वा षष्ठेन भक्तेनापानकेन हस्तोत्तरानक्षत्रेण सह चन्द्रयोगमुपागते सति वामस्कन्धे शक्रसंस्थापितं एकं देवदूष्यमादाय एको—रागद्वेषसहायविरहात्, अद्वितीयः, यथा हि ऋषभश्चतुस्सहस्र्या नृपाणां, मल्लिपार्श्वौ त्रिभिस्त्रिभिः शतैर्वासुपूज्यः षट्शत्या, शेषाश्च सहस्रेण सह प्रव्रजितास्तथा भगवान्महावीरो न केनापि सहेत्यतोऽद्वितीयस्सन्। द्रव्यतः शिरःकूर्चलुञ्चनेन भावतो रागाद्यपनयनेन मुण्डो भूत्वा 'अगारात्' गृहान्निष्क्रम्य 'अनगारितां' साधुतां 'प्रव्रजितः प्रतिपन्नः।

---

याण्यास्त्रिशलाया आत्मजोऽसि त्वं जात !, देवेन्द्रनरेन्द्रप्रथितकीर्त्तिरसि त्वं जात !, शुभोऽसि त्वं जात !, अत्र च तीव्रं चङ्क्रमितव्यं, गुरुजनं आलम्बितव्यं, असिधारं महाव्रतं चरितव्यं, तस्माद् घटितव्य जात ! यतितव्यं जात ! पराक्रमितव्यं जात !, अस्मिंश्चार्थे नो प्रमादितव्यम् ।

तद्विधिश्चायं-प्रागुक्तप्रकारेण कृतपञ्चमौष्टिकलोचो भगवान् यदा सामायिकदण्डकमुच्चरितुं समुद्यतस्तदा शक्रः स्वर्णकम्बां भ्रमयित्वा समस्तमपि वादित्रादिकोलाहलं निवारयति। ततो भगवान् "नमो सिद्धाणं" इति भणनपूर्वकं "करेमि सामाइअं सव्वं सावज्जं जोगं पच्चक्खामि" इत्यादिकं सामायिकदण्डकमुच्चरति, न तु "भंते" इति भणति, तथा कल्पत्वात्। एवं च व्रतग्रहणानन्तरमेव भगवतश्चतुर्थं मनःपर्यवज्ञानमुत्पन्नं। ततः शक्रादयो देवाः प्रभुं वन्दित्वा नन्दीश्वरे कल्याणकोत्सवं च विधाय स्वं स्वं स्थानं जग्मुः।

इति श्रीपर्युषणाकल्पावचूर्यन्तर्वाच्यादिविविधव्याख्यामुपजीव्य प्रवचनप्रभावक–श्रीखरतरगच्छवियद्भास्कर–क्रियोद्धारक–श्रीमन्मोहनमुनीश्वरविनेयविनेयानुयोगाचार्य–श्रीमत्केशरमुनिजी–गणिवरसंगृहीतायां कल्पार्थबोधिनीनामपर्युषणाकल्पव्याख्यायां प्रभोर्दीक्षाकल्याणकव्यावर्णनबन्धुरं पञ्चमं व्याख्यानं समाप्तम्।

ग्रं० ११७–१–३ मूलं, ४२७–२–५ वृत्तिः, ९–२–६ टि०, सर्वाग्रेण ५५५–२–६। व्याख्यानपञ्चकस्य ३२२०–३–४।



नाम्ना 'मोहनलाले'ति, विख्याता ह्यवनीतले । खरतरगणोत्तंसा, जैनशासनभूषणाः ॥ १ ॥

## ॥ इति कल्पार्थबोधिन्याः पञ्चमं व्याख्यानम् ॥

तेषां प्रशिष्यपंन्यास–गणि'केशर'सन्मुनेः । शिष्यं बुद्ध्यब्धिनामानं, भद्रं तन्वन्तु तेऽन्वहम् ॥ २ ॥ युग्मम् ।

# अथ षष्ठं व्याख्यानम् ।



ततश्चतुर्ज्ञानो भगवान् बन्धुवर्गमापृच्छ्य विहाराय प्रस्थितः, बन्धुवर्गोऽपि दृष्टिविषयं यावत्तत्र स्थित्वा—

"त्वया विना वीर ! कथं व्रजामो ?, गृहेऽधुना शून्यवनोपमाने ।"
"गोष्ठीसुखं केन सहाचरामो ?, भोक्ष्यामहे ? केन सहाथ बन्धो ! ॥ १ ॥"
"सर्वेषु कार्येषु च वीर ! वीरे-त्यामन्त्रणाद्दर्शनतस्तवार्य ! । प्रेमप्रकर्षादभजाम हर्षं, निराश्रिताश्चाथ कमाश्रयामः ? [॥ २ ॥"
"अतिप्रियं बान्धव ! दर्शनं ते, सुधाऽञ्जनं भावि ? कदाऽस्मदक्ष्णोः ।"
"नीरागचित्तोऽपि कदाचिदस्मान्, स्मरिष्यसि ? प्रौढगुणाभिराम ! ॥ ३ ॥"

इत्यादि वदन् कष्टेन निवृत्य साश्रुनयनः स्वगेहं जगाम । किञ्च प्रभुर्दीक्षामहोत्सवे यद्देवैर्गोशीर्षचन्दनादिभिः कुसुमैश्च पूजितोऽभूत् साधिकमासचतुष्कं यावत्तदवस्थेन तद्गन्धेनाकृष्टा भ्रमरा आगत्य गाढं त्वचं दशन्ति, युवानश्च गन्धपुटीं याचन्ते, मौनवति च भगवति रुष्टास्ते दुष्टान् उपसर्गान् कुर्वन्ति । स्त्रियोऽपि प्रभुं दिव्यरूपं सुगन्धदेहं च विलोक्य कामपरवशा अनुकूलान् उपसर्गान् कुर्वन्ति, भगवांस्तु मेरुरिव निष्प्रकम्पः सर्वं सहमानो विहरति । तस्मिन्नेव दिने मुहूर्त्तावशेषे कुमारग्रामं प्राप्तस्तत्र निशि कायोत्सर्गेण स्थितः ।

वीरस्य विहार उपसर्गाश्च, वैयावृत्त्य-भ्यर्थना शक्रस्य

इतश्च कश्चिद् गोपः स्वबलीवर्दान् प्रभोरन्तिके मुक्त्वा गोदोहाय गृहं गतः, बलीवर्दाश्चरन्तो वने दूरङ्गताः, गोप आगत्य प्रभुं पृष्टवान्–'देवार्य! क मे बलीवर्दाः?'। मौनवति च भगवति 'अयं न वेत्ती'ति वने गवेषयितुं गतः, बलीवर्दास्तु चरन्तो निशाऽवशेषे स्वयमेव प्रभुपार्श्वमुपागताः, गोपोऽपि तत्रागतस्तान् दृष्ट्वा 'अहो जानताऽप्यनेन समग्रां रात्रिमहं भ्रामितः' इति क्रोधात् हलमुत्पाट्य प्रहर्तुं धावितः। तदैवावधिना ज्ञातवृत्तः शक्रस्तमशिक्षयत्। अथ च शक्रः प्रभुं विज्ञपयामास–'प्रभो! भूयांसस्तवोपसर्गा भवितारः, ततोऽहं द्वादशवर्षान् यावद्वैयावृत्त्यनिमित्तं भवदन्तिके तिष्ठामि। भगवतोक्तं—× "नो खलु देविंदा! एवं भूअं वा भव्वं वा भविस्सं वा, जन्नं अरहंता देविंदस्स वा असुरिंदस्स वा निस्साए केवलनाणं उप्पाडिंसु वा उप्पाडिंति वा उप्पाडिस्संति वा सिद्धिं वा वच्चंति, किंतु अरहंता सएणं उट्ठाणबलवीरियपुरिसकारपरक्कमेणं उप्पाडिंसु वा उप्पाडिंति वा उप्पाडिस्संति वा सिद्धिं वा वच्चंति।"

"इत्युक्तः स्वामिनो मातृ–ष्वस्रीयं व्यन्तरं सुरम्। शक्रो निदेश्य रक्षायै, सिद्धार्थं स्वपदं ययौ ॥ १॥"

ततो भगवान् प्रातः 'कोल्लाक'सन्निवेशे 'बहुल'विप्रगेहे 'मया सपात्रो धर्मः प्रज्ञापनीयः' इति प्रथमपारणकं गृहस्थपात्रे परमान्नेन कृतवान्। तदा च–चेलोत्क्षेपः १ गन्धोदकवृष्टिः २ दुन्दुभिनादः ३ अहो दानमहो दानमित्युद्घोषणा ४ वसुधारावृष्टिश्चेति पञ्चदिव्यानि प्रकटितानि, एषु वसुधारास्वरूपमिदं—

॥९०॥

× नो खलु देवेन्द्र! एवं भूतं वा भ(वति)व्यं वा भविष्यं वा, यदर्हन्तो देवेन्द्रस्य वाऽसुरेन्द्रस्य वा निश्रया केवलज्ञानमुत्पादितवन्तो वा उत्पादयन्ति वा उत्पादयिष्यन्ति वा सिद्धिं वा व्रजन्ति, किन्त्वर्हन्तः स्वकेनोत्थानबलवीर्यपुरुषाकारपराक्रमेणोत्पादितवन्तो वा उत्पादयन्ति वा उत्पादयिष्यन्ति वा सिद्धिं वा व्रजन्ति।

समणे भगवं महावीरे संवच्छरं साहियं मासं जाव चीवरधारी होत्था, तेण परं अचेलए पाणिपडिग्गहिए ॥ ११९ ॥

×"अद्धतेरसकोडी, उक्कोसा तत्थ होइ वसुहारा। अद्धतेरसलक्खा, जहन्निया होइ वसुहारा ॥ १ ॥"

ततो विहृत्य भगवान् 'मोराक' सन्निवेशे 'दुइज्जंत' तापसाश्रमं गतः, तत्र 'सिद्धार्थ' नृपसखा कुलपतिः प्रभुं उपस्थितः, प्रभुणाऽपि पूर्वाभ्यासान्मिलनाय बाहू प्रसारितौ, तस्याभ्यर्थनया चैकां रात्रिं तत्रोषित्वा नीरागचित्तोऽपि तस्यानुरोधाच्चतुर्मासावस्थानं तत्राङ्गीकृत्यान्यतो विजहार, शेषकालेऽन्यत्र विहृत्य पुनर्वर्षावासार्थमागतस्तत्र कुलपतिसमर्पिते तृणोटजे तस्थौ। तदा च बहिस्तृणानाभावात् क्षुधिता गावोऽन्यैस्तापसैः स्वस्वोटजान्निर्वासिताः सत्यः प्रभुभूषितमुटजं निःशङ्कं खादन्ति। तत उटजस्वामिना कुलपतये पूत्कृतं। कुलपतिनाऽप्यागत्य प्रभुं प्रत्युक्तं—भो वर्द्धमान! पक्षिणोऽपि स्वनीडरक्षणे दक्षा भवन्ति, त्वं तावद्राजपुत्रोऽपि स्वाश्रयं रक्षितुमशक्तोऽसि?। ततो भगवान् 'मयि सत्येतेषां अप्रीतिस्ततो नात्र स्थातुमुचित' मिति विचिन्त्याषाढपूर्णिमातः पक्षेऽतिक्रान्ते वर्षायामेव—

"नाप्रीतिमद्गृहे वासः, स्थेयं प्रतिमया सदा। न गेहिविनयः कार्यो, मौनं पाणौ च भोजनम् ॥ १ ॥"

इत्यभिग्रहपञ्चकमभिगृह्य 'अस्थिक' ग्रामं प्रति प्रस्थितः।

११९—श्रमणो भगवान् महावीरः साधिकमासं संवत्सरं यावत् 'चीवरधारी' वस्त्रधारी अभवत्, 'तेन परं' साधिकमासाद्वर्षादूर्ध्वं 'अचेलकः' वस्त्ररहितः 'पाणिपतद्ग्राहिकः' करपात्रश्चाभवत्। तत्र अचेलकभवनं चैवम्—

× अर्धत्रयोदशकोट्यः, उत्कर्षा तत्र भवति वसुधारा। अर्धत्रयोदशलक्षा, जघन्यिका भवति वसुधारा ॥ १ ॥

साधिकमासाद्वर्षात्परतो दक्षिणवाचालापुर्यासन्नसुवर्णवालुकानदीतटे कण्टकवृक्षे विलग्य देवदूष्यार्द्धं पतिते सिंहावलोकनेन भगवांस्तदद्राक्षीत्। तच्च ममत्वेनेत्येके, स्थण्डिलेऽस्थण्डिले वा पतितमित्यवलोकनायेत्यन्ये, सहसात्कारेणेत्यपरे, भाविस्वसन्ततेर्वस्त्रादिकं सुलभं भावि न वेति विलोकनायेति केचित्। कण्टके वस्त्रविलगनाद्भाविनं स्वशासनं कण्टकबहुलं विज्ञाय निर्लोभत्वात्तन्न जग्राहेति वृद्धाः। ततः सिद्धार्थनृपमित्रेण सोमभट्टद्विजेन गृहीतम्। अर्धं तु स्वयमेव प्रभुणा तस्य प्राग्दत्तमभूत्। तच्चैवं—

प्रभोर्वार्षिकदानावसरे स दरिद्रो विप्रो देशान्तरं गतोऽभूत्, तत्राप्यभाग्योदयात्किञ्चिन्मात्रमपि वित्तमप्राप्य गृहमागतो भार्यया निर्भर्त्सितो–रे निर्भाग्य! यदा भगवान् श्रीवर्द्धमानः सुवर्णधाराभिर्ववर्ष तदा त्वं देशान्तरे गतः, ततोऽप्यधुना निर्धन एव समागतोऽसि, अतो गच्छ दूरं, मा मुखं दर्शय, यद्वा साम्प्रतमपि तमेव जङ्गमं कल्पतरुं याचस्व, येन तव दारिद्र्यमपहृतं भवेत्, यतो—

"यैः प्राग्दत्तानि दानानि, पुनर्दातुं हि ते क्षमाः। शुष्कोऽपि हि नदीमार्गः, खन्यते सलिलार्थिभिः ॥ १ ॥"

इत्यादिभार्यावाक्यैः प्रेरितो भगवत्समीपमागत्य विज्ञपयामास–प्रभो! त्वं जगदुपकारी, विश्वस्यापि दारिद्र्यमुन्मूलितं त्वया, अहं चाभाग्यस्तस्मिन्नवसरेऽत्र नाभूवंस्तत्रापि च— [वं?॥ १ ॥"

×"किं किं न कयं? को को, न पत्थिओ? कह कह न नामिअं? सीसं। दुब्भरउयरस्स कए, किं न कयं? किं न काय

× किं किं न कृतं? कः को, न प्रार्थितः? क क न नामितं? शीर्षम्। दुर्भरोदरस्य कृते, किं न कृतं? किं न कर्त्तव्यम्? ॥ १ ॥

तथापि भ्रमता मया न किञ्चिन्मात्रमप्यवाप्तं द्रविणं, ततोऽहं निष्पुण्यो निराश्रयो निर्द्धनस्तवैव जगद्वाञ्छितदायकस्य शरणमागतोऽस्मि, तव च जगद्दारिद्र्यहरस्य मम दारिद्र्यहरणं कियन्मात्रं ?, यतः—

"सम्पूरिताशेषमहीतलस्य, पयोधरस्याद्भुतशक्तिभाजः ।"
"किं तुम्बपात्रप्रतिपूरणाय, भवेत्प्रयासस्य कणोऽपि नूनम् ? ॥ १ ॥"

एवं सदीनं याचमानाय द्विजाय करुणापरेण भगवता देवदूष्यस्यार्द्धं प्रदत्तं । अत्र तादृग्दानदायी निस्पृहोऽपि भगवाननुपयोग्यऽपि देवदूष्यं यत् शकलीकृत्यार्द्धं ब्राह्मणाय दत्तवानवशिष्टार्द्धं च स्वस्कन्धे न्यस्तवांस्तद्भगवत्सन्ततेर्वस्त्रादिषु मूर्च्छासंसूचकमित्येके, कालानुभावाद्दृद्धिमानपि नोदारभावेनौचित्यकर्त्ता भविष्यतीति सूचकमित्यपरे, भगवतः प्रथमं विप्रकुलोत्पन्नत्वसूचकमित्यन्ये । ब्राह्मणस्तु तदर्द्धं लात्वा दशाञ्चलकृते तुन्नवायायादर्शयत् । तेनाऽपि समग्रं व्यतिकरं ब्राह्मणान्निशम्योक्तं—'भो विप्र ! याहि त्वं, तमेव प्रभुमनुगच्छ, स हि निर्ममः करुणासागरो द्वितीयमप्यर्द्धं दास्यति, ततस्तदर्द्धद्वयमहं तथा सन्धिष्यामि यथाऽक्षतमिव दीनारलक्षमूल्यं भविष्यति, तेन च अर्द्धमर्द्धं विभक्तेन तव मम च द्वयोरपि दारिद्र्यं यास्यति' । इति तत्प्रेरणया विप्रोऽपि पुनः प्रभुपार्श्वमागतः, त्रपया मार्गयितुमशक्नुवन्वर्षं यावत्पृष्ठे बभ्राम, ततश्च स्वतः पतितं तदर्द्धं लात्वा गतस्तूणकारात्तूणाप्य विक्रीय च दीनारलक्षार्द्धं स्वयं विप्रेण गृहीतमर्द्धं च तूणकाराय दत्तं, एवं द्वयोरपि दारिद्र्यं गतं । तदेवं भगवता सवस्त्रधर्मप्ररूपणाय साधिकमासं वर्षं यावद्वस्त्रं स्वीकृतं, सपात्रधर्मव्यवस्थापनाय

समणे भगवं महावीरे साइरेगाइं दुवालसवासाइं निच्चं वोसट्ठकाए चियत्तदेहे जे केइ उवसग्गा उप्पज्जंति, तं जहा-दिव्वा वा

चाद्यं पारणकं गृहस्थपात्रेण कृतं, ततः परं यावज्जीवमचेलकः पाणिपात्रश्चाभूत्।

एवं च विहरतो भगवतः कदाचिद् गङ्गातटे सूक्ष्ममृत्तिकाकर्दमप्रतिबिम्बितासु पदपङ्क्तिषु चक्रध्वजाङ्कुशादिलक्षणान्यालोक्य पुष्पनामा सामुद्रिकोऽचिन्तयद्—यदयमेकाकी कोऽपि चक्रवर्त्ती प्रयाति, तदहं गत्वाऽस्य सेवां करोमि, येन ममोदयो भवेदिति त्वरितं पदानुसारेणागतः प्रभुमालोक्याचिन्तयत्—अहो!! व्यर्थमेव शास्त्राध्ययनं मम, यत ईदृग्लक्षणलक्षितोऽपि यदि श्रमणीभूय तपश्चरति, तदा सामुद्रिकपुस्तकं जले क्षेप्यमेव। इतश्चावधेर्दत्तोपयोगः शक्रः शीघ्रमागत्य प्रभुमभिवन्द्य पुष्पमुवाच—'भो भोः सामुद्रिक! मा विषीद, सत्यमेवैतत्तव शास्त्रं, यदेतैर्लक्षणैर्लक्षितोऽयं जगत्त्रयपूज्यः सर्वोत्तमसम्पदाश्रयस्तीर्थेश्वरो भविष्यति, किञ्च—

"कायः स्वेदमलामय-विवर्जितः श्वासवायुरपि सुरभिः। रुधिरामिषमपि धवलं, गोदुग्धसहोदरं नेतुः॥ १॥"

इत्यादीन्यपरिमितान्यस्य बाह्याभ्यन्तराणि लक्षणानि केन गणयितुं शक्यानि?' इत्यादिवदन् पुष्पं मणिरत्नकनकादिभिः समृद्धं विधाय शक्रः स्वस्थानं ययौ, सामुद्रिकोऽपि प्रमुदितः स्वदेशं गतः, प्रभुरन्यत्र विजहार।

१२०—श्रमणो भगवान् महावीरः 'सातिरेकाणि' सार्धषण्मासाधिकानि द्वादशवर्षाणि यावत् 'नित्यं' प्रव्रज्यादिनाद्यावज्जीवं शुश्रूषापरिहाराद् व्युत्सृष्टकायः परीषहसहनाच्च त्यक्तदेहः सन् ये केचिदुपसर्गा उत्पद्यन्ते, तद्यथा—'दिव्या' देवकृता वा 'मानुषा' मनुष्यकृता वा 'तैर्यग्योनिकाः' तिर्यक्कृता 'अनुलोमाः' भोगार्थं प्रार्थना-

माणुस्सा वा तिरिक्खजोणिआ वा, अणुलोमा वा पडिलोमा वा, ते उप्पन्ने सम्मं सहइ खमइ तितिक्खइ अहियासेइ ॥ १२० ॥

दिका अनुकूलाः 'प्रतिलोमाः' ताडनादिकाः प्रतिकूलाः, तानुत्पन्नान् सम्यक् 'सहते' इत्यादीनि चत्वार्यपि पदानि सहनार्थकान्येव, नवरं–सहते भयाभावेन, क्षमते क्रोधाभावेन, तितिक्षते दैन्याभावेन, अध्यासयत्यविचलचित्ततया ।

तत्र देवादिकृतोपसर्गसहनं यथा–प्रभुराद्यवर्षासु मोराकसन्निवेशाद्दुइज्जन्ताश्रमाद्विहृत्यास्थिकग्रामं गत्वा प्रभूतेन जनेन वार्यमाणोऽपि शूलपाणियक्षायतने × प्रतिमया स्थितः, रात्राविमे उपसर्गाः कृतास्तेन, तथाहि—

"*भीमऽट्टहास-हत्थी-पिसाय-णागे य वेयणा सत्त। सिर-कण्ण-नास-दंते, नह-ऽच्छि-पिट्ठी य सत्तमिया ॥१॥"

तथाप्यक्षुब्धं प्रभुं वीक्ष्योपशमितः स, इतश्च सिद्धार्थोऽपि समागतः सन् प्रोवाच–'रे निर्भाग्य ! शूलपाणे !

× स च यक्षः पूर्वभवे धनदेववणिजो वृषभ आसीत्, धनदेवस्य नदीमुत्तरतो शकटपञ्चशती पङ्के निमग्ना, तदा च उल्लसितवीर्येणैकेन वृषभेण वामधुरीणीभूय 'यदि ममैव खण्डद्वयं विधायोभयोः पार्श्वयोर्योजयति तदाऽहं एक एव सर्वाणि उत्तारयामी'ति निजगत्या सर्वाणि शकटान्युत्तारितानि । परं तथाविधोत्कृष्टपराक्रमेण स त्रुटितसन्धिः सर्वथाऽशक्तो जातः । तदा च धनदेवेन तं तथाभूतं वीक्ष्य वर्धमानग्रामस्य मुख्यानां तृणजलादिनिमित्तं वित्तं दत्त्वा स समर्पितस्तैश्च न काचित्तस्य चिन्ता कृता, अतः स क्षुत्तृड्बाधितो मृत्वा शूलपाणियक्षत्वेनोत्पन्नः, प्राग्भवव्यतिकरस्मरणाज्जातकोपेन तेन मारीं विकुर्व्यानेके जना मारिताः, कियतां संस्कारो भवेत् ? इति सर्वेषां मृतकानामस्थिनिकरैः स ग्रामः 'अस्थिकग्राम' इत्याख्यया प्रसिद्धो जातः । ततश्चावशिष्टैर्जनैराराधिते सति तेन प्रकटीभूय सर्वमृतकास्थ्नामुपरि रम्यः प्रासादः प्रतिमा च कारिता, इन्द्रशर्मा द्विजस्तत्र पूजको नियमितस्तच्चैत्यस्थं जनं रात्रौ व्यापादयति सः, भगवांस्तत्प्रतिबोधनाय तत्र चैत्ये समागतः । * भीमाट्टहासहस्ती–पिशाचनागाश्च वेदना सप्त । शिरःकर्णनासिकादन्ताः, नखाक्षिपृष्ठी च सप्तमिका ॥ १ ॥

किमेतदाचरितं?, यत्त्रैलोक्यपूज्यस्य प्रभोराशातना कृता, यदि शक्रो ज्ञास्यति तदा त्वां निर्विषयं करिष्यति'। ततश्च सविशेषं भीतस्सन्नधिकं प्रभुं पूजयामास, प्रभोरग्रे गायति नृत्यति च। तदाकर्ण्य ग्रामजनाश्चिन्तितवन्तो-'यदनेन दुरात्मना स देवार्योहतस्ततो गायति नृत्यति च'। तत्र स्वामिना देशोनान् रात्रेश्चतुरोऽपि प्रहरान् यावदतीव वेदना सोढा, इति प्रभाते क्षणं निद्रां प्रपेदे। तत्र चोर्द्धस्थ एव दश स्वप्नान् दृष्ट्वा जागरितः। प्रभाते लोका मिलिताः, अधीताष्टाङ्गनिमित्तेनोत्पलेन सह इन्द्रशर्मा पूजकोऽप्यागतः, ते हि प्रभुमक्षताङ्गं दिव्यगन्धचूर्णपुष्पादिपूजितं च निरीक्ष्य विस्मिताः प्रणमन्ति। तत उत्पलोऽवोचत्-प्रभो! राञ्यन्ते ये त्वया दश स्वप्ना दृष्टास्तेषां फलं त्वया तु ज्ञायत एव, तदपि मया कथ्यते-यत्त्वया तालपिशाचो हतस्तेन त्वमचिरेणैव मोहनीयं कर्म हनिष्यसि १, यच्च त्वत्सेवां कुर्वाणः श्वेतकोकिलो दृष्टस्तेन त्वं शुक्लध्यानं ध्यास्यसि २, यश्च चित्रकोकिलो भवतः सेवां कुर्वाणो दृष्टस्तेन त्वं द्वादशाङ्गीं प्रकाशयिष्यसि ३, यच्च स्वं गोवर्गेण सेव्यमानमपश्यत्तेन त्वं (साधुसाध्वीश्रावकश्राविकारूपेण) चतुर्विधेन सङ्घेन सेव्यमानो भविष्यसि ४, विबुधालङ्कृतमानसरोदर्शनाच्चतुर्निकायजा देवास्त्वां सेविष्यन्ते ५, यच्च समुद्रो निस्तीर्णस्तेन त्वं संसारार्णवं तरिष्यसि ६, यश्चोद्गच्छन् सूर्यो दृष्टस्तेनाचिरेणैव तव केवलज्ञानमुत्पत्स्यते ७, यच्चान्त्रैर्मानुषोत्तरो गिरिर्वेष्टितस्तेन त्रिभुवने तव कीर्त्तिः प्रसरिष्यति ८, यच्च मेरुचूलारूढं स्वमपश्यत्तेन त्वं सिंहासने समुपविश्य धर्मोपदेशं दास्यसि ९, दामयुगस्यार्थमहं न जाने। स्वामिनोक्तं-उत्पल! दामयुगस्य दर्शनात्साधुश्रावकरूपधर्मद्वयं प्ररूपयिष्यामीति १०। ततः सर्वे जनाः प्रभुं

वन्दित्वा स्वस्थानं गताः, प्रभुरप्यष्टार्द्धमासक्षपणैस्तामाद्यां चतुर्मासीं तत्रातिक्रम्य विहृतो मोराकसन्निवेशं गतः।

तत्रोद्याने प्रतिमास्थितस्य प्रभोर्माहात्म्यवृद्धये सिद्धार्थः स्वामिदेहमधिष्ठाय निमित्तानि कथयति, तेन भगवतो महिमा वर्द्धते स्म। तद्दृष्ट्वा अच्छन्दकनामनैमित्तिकेन तृणच्छेदाछेदविषयकप्रश्ने कृते सिद्धार्थेन 'न छेत्स्यते' इत्युक्तं। ततश्छेदनोद्यतस्य तस्याङ्गुलिश्छिन्ना प्रयुक्तावधिशक्रमुक्तेन वज्रेण। ततो रुष्टेन सिद्धार्थेनोक्तं–चौरोऽयमच्छन्दकः, यतोऽनेन वीरघोषाख्यस्य कर्मकरस्य दशपलमितं कांस्यवट्टलकं चोरयित्वा स्वगेहे खर्जूरीवृक्षाधः स्थापितं, द्वितीयमिन्द्रशर्मण उरणकोऽनेन भक्षितस्तदस्थीन्यद्यापि स्वगृहवदर्या दक्षिणे उक्कुरुडिकायां स्थापितानि सन्ति, तृतीयं त्ववाच्यमतो नाहं कथयामि, भार्यैवास्य कथयिष्यति, ततो जनैर्गत्वा भार्या पृष्टा, साऽपि तद्दिने तेन सह कलहायिता कोपादुवाच–भो भो जनाः? अद्रष्टव्यमुखोऽयं पापात्मा, यदयं स्वभगिनीमपि व्यभिचरति, ततः सोऽतीव लज्जितो विजने समागत्य प्रभुं विज्ञपयामास–प्रभो! त्वं विश्वपूज्यः सर्वत्र पूज्यसे, अहं त्वत्रैव जीवामि' इति। ततः प्रभुस्तस्याप्रीतिं ज्ञात्वा ततो विहृत्य जनैर्वार्यमाणोऽप्युत्तरवाचालापुर्यासन्नकनकखलतापसाश्रमं गतस्तत्र चण्डकौशिकसर्पः प्रतिबोधितः×। स चानशनेन मृत्वा सहस्रारे

× स हि प्राग्भवे महातपस्वी श्रमणः, मासक्षपणपारणार्थं गच्छतो जातमण्डूकीविराधनाऽऽलोचनार्थं ईर्याप्रतिक्रान्तो गोचरचर्याऽऽलोचने सायं प्रतिक्रमणे च क्षुल्लकसाधुना सारितः सन् क्रुधा क्षुल्लकं हन्तुं धावितः, स्तम्भेनास्फाल्य मृतो ज्योतिष्केषूत्पन्नः। ततश्च्युतस्तत्राश्रमे पञ्चशततापसाधिपश्चण्डकौशिकाख्यो जातः। तत्राऽपि राजकुमारान् स्वाश्रमफलादि गृण्हतो वीक्ष्य क्रुद्धस्तान्निहन्तुं परशुहस्तो धावन् कूपे पतितः। सक्रोधो मृत्वा तत्रैवाश्रमे चण्डकौशिकेति नाम्ना दृष्टिविषः सर्पो जातः। स च प्रभुं प्रतिमास्थं विलोक्य क्रुधा ज्वलन्

सुरो जातः । तत उत्तरवाचालायां गतो भगवांस्तत्र नागसेनः परमान्नेन प्रभुं प्रतिलम्भितवान्, पञ्चदिव्यानि प्रकटितानि । ततः श्वेताम्ब्यां गतस्तत्र प्रदेशीनृपेण स्वामिनो महिमा कृतः । ततः सुरभिपुरं व्रजन्तं प्रभुं पञ्चभी रथैर्नैयकागोत्रिणो नृपा वन्दितवन्तः । ततः सुरभिपुरं गतस्तत्र गङ्गानद्युत्तारे सिद्धदत्तो नाविको जनान्नावमारोहयति, प्रभुरपि तां नावमारूढः । तस्मिन्नवसरे कौशिकशब्दं श्रुत्वा नैमित्तिकः क्षेमिलोऽवदत्—'मरणान्तं कष्टमद्यास्माभिः प्राप्यं, परमेतस्य महात्मनः प्रभावान्मोक्ष्यामहे' । ततश्च गङ्गामुत्तरतः प्रभोस्त्रिपृष्ठभवविदारितसिंहजीवसुदंष्ट्रदेवकृतो दुर्वातविकुर्वणानौमज्जनाद्युपसर्गो मथुरावासिजिनदासश्राद्धप्रतिबोधितवृषभजीवकम्बलशम्बलाभ्यां नागकुमाराभ्यां × निवारितः । ततो भगवान् राजगृहं गतस्तत्र तन्तुवायशालैकदेशे-

सूर्यं दर्शं दर्शं त्रिर्दृग्ज्वालां मुमोच, तासु विफलासु भृशं क्रुद्धो 'मद्विषाक्रान्तोऽयं पतन्मा मामाक्रामतु' इति दष्ट्वा दष्ट्वाऽपक्रामंस्तथैवाव्याकुलं प्रभुं गोक्षीरधवलं च भगवद्रक्तं वीक्ष्य "उवसम भो चंडकोसिआ ! उवसम" इति प्रभुवाक्यं च श्रुत्वा जातजातिस्मृतिः प्रभुं त्रिः प्रदक्षिणीकृत्य 'अहो करुणासागरेण भगवता दुर्गतिकूपादुद्धृतोऽहं' इत्यादि चिन्तयन् गृहीतानशनः पक्षं यावद्बिले तुण्डं प्रक्षिप्य स्थितो, गच्छदागच्छद्भिर्जनैः घृतादिच्छटाभिः पूजितस्तद्गन्धागतपिपीलिकाभिर्भृशं पीड्यमानः प्रभुदृष्टिसुधासिक्तो मृत्वा सहस्रारे देवो जातः।

×विस्तरतवृत्तस्त्वेवम्—मथुरायां साधुदासीजिनदासौ दम्पती परमश्रावकौ वसतः, ताभ्यां पञ्चमव्रते सर्वथा चतुष्पदप्रत्याख्यानं कृतं । तत्र चैका आभीरी स्वीयं गोरसमानीय साधुदास्यै ददाति, सा च यथोचितं मूल्यं ददाति । एवं च कालेन तयोरतीव प्रीतिर्जाता । अन्यदा आभीर्या विवाहे निमन्त्रितौ तौ दम्पती ऊचतुः, यदुत-'आवाभ्यामागन्तुं न शक्यते, परं भवतां विवाहे यद्युज्यते तदस्मद्गेहाद्ग्राह्यं' । ततस्तद्दत्तैश्चन्द्रोदयाद्युपकरणैर्वस्त्राभरणधूपाद्यैश्च तयोर्विवाहोत्सवोऽत्युत्कृष्टो जातः, तेन प्रमुदिताभ्यां आभीराभीरीभ्यां अतिरमणीयौ

ऽनुज्ञाप्य मासक्षपणतपसा द्वितीयचतुर्मास्यां स्थितः, तत्र गोशालः × समागतः, स च प्रथममासक्षपणपारणके विजयश्रेष्ठिना कूरादिविपुलभोजनविधिना प्रतिलम्भितं प्रभुं पञ्चदिव्यादिमहिमानं च दृष्ट्वा 'अहं भवच्छिष्योऽस्मी'ति उवाच। ततो द्वितीये पारणके नन्देन पक्वान्नादिना तृतीये च सुनन्देन परमान्नादिना प्रतिलम्भितः।

चतुर्थमासक्षपणे प्रभुः कोल्लागसन्निवेशे समागतस्तत्र बहुलनाम्नाद्विजेन पायसेन प्रतिलम्भितः, पञ्चदिव्यानि च सञ्जातानि। गोशालश्च तन्तुवायशालायां प्रभुमदृष्ट्वाऽखिले राजगृहे गवेषयन् स्वोपकरणानि द्विजेभ्यः समर्प्य मुखं शिरश्च मुण्डयित्वा कोल्लाके गतस्तत्र प्रभुं दृष्ट्वा 'त्वत्प्रव्रज्या मम भवतु' इत्यकथयत्। ततस्तेन सह

समागतकौ कम्बलशम्बलाख्यौ बालवृषभावानीय तयोर्दत्तौ। तौ नेच्छतः। बलाद् गृहे बद्ध्वा गतौ। श्राद्धेन चिन्तितं-यदीमौ पश्चात्प्रेषयिष्येते तदा षण्ढीकरणभारोद्वहनादिभिर्दुःखितौ भविष्यतः, तत्प्रासुकतृणजलादिभिः पोष्यमाणौ वाहनादिश्रमरहितौ सुखं तिष्ठतामनेन। कालेन अष्टम्यादिपर्वसु कृतपौषधेन तेन श्राद्धेन पुस्तकादिकं वाच्यमानं निशम्य तौ भद्रकौ जातौ। यद्दिने स श्राद्ध उपवासं करोति, तद्दिने तावपि तृणादि न भक्षयतः। एवं तस्य श्राद्धस्यापि साधर्मिकत्वेनातिप्रियौ जातौ। अन्यदा तस्य श्रेष्ठिनो मित्रेण तौ वृषावतिबलिष्ठौ सुन्दरौ च विज्ञाय श्रेष्ठिनमनापृच्छ्यैव भण्डीरवनयक्षयात्रायै अदृष्टधुरावपि तथा वाहितौ यथा त्रुटितसन्धी सञ्जातौ, आनीय श्रेष्ठिगृहे मुक्तौ। श्रेष्ठिना च तौ तदवस्थौ दृष्ट्वा साश्रुनेत्रेण भक्तप्रत्याख्यापन-नमस्कारदानादिभिर्निर्यामितौ मृत्वा नागकुमारत्वेनोत्पन्नौ। तयोर्नागकुमारयोरेकतरेण नौ रक्षिता, अन्येन च प्रभुमुपसर्गयन् सुदंष्ट्रसुरः प्रतिहतः। ततस्तं निर्जित्य प्रभोर्गुणान् गायन्तौ नृत्यन्तौ च समहोत्सवं सुरभिजलकुसुमवृष्टिं कृत्वा तौ स्वस्थानं गतौ।

× मङ्खलीनामा मङ्खः(चित्रपट्टदर्शनेन आजीविकाकारी भिक्षु.), तस्य भार्या सुभद्रा शरवणग्रामे गोबहुलद्विजगोशालायां प्रसूतेति गोशाल इति नाम।

प्रभुः सुवर्णखलग्रामं प्रति प्रस्थितः, पथि गोपैर्महाहण्डिकायां पच्यमानां क्षैरेयीमवलोक्य गोशालः प्रभुमाह–अत्र भुक्त्वा गम्यते। सिद्धार्थेन तद्भङ्गकथने गोशालेन च गोपेभ्यस्तज्ज्ञापिते गोपैः सुरक्षिताऽपि सा हण्डिका भग्ना। ततो 'यद्भाव्यं तद्भवत्येवे'ति नियतिः स्वीकृता गोशालेन। ततो ब्राह्मणग्रामे गतो भगवांस्तत्र नन्दोपनन्दभ्रातृद्वयसत्कौ द्वौ पाटकौ स्तः। प्रभुर्नन्दपाटके गतः प्रतिलम्भितश्चोत्तमान्नदानतो नन्देन, गोशालस्तु उपनन्दगृहे पर्युषितान्नदानेन रुष्टो 'यद्यस्ति मे धर्माचार्यस्य तपस्तेजस्तदा दह्यतामस्य गृहं' इति शशाप। तत आसन्नदेवता ददाह तद्गृहं। ततश्चम्पायामुपागतो भगवान्, तत्र द्विमासक्षपणेन तृतीयां चतुर्मासीमवसत्।

अन्त्यद्विमासपारणकं चम्पाया बहिः कृत्वा कालायसन्निवेशं गतः स्थितश्च शून्यगेहे प्रतिमया। तत्रैव सिंहो नाम ग्रामणीपुत्रो विद्युन्मत्या दास्या सह क्रीडन् गोशालेन हसितस्तेन च कुट्टितः प्रभुमाह–एकाक्येव कुट्टितोऽहं, युष्माभिः किं न वारितः?। सिद्धार्थेनोक्तं–मैवं पुनः कुर्याः। ततः स्वामी पात्रालके गतः स्थितश्च शून्यागारे प्रतिमया, तत्र स्कन्दो नाम ग्रामणीपुत्रः स्वदास्या स्कन्दिलया क्रीडन् हसितो गोशालेन, कुट्टितस्तेनापि प्राग्वत्।

ततः स्वामी कुमारकसन्निवेशं गतस्तत्र चम्पकवने प्रतिमया तस्थौ। इतश्च श्रीपार्श्वनाथसन्तानीयो मुनिचन्द्रमुनिर्भूरिशिष्यपरिवृतस्तत्रागत्य 'कूपनय'कुम्भकारशालायां स्थितोऽभूत्। तत्साधून् दृष्ट्वा गोशालः प्राह–के यूयं?। ते प्रोचुः–निर्ग्रन्था वयं। गोशालः प्राह–क्व यूयं?, क्व च मे धर्माचार्यः?। तैरुक्तं–यादृशस्त्वं तादृश एव ते धर्माचार्योऽपि भविष्यति। ततो रुष्टो गोशालः प्राह–मे धर्माचार्यतपोऽनुभावाद्दह्यतां युष्मदाश्रयः, तैरुचे–



स्वतः शिष्यीभूयावस्थानं गोशालस्य स्वाम्यन्तिके, तृतीया चतुर्मासी चम्पायां

नेयं भीतिरस्माकं । ततः स आगत्य प्रभोः सर्वमुवाच, सिद्धार्थेनोक्तं–नैते साधवस्तव शापाद्दह्यन्ते । ततो रात्रौ साध्वाश्रयान्तिके उद्योतमालोक्य 'दह्यन्तेत एते साधवः' इति जल्पाकं गोशालं पुनः सिद्धार्थोऽवदत्–नैते साधवो दह्यन्ते, किन्तु जिनकल्पतुलनां कुर्वाणः प्रतिमास्थो मुनिचन्द्रमुनिर्मत्तेन कुम्भकारेण चौरभ्रान्त्या व्यापादितः, स (उत्पन्नकेवलः सिद्ध इत्याव० चू०) चोत्पन्नावधिर्दिवं गतः, तन्महिमार्थमागतैः सुरैः कृतोऽयमुद्योतः, ततस्तत्प्रत्ययार्थं गोशालस्तत्र गतस्तथैव दृष्ट्वा तच्छिष्यान्निर्भर्त्स्य समागतः ।

ततो भगवांश्चौरायां गतस्तत्र 'चारिकौ (राजदूतौ) हेरिका'विति कृत्वाऽऽरक्षकाः कूपे प्रक्षिपन्ति, पूर्वं गोशालः क्षिप्तो भगवांस्तु नाद्यापि, तावता तत्र सोमाजयन्तीनाम्न्यावुत्पलनैमित्तिकभगिन्यौ संयमाक्षमत्वेन परिव्राजिकीभूते प्रभुमालोक्योपलक्ष्य च तमुपसर्गमुपशामयतः ।

ततः स्वामी पृष्ठचम्पां गतस्तत्र चतुर्मासक्षपणेन चतुर्थीं चतुर्मासीमतिवाह्य प्रत्यहं जीर्णश्रेष्ठिना निमन्त्र्यमाणोऽपि पूरणश्रेष्ठिगृहे पारणं कृतवान् । ततो विहृत्य कायङ्गलसन्निवेशे गतस्तत्र दरिद्रस्थविरा नाम पाषण्डस्था माघमासे हिमवर्षे निपतिते जागरणोत्सवे गायमाना गोशालेन हसितास्तैः कुट्टितः, आर्यशिष्य इति मुक्तः ।

ततः श्रावस्त्यां गतो भगवान् स्थितश्च वहिः प्रतिमया, तत्र सिद्धार्थेनोक्तं गोशालाय–यदद्य त्वं मनुजामिषं भोक्ष्यसे । ततः सोऽपि तन्निवारणाय वणिग्गेहेषु भिक्षार्थं भ्रमन् पितृदत्तवणिग्भार्यायाः श्रीभद्राया गेहं गतः, सा च मृतापत्यप्रसूः, तस्याः 'गर्भमांसमिश्रं पायसं कस्यचिद् भिक्षोर्देयं' इत्यपत्यजीवनोपायः शिवदत्तनैमि-

त्तिकेनोक्तः, अतस्तया तथैव निष्पादितं पायसं गोशालाय प्रदत्तं गृहज्वालनभयाच्च गृहद्वारं परावर्तितं। गोशालोऽप्यज्ञातवृत्तस्तद्भक्षयित्वा स्वाम्यन्तिके समागतः, ततो यथावत्सिद्धार्थोक्तावप्रत्यये वमने कृते मांसखण्डान्यालोक्य रुष्टेन तेन गवेषयताऽपि तद्गृहं न लब्धं, ततः पाटकोऽपि दग्धः स्वामिनाम्ना।

ततः स्वामी हरिद्रसन्निवेशाद्बहिर्हरिद्रवृक्षाधः प्रतिमयाऽवतस्थे, तत्र पान्थप्रज्वालिताग्निना प्रभोरनपसरणात्पादौ दग्धौ, गोशालस्तु पलायितः। ततः स्वामी मङ्गलाग्रामे वासुदेवचैत्ये प्रतिमया स्थितस्तत्र गोशालो डिम्भभापनायाक्षिविक्रियामकार्षीत्ततत्पित्रादिभिः कुट्टितो मुनिपिशाच इत्युपेक्षितश्च। ततो भगवानावर्त्तग्रामे बलदेवमन्दिरे प्रतिमया स्थितस्तत्र गोशालेन बालभापनाय मुखविक्रिया विहिता, ततस्तत्पित्रादयो 'ग्रहिलोऽयं, किमनेन हतेन?, अस्य गुरुरेव हन्यते' इति यावत्प्रभुं हन्तुमुद्यतास्तावद्बलदेवमूर्तिरेव लाङ्गलमुत्पाट्य तान्यवारयत्। ततः सर्वे प्रभुं प्रणेमुः। ततः प्रभुश्चोराकसन्निवेशं गतस्तत्र मण्डपे भोज्यं पच्यमानमालोक्य गोशालो वारंवारं न्यग्भूय वेलामवलोकयति, तैश्चौरशङ्कया तर्जितोऽनेनापि रुष्टेन स्वामिनाम्ना स मण्डपो ज्वालितः। ततः स्वामी कलम्बुकासन्निवेशं गतस्तत्र मेघ-कालहस्तिनामानौ द्वौ भ्रातरौ, कालहस्तिनोपसर्गितो मेघेन चोपलक्ष्य क्षामितः। ततः स्वामी क्लिष्टकर्मनिर्जरार्थं लाढाविषयं प्राप, तत्र हीलनादयो घोरा उपसर्गा अध्यासिताः, पूर्णकलशाख्यं चानार्यग्रामं गच्छतः स्वामिनोऽध्वनि द्वौ तस्करावपशकुनधियाऽसिमुत्पाट्य हन्तुमुद्यतौ, दत्तोपयोगेन वज्रिणा प्राणान्तोपसर्गं इति ज्ञात्वा वज्रेणाहतौ।

ततो भगवान् भद्रिकायां पञ्चमीं चतुर्मासीं चतुर्मासक्षपणेनातिवाह्य बहिः पारयित्वा तम्बालग्रामं गतस्तत्र पार्श्वनाथसन्तानीयो बहुशिष्यपरिवृतो नन्दिषेणाचार्यः प्रतिमास्थश्चौरभ्रान्त्याऽऽरक्षकपुत्रेण भल्लया हतो (आवश्यक० मिल० श्लाय० चू०) जातावधिर्दिवङ्गतः, शेषं गोशालवचनादिकं मुनिचन्द्रवत्। ततः स्वामी कूपिकसन्निवेशं गतस्तत्र चारिक(जासूस)शङ्कया गृहीतः, पार्श्वान्तेवासिनीभ्यां संयमाक्षमतया परिव्राजिकीभूताभ्यां विजया-प्रगल्भाभ्यां मोचितः। ततो गोशालः स्वामितः पृथग्भूतोऽन्यपथि गच्छन् पञ्चशतैस्तस्करैर्गृहीतो 'मातुल! मातुल!' इति कृत्वा वाहनया खिन्नोऽचिन्तयत् 'वरं स्वामिनैव सह गमन'मिति स्वामिनं मार्गयितुं लग्नः। स्वाम्यपि वैशाल्यां गत्वा लोहकारशालायां प्रतिमया स्थितः, तत्रैको लोहकारः षण्मासेन नीरोगीभूयोपकरणान्यादाय शालायामागतः प्रभुमालोक्य अमङ्गलधिया घनेन हन्तुमुद्यतोऽवधिना ज्ञातव्यतिकरेणेन्द्रेणागत्य तेनैव घनेन शिक्षितः। ततो ग्रामाकसन्निवेशं गतो भगवांस्तत्रोद्याने विभेलकयक्षो महिमानमकरोत्।

ततो बहुशालग्रामे शालवनोद्याने त्रिपृष्ठभवापमानिताऽन्तःपुरीजीवकटपूतनाव्यन्तरी तापसीरूपं विकुर्व्य जलभृतजटाभिरत्यसह्यमुपसर्गं चकार, ततोऽपि निश्चलं प्रभुमालोक्य प्रशान्ता स्तुतिमकरोत्। प्रभोश्च तं सहमानस्य षष्ठेन तपसा विशुद्ध्यमानलेश्यात्वेन लोकावधिरुत्पन्नः। ततः पुनर्भद्रिकां गत्वा षष्ठीं चतुर्मासीं स्थितस्तत्र चतुर्मासक्षपणं तपो विविधांश्चाभिग्रहानकरोत्। अत्र षण्मासान्ते पुनर्गोशालो मिलितः।

ततो बहिः पारयित्वा ऋतुबद्धेऽष्टौ मासान् यावन्मगधावनौ निरुपसर्गो विहृतवान् भगवान्।

तत आलम्भिकायां सप्तमीं चतुर्मासीं चतुर्मासक्षपणेनातिवाह्य बहिः पारयित्वा कुण्डगसन्निवेशो वासुदेवचैत्ये प्रतिमया स्थितस्तत्र वासुदेवार्चाऽग्रे कुचेष्टां कुर्वन् गोशालः कुट्टितो लोकैः। ततः स्वामी मर्दनग्रामे बलदेवचैत्ये प्रतिमया स्थितस्तत्रापि गोशालो बलदेवार्चाऽग्रे कुचेष्टां कुर्वन् कुट्टितो लोकैः, उभयत्रापि मुनिरिरिति कृत्वा मुक्तः।

कदाचित्पुरिमताल-शकटमुखोद्यानयोरन्तराले प्रतिमया स्थितो भगवान्। इतः सुभद्राभार्यायुतो वग्गुरश्रेष्ठी उद्यानस्थमल्लिजिनजीर्णायतनप्रतिमां नमस्कृत्य पुत्रार्थं नव्यायतनकारापणाभिग्रहेणारराध, जाते च पुत्रेऽन्यदा पूजार्थं गच्छन्नीशानेन्द्रवचसा मार्गस्थं स्वामिनं प्रागभ्यर्च्य पश्चाज्जिनायतने मल्लिजिनप्रतिमामभ्यर्चयति स्म।

ततः क्रमात्प्रभुः उन्नागसन्निवेशं गतस्तत्र मार्गे सम्मुखमागच्छन्तौ दन्तुरवधूवरौ गोशालेन हसितौ, यथा—

"तंत्तिल्लो[1] विहिराया, जाणइ दूरे वि जो जहिं वसइ। जं जस्स होइ जुग्गं, तं तस्स बिइज्जयं देइ ॥१॥"

ततो यानिकैः कुट्टयित्वा बद्धा च वंशजाल्यां प्रक्षिप्तः स्वामिच्छत्रधरत्वान्मुक्तश्च। ततोऽष्टमं चतुर्मासं राजगृहे चतुर्मासक्षपणेनाकरोत्। बहिः पारयित्वा वज्रभूमिं गतस्तत्र बहव उपसर्गा इति कृत्वा नवमं चतुर्मासं तत्र वसत्यभावादनियतं चतुर्मासक्षपणेनाकरोत्, अपरमपि च मासद्वयं तत्रैव विहृतवान्। ततः सिद्धार्थपुरं गत्वा भगवान्कूर्मग्रामं प्रस्थितः, तत्रान्तरा तिलस्तम्बं दृष्ट्वा 'भगवन्! अयं निष्पत्स्यते ? न वा ?' इति गोशालोऽपृच्छत्। ततः स्वामिना 'सप्तापि तिलपुष्पजीवा मृत्वा एकस्यां शम्बायां तिला भविष्यन्ती'त्युक्ते तद्वचनमन्यथा कर्तुं

1 तत्परो (दक्षो) विधिराजा, जानाति दूरेऽपि यो यत्र वसति। यद्यस्य भवति योग्यं, तत्तस्य द्वितीयकं ददाति ॥ १ ॥

गोशालस्तिलस्तम्बं मूलादुन्मूल्य एकान्तेऽमुचत्, ततः 'प्रभुवचनमन्यथा मा भवत्वि'ति सन्निहितदेवैर्वृष्टिः कृता, गोखुरेणार्द्रभूमौ स तिलस्तम्बः स्थिरो जातः । ततः प्रभुः कूर्मग्रामं गतस्तत्र वैश्यायनतापसस्य+ आतापनाग्रहणाय मुत्कलीकृतजटामध्ये यूकाबाहुल्यं दृष्ट्वा गोशालो 'यूकाशय्यातर २' इति जल्पन् वारंवारं तं हसितवान्। तेन च कुपितेन तेजोलेश्या मुक्ता, करुणासिन्धुर्भगवान् शीतलेश्यया तां निवार्य गोशालं ररक्ष । ततो गोशालस्तस्य तेजोलेश्यामालोक्य 'कथमियमुत्पद्यते?' इति भगवन्तमपृच्छत्। भगवानपि अवश्यम्भावितया सर्पस्य पयःपानमिव तादृगनर्थकारणमपि तेजोलेश्याविधिं शिक्षितवान्, यथा–'नित्यमातापनापरस्य षष्ठतपसः सनखकुल्माषपिण्डिकया एकेन चोष्णोदकचुलुकेन पारणकं कुर्वतः षण्मासान्ते तेजोलेश्योत्पद्यते' इति। ततः सिद्धार्थपुरं गच्छन् गोशालेन 'स तिलस्तम्बो न निष्पन्नः?' इत्युक्ते 'स एवैष तिलस्तम्बः' इति प्रभुणा प्रत्युक्तं । गोशालोऽश्रद्दधत् तां तिलशम्बां विदार्य सप्ततिलान् दृष्ट्वा 'त एव प्राणिनस्तस्मिन्नेव देहे पुनरावृत्त्य उत्पद्यन्ते' इति मतं 'यद्भाव्यं तद्भवत्येवे'ति नियतिं च गाढीकृतवान्। ततो भगवान् दशमं चतुर्मासं श्रावस्त्यां विचित्रतपसाऽकरोत्तत्र गोशालो भगवतः पृथग्भूय कुम्भकारशालायां स्थितो भगवदुक्तोपायेन तेजोलेश्यां साधयित्वा त्यक्तव्रतश्रीपार्श्वजिनशिष्यादष्टाङ्गनिमित्तं चाधीत्याहङ्कारेण 'जिनोह'मिति प्रलपति स्म।

---

+ [illegible] गो[illegible]ग्रामासन्नस्य एको ग्रामश्चौरैर्लुण्टितः, तत्र नश्यत्सु नगरजनेषु तैरेका स्त्री सापत्या गृहीता चम्पाया वेश्यायै च विक्रीता वेश्या जाता । तस्याः पुत्रो [illegible] गोबरग्रामासन्नभूमौ, स च तद्ग्रामवासिना कौशाम्बि(गोशङ्खि)नाम्ना कौटुम्बिकेन गृहीत्वा पुत्रत्वेन रक्षितो यौवनमनुप्राप्तो व्यापारार्थं चम्पायां [illegible] जननीवेश्यागामुको जातो गोत्रदेव्या गोवत्सयोर्व्यभिचारं निदर्श्य प्रतिबोधितस्तापसोऽभून्नाम्ना वैश्यायनर्षिरिति ।

ततोऽनुक्रमेण भगवान् बहुम्लेच्छां दृढभूमिं गतस्तत्र पेढालग्रामाद्बहिः पोढालोद्याने पोलासचैत्येऽष्टमभक्तेन एकरात्रिकीप्रतिमां तस्थिवान्। इतश्च सभागत इन्द्रः 'त्रैलोक्यजना अपि महावीरचेतश्चालयितुमसमर्था' इति प्रभोर्धैर्यवर्णनमकरोत्। तत् श्रुत्वा जातामर्षः सङ्गमाख्य इन्द्रसामानिकः सुरः 'क्षणात्तं चालयामि' इति शक्राध्यक्षं प्रतिज्ञां विधाय त्वरया प्रभुसमीपमागत्य प्रथमं धूलिवृष्टिं तथाऽकरोद्यथा पूर्णाक्षिकर्णादिविवरो भगवान्निरुद्धोच्छ्वासो जातः १, ततो वज्रतुण्डपिपीलिकाभिश्चालनीसदृशश्चक्रे, ताश्चैकतः प्रविश्यान्यतो निर्यान्ति २, तथा वज्रतुण्डा उदंशाः ३ तीक्ष्णतुण्डा घृतेलिकाः ४ वृश्चिकाः ५ नकुलाः ६ सर्पाः ७ मूषकाश्च ८ विकुर्वितास्ते भक्षयन्ति। करिणः ९ करिण्यश्च १० शुण्डाघातपदमर्दनादिना, पिशाचा अट्टाट्टहासादिना ११, व्याघ्रा नखदंष्ट्राभिर्विदारणादिना १२, सिद्धार्थत्रिशलारूपेण करुणविलापादिना १३ चोपसर्गयन्ति। ततः स्कन्धावारो विकुर्वितः, तस्य सूदजनाः प्रभुचरणयोर्मध्येऽग्निं प्रज्वाल्य हण्डिकां चोपस्थाप्य पायसं पचन्ति १४, ततश्चाण्डालास्तीक्ष्णतुण्डपक्षिपञ्जराणि प्रभोः कर्णबाहुमूलादिषु लम्बयन्ति, ते च मुखैर्भक्षयन्ति १५, खरवातेन पर्वतानपि कम्पयन् प्रभुमुत्क्षिप्योत्क्षिप्य पातयति १६, कलिकावातेन प्रभुं चक्रवद्भ्रमयति १७, ततो येन मुक्तेन मेरुचूलाऽपि चूर्णी स्यात्तादृशं सहस्रभारमितं लोहमयं कालचक्रं मुक्तं, तेन प्रभुराजानु भूमौ निमग्नः १८, ततः प्रभातं विकुर्व्य जल्पति–आर्य! उद्गतः सूर्यः किमद्यापि तिष्ठसि?, प्रभुर्ज्ञानेन रात्रिं जानाति १९, ततो देवर्द्धिं प्रदर्श्य भणति–वृणुष्व महर्षे! येन तव स्वर्गेण मोक्षेण वा प्रयोजनं, तथाप्यक्षुब्धं देवाङ्गनानाट्यगीत-

सूत्रं १२०
प्रभोश्छद्मस्थकालः, दशमचतुर्मासनन्तरो विहारः सङ्गमकृता उपसर्गाश्च

विलासादिभिरुपसर्गयति २०। एवं एकस्यां निशि विंशत्योपसर्गैरपि नेपदपि क्षोभमुपागतो भगवान्।

अत्र कविः—"बलं जगद्ध्वंसनरक्षणक्षमं, कृपा च सा सङ्गमके कृतागसि।"

"इतीव सञ्चिन्त्य विमुच्य मानसं, रुषेव रोषस्तव नाथ! निर्ययौ ॥ १ ॥"

ततः आहारेऽनेषणां करोति, चौरस्य कलङ्कं ददाति, कुशिष्यरूपेण गृहे गृहे छिद्राणि पश्यति, पृच्छतां जनानां 'मद्गुरुर्निशायां चौर्यार्थमागमिष्यति, ततोऽहं छिद्राण्यवलोकयामी'ति वदित्वा जनेभ्यः प्रभुं ताडयति। ततो भगवता 'यावन्नोपसर्गनिवृत्तिस्तावन्नाहारं ग्रहीष्यामि' इत्यभिग्रहो विहितः। ततः षण्मासान् यावत्तत्कृतानानाप्रकारानुपसर्गान् सहमानो भगवान्निराहारो विहृतः, षण्मासान्ते 'स गतो भविष्यती'ति विचिन्त्य यावद्व्रजग्रामगोकुले गोचर्यार्थं गतस्तावत्तत्रापि तत्कृतामनेषणां विज्ञाय प्रतिनिवृत्य बहिः प्रतिमया स्थितः। ततः स सुराधमः कथमप्यप्रकम्पं विशुद्धपरिणामं ज्ञानेन विज्ञायोपशान्तोऽब्रवीत्-हे आर्य! गच्छ विहारादौ हिण्ड च गोचर्यादौ, नाहं किमपि कर्त्ताऽस्मि' ततः स्वामिना 'इच्छया व्रजामि न वेति, नाहं कस्यापि वक्तव्य' इति प्रत्युक्तः। ततः स शक्रभिया प्रभुमभिवन्द्य सौधर्मकल्पं प्रतिगतः। प्रभुश्च तत्रैव गोकुले हिण्डन् वत्सपाल्या स्थविरया परमान्नेन प्रतिलम्भितो वसुधारा च निपतिता। इतश्च तावन्तं कालं सर्वे सौधर्मकल्पवासिनो देवा देव्यश्च निरानन्दा निरुत्साहास्तस्थुः, शक्रोऽपि वर्जितगीतनाट्य 'एतावतामुपसर्गाणां हेतुर्मत्कृता प्रशंसैवे'ति महादुःखाक्रान्तचित्तो दीनदृष्टिर्विमनस्कस्तिष्ठति। शक्तेनापीन्द्रेण कथं न निवारितः? इति चेत्

'यदि भवता निवारितो नाभविष्यत्तदाऽहमवश्यमक्षोभयिष्यं' इत्यवदिष्यत्स, अतो न निवारितः। ततश्च भ्रष्टप्रतिज्ञं श्याममुखं तं सुराधमं आगच्छन्तं विलोक्य शक्रः पराङ्मुखीभूय सुरानित्यूचे–हंहो सुराः!

"अयं हि कर्मचाण्डालः, पापः सङ्गमकामरः। दृश्यमानोऽपि पापाय, तद्द्रष्टुं नैष युज्यते ॥ १ ॥"

"बह्वनेनापराद्धं हि, यत्स्वामी नः कदर्थितः। अस्मत्तोऽपि न किं भीतो?, भवाद्भीतो न यद्ययम् ॥ २ ॥"

तदपवित्रोऽसौ दुरात्मा त्वरितं स्वर्गान्निर्वास्यतां, इत्यादिष्टैरिन्द्रभटैर्निर्दयं यष्टिमुष्ट्यादिभिस्ताड्यमानः साङ्गुलिपाणिमोटनाद्यनेकान् देवदेवाङ्गनाकृतानाक्रोशान् सहमानश्चौरः साशङ्क इव इतस्ततो विलोकयन् निर्वाणाङ्गार इव निस्तेजा निषिद्धाखिलपरिवार एकाकी अलर्कश्वेव स्वर्गान्निर्वासितो मेरुचूलायामेकसागरावशेषमायुः समापयिष्यति। तदग्रमहिष्यश्च दीनास्याः शक्रानुज्ञया स्वपतिमनुजग्मुः।

ततः स्वामिनमालम्भिकायां हरिकान्तः श्वेताम्बिकायां हरिसहश्च विद्युत्कुमारेन्द्रौ प्रियं प्रष्टुमागतौ, श्रावस्त्यां शक्रेन्द्रः स्कन्दप्रतिमायामवतीर्य प्रभुमवन्दत, तेन महती महिमप्रवृत्तिः। ततः कौशाम्ब्यां चन्द्रसूर्यौ, वाणारस्यां पुनः शक्रः, राजगृहे ईशानेन्द्रः, मिथिलायां जनको राजा धरणेन्द्रश्च प्रियं पृच्छति स्म।

ततो वैशाल्यामेकादशश्चतुर्मासोऽभूत्, तत्र भूतेन्द्रः प्रियं पृच्छति। ततः सुंसुमारपुरे गतस्तत्र चमरोत्पातः। ततो भोगपुरे सकण्टकखर्जूरीकम्बाभिर्महेन्द्रक्षत्रियकृता उपसर्गाः प्रियपृच्छार्थमागतसनत्कुमारेन्द्रेणापाकृताः।

ततः क्रमेण कौशाम्ब्यां गतस्तत्र शतानीको नृपो, मृगावती राज्ञी, सुगुप्तोऽमात्यस्तद्भार्या नन्दा, सा च

श्राविका मृगावतीराज्ञ्याः सखी। तत्र पौषकृष्णप्रतिपदि स्वामिना द्रव्यादिचतुर्विधोऽभिग्रहो गृहीतस्तद्यथा–द्रव्यतः कुल्माषान्सूर्पकोणस्थान्, क्षेत्रतो दातुरेकः पादो देहल्या अन्तरेकश्च बहिर्भवेत्, कालतो निवृत्ते भिक्षासमये, भावतो राजसुता दासत्वमापन्ना निगडिता मुण्डितशीर्षा रुदत्यष्टमभक्तिका च चेद्दास्यति तदा ग्रहीष्यामीति परीषहसहनायाभिगृह्य प्रत्यहं भिक्षायै पर्यटति। अमात्यादयोऽनेकानुपायान् कुर्वन्ति, परं न पूर्यतेऽभिग्रहः। इतश्च तदैव शतानीकेन चम्पा भग्ना। तत्र च दधिवाहनभूपभार्या धारिणी तत्सुता वसुमती च, द्वे अपि केनचित्सुभटेन गृहीते। तत्र धारिणी 'त्वां भार्यां करिष्यामी'ति सुभटवार्त्तया जिह्वां चर्वित्वा मृता, ततो वसुमती पुत्रीति समाश्वास्य कौशाम्ब्यामानीय चतुष्पथे विक्रेतुं स्थापिता, धनावहश्रेष्ठिना गृहीत्वा चन्दनेति कृताभिधाना पुत्रीत्वेन स्थापिताऽतीव प्रिया सञ्जाता। अन्यदा स्वपादौ प्रक्षालयन्त्यास्तस्या भूलुठद्वेणी श्रेष्ठिना स्वयं गृहीतेत्यालोक्य मूलानाम्नी श्रेष्ठिभार्या 'गृहस्वामिनी तु इयमेव युवतिर्भाविनी, यतोऽहं निर्माल्यप्राया' इति विषण्णचित्ता तां शिरोमुण्डन-निगडक्षेपणपूर्वं यत्रे निरुद्ध्य क्वापि गता, चतुर्थे दिने कथमपि प्राप्ततच्छुद्धिः श्रेष्ठी यन्त्रमुद्घाट्य तदवस्थां तां देहल्यां संस्थाप्य सूर्पकोणस्थान् कुल्माषान् दत्त्वा निगडभञ्जनार्थं लोहकाराऽऽकारणाय यावद्गतस्तावत् 'यदि कोऽपि भिक्षुरागच्छेत्तर्हि दत्त्वा भुञ्जे' इति चिन्तयन्त्यां तस्यां प्रभुस्समागतः। साऽपि प्रमुदिता 'गृहाणेदं प्रभो!' इति जगौ। ततः स्वामी स्वाभिग्रहे रोदनं न्यूनमालोक्य निवृत्तः। ततो वसुमती 'अहो!! अस्मिन्नवसरे भगवानागत्य किञ्चिदप्यगृहीत्वा निवृत्त' इति

दुःखतो रुरोद। ततः पूर्णाभिग्रहो भगवान् पश्चान्निवृत्त्य तान्कुल्माषानग्रहीत्। अत्र कविः—

"चन्दना सा कथं नाम, बालेति प्रोच्यते? बुधैः। मोक्षमादत्त कुल्माषै-र्महावीरं प्रतार्य या ॥ १ ॥"

ततः पञ्चदिव्यानि सञ्जातानि, शक्रः समागतः, देवदेव्यो नन्तृतुः, चन्दनायाः शिरसि केशाः सञ्जाताः, निगडानि च नूपुराणि। ततो मातृष्वसुर्मृगावत्या मिलनं। तत्र च सम्बन्धितया वसुधाराधनं गृह्णन्तं शतानीकं निवार्य चन्दनाऽनुज्ञया धनावहाय दत्त्वा 'वीरस्य प्रथमा साध्वीयं भविष्यती'त्युक्त्वा शक्रस्तिरोदधे।

ततः स्वामी चम्पायां गतस्तत्र स्वातिदत्तद्विजस्याग्निहोत्रशालायां द्वादशीं चतुर्मासीं स्थितः, निशायां च नित्यं पूर्णभद्रमाणिभद्रौ यक्षेन्द्रौ स्वामिनः पर्युपास्तिं कुर्वाणौ विलोक्य विस्मितस्य द्विजस्य 'को ह्यात्मा?' इति पृच्छा, भगवतश्च 'योऽहमिति मन्यते' इत्यादिजीवव्यवस्थापनं, पुनरपि पृच्छा 'किमुपदेशनं ?' इति, ततो 'द्विधा-धार्मिकमधार्मिकं च, एवं मूलोत्तरगुणभेदात्प्रत्याख्यानमपि द्विधा' इत्याद्युत्तरेण द्विजः प्रबुद्धः।

ततो जृम्भिकग्रामं गतस्तत्र शक्रः प्रभुं वन्दित्वा नाट्यविधिं च जनेभ्यो दर्शयित्वा 'इयद्भिर्दिनैरत्र भगवतो ज्ञानमुत्पत्स्यते' इत्यकथयत्। ततो मेण्ढिकग्रामे चमरेन्द्रः प्रियं पप्रच्छ। ततः षण्मानिग्रामे बहिः प्रतिमास्थस्य प्रभोरन्तिके कश्चिद्गोपो वृषान् मुक्त्वा ग्रामं गतः, आगतश्च पृच्छति-'देवार्य! क्व गता मे वृषभाः?'। भगवति च मौनवति प्राग्वद्रुष्टेन तेन प्रभुकर्णयोः कट(वंश)शलाके तथा क्षिप्ते, यथा मिथो मिलिते, छिन्नाग्र-त्वाददृश्ये चाभूतां। एतच्च कर्म शय्यापालककर्णयोस्त्रपुःप्रक्षेपेण त्रिपृष्ठभवेऽर्जितमुदितं च वीरभवे, शय्या-


प्रभोश्छद्मस्थकालः, अभिग्रहपूर्तिश्चन्दनया, द्वादश्यां चम्पाचतुर्मास्यां स्वातिदत्तप्रबोधः

तए णं समणे भगवं महावीरे अणगारे जाए, इरियासमिए भासासमिए एसणासमिए आयाण-भंडमत्त-निक्खेवणासमिए उच्चार-

गालको भवं भ्रमन्नयमेव गोपः सञ्जातः। ततः स्वामी मध्यमापापायां गतस्तत्र सिद्धार्थवणिग्गेहे खरकवैद्यो भिक्षार्थमागतं प्रभुं सशल्यं ज्ञातवान्। ततो वणिजाय ज्ञापिते सवैद्यो वणिगुद्याने गत्वा सण्डासकाभ्यां ते शलाके निर्गमयति स्म। तदाकर्षणे च स्वामिना तथाऽऽरादिर्मुक्ता, यथा सकलमप्युद्यानं महाभैरवं जातं, तत्र देवकुलमपि कारितं जनैः। प्रभुश्च संरोहिण्यौषध्या नीरोगो जातः, वैद्यवणिजौ स्वर्गं जग्मतुः, गोपः सप्तमं नरकं, एवं चोपसर्गा गोपेन प्रारब्धा गोपेनैव च निष्ठिताः। एतेषु जघन्यमध्यमोत्कृष्टविभागः पुनरेवं—

"शीतं माघनिशायां य-द्वितेने कटपूतना। जघन्येषूपसर्गेषु, तदुत्कृष्टं प्रभोरभूत् ॥ १ ॥"

"कालचक्रं मध्यमेषू-त्कृष्टं दुष्टसुरेरितम्। उत्कृष्टेषूत्कृष्टतमं, शल्यप्रोद्धरणं पुनः ॥ २ ॥"

१२१–यत एवं परीषहान् सहते ततः श्रमणो भगवान् महावीरः 'अनगारो' मुनिर्जातः, स च 'ईर्यायां' गमनागमनप्रवृत्तौ 'समितः' सम्यक् प्रवृत्तः, एवं भाषायां समितः 'एषणायां' निर्दोषभिक्षागवेषणे समितः, आदाने 'भाण्डमात्रस्य' वस्त्राद्युपकरणजातस्य, यद्वा 'भाण्डस्य' वस्त्रादेर्मृन्मयभाजनस्य वा 'मात्रस्य' पात्रविशेषस्य च, 'निक्षेपणे' मोचनेऽपि च तस्य, 'समितः' सुप्रत्युपेक्षणादिना सम्यक् प्रवृत्तः, तथा 'उच्चारः' पुरीषं 'प्रस्रवणं' मूत्रं 'खेलो' निष्ठीवनं 'जल्लो' देहमलः 'सिङ्घाणो' नासिकामलः, एतेषां परिष्ठापने समितः, शुद्धस्थण्डिलाद्याश्रयणात्। एतच्चान्त्यसमितिद्वयं प्रभोर्भाण्डसिङ्घाणाद्यसम्भवेऽपि नामाखण्डनार्थमुक्तं। एवं

प्रभोश्छद्मस्थकालश्चारित्रोत्कृष्टतायां कांस्यपात्र्यादिदृष्टान्ताः

पासवण-खेल-जल्ल-सिंघाण-पारिट्ठावणियासमिए, मणसमिए वयसमिए कायसमिए, मणगुत्ते वयगुत्ते कायगुत्ते, गुत्ते गुत्तिंदिए गुत्तबंभयारी, अकोहे अमाणे अमाए अलोहे, संते पसंते उवसंते, परिनिव्वुडे अणासवे अममे अकिंचणे छिन्नगंथे निरुवलेवे। कंसपाई इव मुक्कतोए, संखे इव निरंजणे, जीवे इव अप्पडिहयगई, गगणमिव निरालंबणे, वाऊ इव अप्पडिबद्धे, सारयसलिलं व सुद्धहियए, पुक्ख-

---

मनसः 'समितः' सम्यक् प्रवर्त्तकः, वचसः समितः, कायस्य समितः, तथा मनसि गुप्तो वचसि गुप्तः काये गुप्तः, मनः प्रभृतीनां शुभानां प्रवर्त्तकोऽशुभानां च निरोधक इत्यर्थः, यतः—'समितिः' सत्प्रवृत्तिः 'गुप्तिः' असत्प्रवृत्तेर्निवृत्तिः। अत एव 'गुप्तः' सर्वथाऽऽश्रवाद्रक्षितात्मा, 'गुप्तेन्द्रियः' स्वस्वविषयं प्रति धावमानेन्द्रियगणरक्षकः 'गुप्तब्रह्मचारी' वसत्यादिनवगुप्तिविराजद्ब्रह्मचर्यपालकः, तथा अक्रोधोऽमानोऽमायोऽलोभः, क्रोधादिकषायचतुष्करहित इत्यर्थः। अतः शान्तोऽन्तर्वृत्त्या, प्रशान्तो बहिर्वृत्त्या, उपशान्तोऽन्तर्बहिश्चोभयतः। अत एव 'परिनिर्वृतः' सर्वसन्तापवर्जितः 'अनाश्रवो' हिंसाद्याश्रवाद्विरतः 'अममो' ममत्वरहितः 'अकिञ्चनो' द्रव्यरहितः 'छिन्नग्रन्थः' त्यक्तहिरण्यादिपरिग्रहः 'निरुपलेपः' द्रव्यभावमललेपरहितस्तत्र द्रव्यतो निर्मलदेहो भावतो मिथ्यात्वादिमलवर्जितः। अथ निरुपलेपत्वादिकमेव दृष्टान्तेन द्रढयति—

कांस्यपात्रीव 'मुक्ततोयः' त्यक्तस्नेहः, यथा कांस्यपात्रा तोयेन न लिप्यते तथा प्रभुः स्नेहेन न लिप्यत इति भावः। पुनः शङ्ख इव 'निरञ्जनः' रागाद्युपरञ्जनरहितः, जीव इवाप्रतिहतगतिः, सर्वत्रास्खलितविहारित्वात्, गगनमिव 'निरालम्बनः' ग्रामकुलाद्यालम्बनरहितः, वायुरिवाप्रतिबद्धः, एकत्र क्वाप्यनवस्थानात्, शारदस-

गगनं व निरालंबे, कुम्मे इव गुत्तिंदिए, खग्गिविसाणं व एगजाए, विहग इव विप्पमुक्के, भारंडपक्खी इव अप्पमत्ते, कुंजरे इव सोंडीरे, वसभे इव जायथामे, सीहे इव दुद्धरिसे, मंदरे इव निक्कंपे, सागरे इव गंभीरे, चंदे इव सोमलेसे, सूरे इव दित्ततेए, जच्चक-

---

लिलमिव शुद्धहृदयः, कालुष्याकलङ्कितत्वात्, 'पुष्करपत्रं' कमलपत्रं, तद्वन्निरुपलेपः, यथा कमलपत्रं जलेन न लिप्यते तथा प्रभुः कर्मणेत्यर्थः, कूर्म इव गुप्तेन्द्रियः, यथा कूर्मः कदाचिद् ग्रीवाचरणचतुष्करूपाङ्गपञ्चकेन गुप्तो भवेत्तथा भगवानहर्निशमिन्द्रियपञ्चकेन, खड्गिविषाणमिवैकजातः, यथा खड्गिनो-गण्डकस्य श्वापद-विशेषस्य विषाणं-शृङ्गं एकमेव स्यात्तथा भगवानपि, रागादिसहायरहितत्वात्, विहगः-पक्षी, तदिव विप्र-मुक्तः, मुक्तपरिवारत्वादनियतवासाच्च, भारण्डपक्षीवाप्रमत्तः, निद्राद्यभावात्, तेषां स्वरूपमिदं—

"भारण्डपक्षिणः ख्याता-स्त्रिपदा मर्त्यभाषिणः। द्विजिह्वा द्विमुखाश्चैको-दराऽभिन्नफलैषिणः ॥ १ ॥"

ते चात्यन्तमप्रमत्ता एव निर्वाहं लभन्तेऽतस्तदुपमा। कुञ्जर इव 'शौण्डीरः' कर्मशत्रून् प्रति शूरः, वृषभ इव 'जातस्थामा' जातबलः, स्वीकृतमहाव्रतभारोद्वहने समर्थत्वात्, सिंह इव दुर्द्धर्षः, परीषहश्वापदैरनभिभ-वनीयत्वात्, 'मन्दरो' मेरुस्तद्वन्निष्कम्पः-उपसर्गवातैरविचलसत्त्वः, सागर इव गम्भीरः, हर्षविषादादिकारण-सद्भावेऽप्यविकृतचित्तः, चन्द्र इव सौम्यलेश्यः, परोपतापकृच्चित्तवृत्तिरहितत्वात्, सूरः-आदित्यस्तदिव दीप्त-तेजाः, द्रव्यतो देहकान्त्या भावतो ज्ञानेन परेषां क्षोभकत्वाद्वा, जात्यकनकमिव जातरूपः, यथा कनकं मल-व्यपगमेन दीप्तं भवति तथा प्रभोरपि कर्ममलापगमेन स्वरूपमतिदीप्तमस्ति, वसुन्धरेव सर्वस्पर्शविषहः, यथा

णगं व जायरूवे, वसुंधरा इव सव्वफासविसहे, सुहुयहुयासणे इव तेयसा जलंते। (इमेसिं पयाणं दुन्नि संगहणिगाहाओ-

"कंसे संखे जीवे, गगणे वाऊ य सरयसलिले अ। पुक्खरपत्ते कुम्मे, विहगे खग्गे य भारंडे ॥ १ ॥

कुंजर-वसहे सीहे, नगराया चेव सागरमखोहे। चंदे सूरे कणगे, वसुंधरा चेव हूयवहे ॥ २ ॥") ॥ १२१ ॥

नत्थि णं तस्स भगवंतस्स कत्थइ पडिबंधे, से अ पडिबंधे चउव्विहे पन्नत्ते, तं जहा—दव्वओ खित्तओ कालओ भावओ। दव्वओ णं-सचित्ताचित्तमीसेसु दव्वेसु, खित्तओ णं-गामे वा नगरे वा अरण्णे वा खित्ते वा खले वा घरे वा अंगणे वा नहे वा, कालओ णं-समए वा आवलिआए वा आणापाणुए वा थोवे वा खणे वा लवे वा मुहुत्ते वा अहोरत्ते वा पक्खे वा मासे वा उऊए वा अयणे वा संवच्छरे वा,

---

हि वसुन्धरा शीतोष्णादिसर्वं समतया सहते तथा भगवानपि। सुष्ठु हुतो-घृतादिभिः सिक्तो यो हुताशनो-वह्निस्तद्वत्तेजसा ज्वलद्रूपः। एतेषां प्रागुक्तानां कांस्यपात्र्याद्येकविंशतिपदानां द्वे सङ्ग्रहणीगाथे निगदसिद्धे।

१२२—नास्ति तस्य भगवतः कुत्रापि प्रतिबन्धः, स च प्रतिबन्धश्चतुर्विधः प्रज्ञप्तस्तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च। तत्र द्रव्यतः सचित्ताचित्तमिश्रेषु द्रव्येषु, सचित्तं महिलादि, अचित्तं भूषणादि, मिश्रं सालङ्कारमहिलादि, तेषु। तथा क्षेत्रतो—ग्रामे वा नगरे वा अरण्ये वा 'क्षेत्रे' धान्योत्पत्तिभूमौ वा 'खले' धान्य-तुषपृथक्करणस्थाने वा गृहे वा 'अङ्गणे' गृहाग्रभागे वा 'नभसि' आकाशे वा। कालतः—'समये' उत्पलपत्रशतवेध—जीर्णपटशाटिकापाटनादिदृष्टान्तसाध्ये सर्वसूक्ष्मकालविशेषे, आवलिकायां—असङ्ख्यातसमयात्मिकायां वा, आनप्राणे—उच्छ्वासनिःश्वासकाले वा, स्तोके—सप्तोच्छ्वासप्रमाणे वा, क्षणे—घटिकाषष्ठभागे वा, लवे—सप्तस्तोकप्रमाणे वा, मुहूर्त्ते—सप्तसप्ततिलवमाने वा, अहोरात्रे—त्रिंशन्मुहूर्त्तमिते वा, पक्षे-पञ्चदशदिनमाने

अन्नयरे वा दीहकालसंजोए, भावओ णं–कोहे वा माणे वा मायाए वा लोभे वा भए वा हासे वा पिज्जे वा दोसे वा कलहे वा अब्भक्खाणे वा पेसुन्ने वा परपरिवाए वा अरइरई वा मायामोसे वा मिच्छादंसणसल्ले वा (ग्रं० ६००), तस्स णं भगवंतस्स नो एवं भवइ ॥ १२२ ॥

से णं भगवं वासावासवज्जं अट्ठ गिम्ह-हेमंतिए मासे गामे एगराइए नगरे पंचराइए, वासीचंदणसमाणकप्पे समतिणमणिलेट्ठुकंचणे समदुक्खसुहे इहलोगपरलोगअप्पडिबद्धे जीवियमरणे अ निरवकंखे संसारपारगामी कम्मसत्तुनिग्घायणट्ठाए अब्भुट्ठिए एवं च णं विहरइ ॥

वा, मासे–पक्षद्वयात्मके वा, ऋतौ–द्विमासिकायां वा, अयने–षाण्मासिके वा, संवत्सरे–द्वादश-त्रयोदशमासात्मके वा, अन्यतरस्मिन् वा दीर्घकालसंयोगे–युग-पूर्वाङ्ग-पूर्वादौ। भावतः–क्रोधे वा माने वा मायायां वा लोभे वा भये वा हास्ये वा 'प्रेम्णि' रागे वा 'द्वेषे' अप्रीतौ वा 'कलहे' वाग्युद्धे वा 'अभ्याख्याने'ऽसत्कलङ्कदाने वा 'पैशुन्ये' प्रच्छन्नतया परावर्णवादे वा 'परपरिवादे' विप्रकीर्णपरकीयगुणदोषप्रकाशने वा, मोहनीयोदयाच्चित्तोद्वेगोऽरती रतिर्मोहनीयोदयाच्चित्तप्रीतिस्तत्र वा, मायायुक्तमृषायां वा 'मिथ्यादर्शनं' मिथ्यात्वं, तदेवानेकदुःखहेतुत्वाच्छल्यं, तस्मिन् वा, तस्य भगवत नैवं प्रागुक्तस्वरूपेषु द्रव्यादिषु कुत्रापि प्रतिबन्धो भवति।

१२३–स भगवान् 'वर्षावासवर्ज' चतुर्मासं वर्जित्वा अष्टौ ग्रीष्म-हेमन्तिकान् मासान् ग्रामे 'एकरात्रिकः' एकरात्रिवसनशीलः, एवं नगरे पञ्चरात्रिकः, पुनः 'वासी' सूत्रधारस्य काष्ठघटनोपकरणविशेषः (वांसला–वसूला इति लोके), तस्मिंश्चन्दने च 'समानकल्पः' तुल्याध्यवसायः, तृण-मणि-लेष्टु-काञ्चनेषु सममनः, दुःखे सुखे च समः, इहलोके परलोके चाप्रतिबद्धः, जीविते मरणे च 'निरवकाङ्क्षो' वाञ्छारहितः, संसारपारगामी, कर्मशत्रोः 'निर्घातनार्थं' हननाय 'अभ्युत्थितः' तत्परः, एवमीर्यासमित्यादिगुणयोगेन विहरति।

णगं व जायरूवे, वसुंधरा इव सव्वफासविसहे, सुहुयहुयासणे इव तेयसा जलंते। (इमेसिं पयाणं दुन्नि संगहणिगाहाओ-

"कंसे संखे जीवे, गगणे वाऊ य सरयसलिले अ। पुक्खरपत्ते कुम्मे, विहगे खग्गे य भारंडे ॥ १ ॥

कुंजर-वसहे सीहे, नगराया चेव सागरमखोहे। चंदे सूरे कणगे, वसुंधरा चेव हूयवहे ॥ २ ॥") ॥ १२१ ॥

नत्थि णं तस्स भगवंतस्स कत्थइ पडिबंधे, से अ पडिबंधे चउव्विहे पन्नत्ते, तं जहा—दव्वओ खित्तओ कालओ भावओ। दव्वओ णं-सचित्ताचित्तमीसेसु दव्वेसु, खित्तओ णं-गामे वा नगरे वा अरण्णे वा खित्ते वा खले वा घरे वा अंगणे वा नहे वा, कालओ णं-समए वा आवलिआए वा आणापाणुए वा थोवे वा खणे वा लवे वा मुहुत्ते वा अहोरत्ते वा पक्खे वा मासे वा उऊए वा अयणे वा संवच्छरे वा,

---

हि वसुन्धरा शीतोष्णादिसर्वं समतया सहते तथा भगवानपि। सुष्ठु हुतो-घृतादिभिः सिक्तो यो हुताशनो-वह्निस्तद्वत्तेजसा ज्वलद्रूपः। एतेषां प्रागुक्तानां कांस्यपात्र्याद्येकविंशतिपदानां द्वे सङ्ग्रहणीगाथे निगदसिद्धे।

१२२-नास्ति तस्य भगवतः कुत्रापि प्रतिबन्धः, स च प्रतिबन्धश्चतुर्विधः प्रज्ञप्तस्तद्यथा-द्रव्यतः क्षेत्रतः कालतो भावतश्च। तत्र द्रव्यतः सचित्ताचित्तमिश्रेषु द्रव्येषु, सचित्तं महिलादि, अचित्तं भूषणादि, मिश्रं सालङ्कारमहिलादि, तेषु। तथा क्षेत्रतो-ग्रामे वा नगरे वा अरण्ये वा 'क्षेत्रे' धान्योत्पत्तिभूमौ वा 'खले' धान्य-तुषपृथक्करणस्थाने वा गृहे वा 'अङ्गणे' गृहाग्रभागे वा 'नभसि' आकाशे वा। कालतः-'समये' उत्पलपत्रशतवेध-जीर्णपटशाटिकापाटनादिदृष्टान्तसाध्ये सर्वसूक्ष्मकालविशेषे, आवलिकायां-असङ्ख्यातसमयात्मिकायां वा, आनप्राणे-उच्छ्वासनिःश्वासकाले वा, स्तोके-ससोच्छ्वासप्रमाणे वा, क्षणे-घटिकाषष्ठभागे वा, लवे-ससस्तोकप्रमाणे वा, मुहूर्त्ते-सप्तसप्ततिलवमाने वा, अहोरात्रे-त्रिंशन्मुहूर्त्तमिते वा, पक्षे-पञ्चदशदिनमाने

...मगरे वा दीहकालसंजोए, भावओ णं–कोहे वा माणे वा मायाए वा लोभे वा भए वा हासे वा पिज्जे वा दोसे वा कलहे वा अब्भक्खाणे वा पेसुन्ने वा परपरिवाए वा अरइरई वा मायामोसे वा मिच्छादंसणसल्ले वा (ग्रं० ६००), तस्स णं भगवंतस्स नो एवं भवइ ॥ १२२॥

से णं भगवं वासावासवज्जं अट्ठ गिम्ह-हेमंतिए मासे गामे एगराइए नगरे पंचराइए, वासीचंदणसमाणकप्पे समतिणमणिलेट्ठुकंचणे समदुक्खसुहे इहलोगपरलोगअप्पडिबद्धे जीवियमरणे अ निरवकंखे संसारपारगामी कम्मसत्तुनिग्घायणट्ठाए अब्भुट्ठिए एवं च णं विहरइ ॥

...वा, मासे–पक्षद्वयात्मके वा, ऋतौ–द्विमासिकायां वा, अयने–षाण्मासिके वा, संवत्सरे–द्वादश-त्रयोदशमासात्मके वा, अन्यतरस्मिन् वा दीर्घकालसंयोगे–युग-पूर्वाङ्ग-पूर्वादौ। भावतः–क्रोधे वा माने वा मायायां वा लोभे वा भये वा हास्ये वा 'प्रेम्णि' रागे वा 'द्वेषे' अप्रीतौ वा 'कलहे' वाग्युद्धे वा 'अभ्याख्याने'ऽसत्कलङ्कदाने वा 'पैशुन्ये' प्रच्छन्नतया परावर्णवादे वा 'परपरिवादे' विप्रकीर्णपरकीयगुणदोषप्रकाशने वा, मोहनीयोदयाच्चित्तोद्वेगोऽरती रतिर्मोहनीयोदयाच्चित्तप्रीतिस्तत्र वा, मायायुक्तमृषायां वा 'मिथ्यादर्शनं' मिथ्यात्वं, तदेवानेकदुःखहेतुत्वाच्छल्यं, तस्मिन् वा, तस्य भगवत नैवं प्रागुक्तस्वरूपेषु द्रव्यादिषु कुत्रापि प्रतिबन्धो भवति।

१२३–स भगवान् 'वर्षावासवर्जं' चतुर्मासं वर्जित्वा अष्टौ ग्रीष्म-हेमन्तिकान् मासान् ग्रामे 'एकरात्रिकः' एकरात्रिवसनशीलः, एवं नगरे पञ्चरात्रिकः, पुनः 'वासी' सूत्रधारस्य काष्ठघटनोपकरणविशेषः (वांसला–वसूला इति लोके), तस्मिंश्चन्दने च 'समानकल्पः' तुल्याध्यवसायः, तृण-मणि-लेष्टु-काञ्चनेषु सममनः, दुःखे सुखे च समः, इहलोके परलोके चाप्रतिबद्धः, जीविते मरणे च 'निरवकाङ्क्षो' वाञ्छारहितः, संसारपारगामी, कर्मशत्रोः 'निर्घातनार्थं' हननाय 'अभ्युत्थितः' तत्परः, एवमीर्यासमित्यादिगुणयोगेन विहरति।

तस्स णं भगवंतस्स अणुत्तरेणं नाणेणं अणुत्तरेणं दंसणेणं अणुत्तरेणं चरित्तेणं अणुत्तरेणं आलएणं अणुत्तरेणं विहारेणं अणुत्तरेणं वीरिएणं अणुत्तरेणं अज्जवेणं अणुत्तरेणं मद्दवेणं अणुत्तरेणं लाघवेणं अणुत्तराए खंतीए अणुत्तराए मुत्तीए अणुत्तराए गुत्तीए अणुत्तराए तुट्ठीए, अणुत्तरेणं सच्च-संजम-तव-सुचरिअ-सोवचिअ-फलनिव्वाणमग्गेणं अप्पाणं भावेमाणस्स दुवालस संवच्छराइं विइक्कंताइं, तेरस-

---

१२४-तस्य भगवतः 'अनुत्तरेण' सर्वोत्कृष्टेन ज्ञानेन-मत्यादिचतुष्टयेन, अनुत्तरेण 'दर्शनेन' चक्षुदर्शनादिना सम्यक्त्वेन वा, अनुत्तरेण चारित्रेण यथाख्याताख्येन, अनुत्तरेण 'आलयेन' स्त्र्याद्यसंसक्तवसतिसेवनेन, अनुत्तरेण विहारेण, अनुत्तरेण 'वीर्येण' विशिष्टोत्साहेन, अनुत्तरेण 'आर्जवेन' मायानिग्रहेण, अनुत्तरेण 'मार्दवेन' माननिग्रहेण, अनुत्तरेण 'लाघवेन' संयमक्रियासु दक्षत्वेन, यद्वा द्रव्यतोऽल्पोपधित्वेन भावतो गौरवत्रयत्यागेन, अनुत्तरया 'क्षान्त्या' क्रोधनिग्रहेण, अनुत्तरया 'मुक्त्या' निर्लोभतया, अनुत्तरया 'गुप्त्या' मनोगुप्त्यादिकया, अनुत्तरया 'तुष्ट्या' मनःप्रसत्त्या, तथा अनुत्तरं यत्सत्यं 'संयमः' अहिंसादिसप्तदशविधः 'तपो' बाह्यादिद्वादशविधः, एतेषां य'त्सुचरणं' सम्यगासेवनं, तेन 'सोपचयं' पुष्टं फलं मोक्षरूपं यस्य, एवंविधेन निर्वाण-मार्गेणात्मानं भावयतो द्वादशसंवत्सरा व्यतिक्रान्ताः, एतस्मिंश्छद्मस्थकाले प्रमादोऽन्तमुहूर्त्त एव। तत्र च—

"पुनरियं तपस्सङ्ख्या, ह्येकं षाण्मासिकं प्रभोः। दिनपञ्चकहीनं तु, षाण्मासिकमभिग्रहे ॥ १ ॥"
"चतुर्मासक्षपणानि, नव द्वे तु त्रिमासिके। सार्द्धे द्विमासिके द्वे च, द्विमासिकानि षट् पुनः ॥ २ ॥"
"सार्द्धमासिके पुनर्द्वे, मासिकानि द्विषट् पुनः। जातान्यर्द्धमासिकानि, द्वासप्ततिमितानि तु ॥ ३ ॥"



प्रभोश्छद्म-काले चा-रित्रोत्कृष्ट-त्वं तपस्स-ङ्ख्या च

समस्स संवच्छरस्स अंतरा वट्टमाणस्स जे से गिम्हाणं दुचे मासे चउत्थे पक्खे, वइसाहसुद्धे, तस्स णं वइसाहसुद्धस्स दसमीपक्खे णं पाईणगामिणीए छायाए, पोरिसीए अभिनिविट्टाए, पमाणपत्ताए, सुव्वएणं दिवसेणं, विजएणं मुहुत्तेणं, जंभियगामस्स नगरस्स बहिया उज्जुवालियाए नईए तीरे, वेयावत्तस्स चेइअस्स अदूरसामंते, सामागस्स गाहावईस्स कट्ठकरणंसि, सालपायवस्स अहे, गोदोहियाए उक्कुडुनिसिज्जाए आयावणाए आयावेमाणस्स, छट्ठेणं भत्तेणं अपाणएणं, हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं, झाणंतरिआए वट्ट-

"भद्रादिप्रतिमास्तिस्रो, द्वादशाष्टमभक्ततः। प्रतिमाश्चैकरात्रिक्यः, षष्ठानां द्वे शते तथा ॥ ४ ॥"
"एकोनत्रिंशदधिकं, तपः सर्वं जलोज्झितम्। चतुर्थं नित्यभक्तं च, न कदाचिदभूत्पुनः ॥ ५ ॥"
"आसीदेकोनपञ्चाशं, पारणाहः शतत्रयम्। व्रताहश्चेति षण्मासाः, पक्षो द्वादशवर्ष्यभूत् ॥ ६ ॥"

एवं च त्रयोदशमस्य संवत्सरस्य 'अन्तरा' मध्ये वर्तमानस्य योऽसौ ग्रीष्मकालस्य द्वितीयो मासश्चतुर्थः पक्षो वैशाखशुद्धः, तस्य वैशाखशुद्धस्य दशम्याः पक्षे-दिवसे 'प्राचीनगामिन्यां' पूर्वदिग्यायिन्यां छायायां, पौरुष्यां पाश्चात्यायां 'अभिनिवृत्तायां' जातायां, प्रमाणप्राप्तायां न तु न्यूनाधिकायां, सुव्रताख्ये दिवसे विजयाभिधे मुहूर्ते, जृम्भिकग्रामाख्यस्य नगरस्य बहिस्तात् ऋजुवालुकाया नद्यास्तीरे 'व्यावृत्तस्य' जीर्णस्य 'चैत्यस्य' व्यन्तरायतनस्य यद्वा व्यावृत्ताख्यस्य चैत्यस्य 'अदूरसामन्ते' नातिदूरे नातिनिकटे श्यामाकस्य 'गाथापतेः' गृहस्थस्य "कट्ठकरणंसि"त्ति क्षेत्रे सालपादपस्य अधो गोदोहिकया उत्कुटुकनिषद्ययोपविष्टस्य आतापनया आतापयतः प्रभोः षष्ठेन भक्तेन अपानकेन, वर्त्तमानस्य, हस्तोत्तरानक्षत्रेण सह चन्द्रस्य योगमुपागते सति

माणस्स, अणंते अणुत्तरे निव्वाघाए निरावरणे कसिणे पडिपुण्णे केवलवरनाणदंसणे समुप्पन्ने ॥ १२४ ॥

तए णं समणे भगवं महावीरे अरहा जाए, जिणे केवली सव्वन्नू सव्वदरिसी सदेवमणुआसुरस्स लोगस्स परिआयं जाणइ पासइ, सव्वलोए सव्वजीवाणं आगइं गइं ठिइं चवणं उववायं तक्कं मणो माणसिअं भुत्तं कडं पडिसेवियं आवीकम्मं रहोकम्मं, अरहा अरहस्स-

---

'ध्यानान्तरिकायां' शुक्लध्यानस्य पृथक्त्ववितर्कसविचार-एकत्ववितर्काविचाररूपाद्यभेदद्वये वर्त्तमानस्य 'अनन्ते' अनन्तवस्तुविषये 'अनुत्तरे' सर्वोत्कृष्टे 'निर्व्याघाते' भित्त्यादिभिरस्खलिते 'निरावरणे' समस्तावरणरहिते 'कृत्स्ने' समस्ते 'प्रतिपूर्णे' सर्वावयवोपेते, ईदृशे केवलवरज्ञानदर्शने समुत्पन्ने ।

१२५—ततो—ज्ञानोत्पत्त्यनन्तरं श्रमणो भगवान् महावीरः 'अर्हन्' अशोकाद्यष्टमहाप्रातिहार्यरूपपूजायोग्यो जातः, अत एव 'जिनो' रागादिशत्रुजेता केवली सर्वज्ञः सर्वदर्शी सन् सदेवमनुजासुरस्य लोकस्य पर्यायमिति जातावेकवचनत्वात्पर्यायान्-उत्पादव्ययध्रौव्यलक्षणान् जानाति ज्ञानेन पश्यति च दर्शनेन, नैतावन्मात्रमेव, किन्तु सर्वलोके सर्वजीवानां आगतिं भवान्तरात्, गतिं भवान्तरे, स्थितिं काय-भवस्थितिभेदाद्द्विधामपि 'च्यवनं' देवलोकान्नरतिर्यक्षु अवतरणं 'उपपातं' देवेषु नारकेषु वोत्पत्तिं, तथा तेषां—जीवानामिदं 'तत्कं' तदीयं यद्वा 'तर्कं' विकल्पं 'मनः' चित्तं 'मानसिकं' मनोगतं चिन्तारूपं पुद्गलसमूहं, भुक्तं आहारादि, कृतं चौर्यादि, प्रतिसेवितं मैथुनादि 'आविष्कर्म' प्रकटं कृतं 'रहःकर्म' प्रच्छन्नं कृतं, एतत्सर्वं जानाति पश्यति चेति योज्यं । पुनः किंवि० प्रभुः ?, न विद्यते किमपि 'रहः' प्रच्छन्नं यस्य, त्रिभुवनस्य करामलकवद्दृष्टत्वात् अरहाः, 'रहस्यं'

भागी, तं तं कालं मणवयकायजोगे वट्टमाणाणं सव्वलोए सव्वजीवाणं सव्वभावे जाणमाणे पासमाणे विहरइ ॥ १२५ ॥

एकान्तं न भजते इति अरहस्यभागी, जघन्यतोऽपि सुरकोटिसेव्यत्वात्, तस्मिन् तस्मिन् काले मनोवाक्काययोगेषु यथाऽर्हं वर्त्तमानानां सर्वलोके सर्वजीवानां 'सर्वभावान्' गुणपर्यायांस्तत्र सहभाविनो ज्ञानादयो गुणाः क्रमभाविनो हर्षविषादादयः पर्यायास्तान् जानन् पश्यंश्च विहरति ।

इतश्च तस्मिन्नवसरे मिलितेषु सर्वसुरासुरेषु विहितायां समवसरणरचनायां लाभाभावं जानन्नपि—

"तत्रादिश्य क्षणं धर्मं, देवोद्योते जगद्गुरुः । लाभाभावान्मध्यमायां, महसेनवनेऽगमत् ॥ १ ॥"

"श्रीअपापामहापुर्यां, यज्ञार्थी सोमिलो द्विजः । मगधागोर्वरादिभ्य, ईयुरेकादश द्विजाः ॥ २ ॥"

तेषु च इन्द्रभूत्यग्निभूतिवायुभूतिनामानस्त्रयो बान्धवाश्चतुर्दशविद्याविशारदाः क्रमेण जीव-कर्म-तज्जीवतच्छरीरविषये सन्दिग्धाः प्रत्येकं पञ्चशतपरिवाराः सन्ति । एवं व्यक्त-सुधर्माणौ द्वौ द्विजौ तावत्परिवारौ तथैव विद्वांसौ क्रमशः पञ्चभूतानि सन्ति न वेति यो यादृशः स तादृश एवेति च सन्देहवन्तौ । तादृशावेव च मण्डित-मौर्यपुत्रनामानौ बान्धवौ प्रत्येकं सार्द्धत्रिशतपरिवारौ क्रमाद्बन्ध-देवविषयकसन्देहभाजौ, तथा अकम्पितोऽचलभ्राता मेतार्यः प्रभासश्चेति चत्वारो द्विजाः प्रत्येकं त्रिशतपरिवाराः क्रमेण नैरयिक-पुण्य-परलोक-मोक्षविषये सन्दिग्धाः सन्ति । ते चैकादशापि द्विजा एकैकसन्देहभाजोऽपि सर्वज्ञत्वाभिमानक्षतिभयात्परस्परं

न पृच्छन्ति, एवं चैते तत्परिवारभूताश्च चतुश्चत्वारिंशच्छतानि तथाऽन्येऽप्यनेके × द्विजास्तत्र मिलिताः सन्ति।

अत्रान्तरे च भगवन्नमस्यार्थमागच्छतः सुरासुरान् वीक्ष्य ते चिन्तयन्ति–'अहो यज्ञस्य महिमा !! यदेते सुराः साक्षात्समागताः'। अथ तान् यज्ञमण्डपं च विहाय प्रभुपार्श्वं गच्छतो विज्ञाय द्विजा विषेदुः, ततो'ऽमी सर्वज्ञं वन्दितुं व्रजन्ती'ति जनोक्त्या श्रुत्वा इन्द्रभूतिः सामर्षश्चिन्तयामास–'अहो !! मयि सर्वज्ञे सत्यपि अन्योऽपि स्वं सर्वज्ञं ख्यापयति, दुःश्रवमेतत्कर्णकटु कथं नाम श्रूयते ?, किञ्च–कदाचित्कोऽपि मूर्खः केनचिद्धूर्त्तेन वञ्च्यते, परमनेन तु सुरा अपि वञ्चिताः, यदेवं यज्ञमण्डपं मां सर्वज्ञं च विहाय तत्समीपं व्रजन्ति'।

"अहो !! सुराः कथं भ्रान्ता–स्तीर्थाम्भ इव वायसाः। कमलाकरवद्भेका, मक्षिकाश्चन्दनं यथा ॥ १ ॥"

"करभा इव सद्वृक्षान्, क्षीरान्नं शूकरा इव। अर्कस्यालोकवद् घूका–स्त्यक्त्वा यागं प्रयान्ति यत् ॥२॥" युग्मम्॥

यद्वा यादृशोऽयं सर्वज्ञस्तादृशा एवैते सुराः, अनुरूप एव संयोगः, तथापि नाहमेतस्य सर्वज्ञाटोपं सहे, यतो—

"व्योम्नि सूर्यद्वयं किं स्यात् ?, गुहायां केसरिद्वयम् !। खड्गौ द्वौ वा प्रतीकारे ?, किं सर्वज्ञावहं स च ? ॥ ३ ॥"

---

× यथा उपाध्याय—शङ्कर ईश्वर शिवजी, जानी–गङ्गाधर महीधर भूधर लक्ष्मीधर, पिंड्या–विष्णु मुकुन्द गोविन्द पुरुषोत्तम नारायण, दुवे–श्रीपति उमापति विद्यापति गणपति जयदेव, व्यास–महादेव शिवदेव मूलदेव सुखदेव गङ्गापति गौरीपति, त्रिवाडी–श्रीकण्ठ नीलकण्ठ हरिहर, रामजी–बालकृष्ण यदुराम राम रामाचार्य, राउल–मधुसूदन नरसिंह कमलाकर सोमेश्वर हरिशङ्कर त्रिकम, जोसी–पूनो रामजी शिवराम देवराम गोविन्दराम रघुराम उदीराम इत्यादयः।

ततः प्रभुं वन्दित्वा प्रतिनिवर्त्तमानाञ्जनान् सोपहासमपृच्छत्–'भो भो! दृष्टः सर्वज्ञः?, कीदृग्रूपः?। तैरूचे—
"यदि त्रिलोकी गणनापरा स्यात्, तस्याः समाप्तिर्यदि नायुषः स्यात्। पारे परार्ध्यं गणितं यदि स्यात्, गणेयनिःशेषगुणोऽपि सः स्यात् ॥ ४ ॥" ततः स दध्यौ–"नूनमेष महाधूर्त्तो, मायायाः कुलमन्दिरम्। कथं लोकः समस्तोऽपि, विभ्रमे पातितोऽमुना ॥ ५ ॥ न क्षमे क्षणमात्रं तु, तं सर्वज्ञं कदाचन। तमःस्तोममपाकर्त्तुं, सूर्योनेव प्रतीक्षते ॥ ६ ॥ वैश्वानरः करस्पर्शं, केसरोल्लुञ्चनं हरिः। क्षत्रियश्च रिपुक्षेपं, न सहन्ते कदाचन ॥ ७ ॥ मया हि येन वादीन्द्रा–स्तूष्णीं संस्थापिताः स मे। गेहे शूरतरः कोऽसौ, सर्वज्ञो मत्पुरो भवेत् ॥ ८ ॥ शैला येनाग्निना दग्धाः, पुरः के तस्य पादपाः?। उत्पाटिता गजा येन, का वायोस्तस्य पुम्भिकाः? ॥९॥ किञ्च–गता गौडदेशोद्भवा दूरदेशं, भयाज्जर्जरा गौर्जरास्त्रासमीयुः। मृता मालवीयास्तिलङ्गास्तिलङ्गो–द्भवा जज्ञिरे पण्डिता मद्भयेन ॥ १० ॥ अरे लाटजाताः! क याताः प्रणष्टाः, पटिष्ठा अपि द्राविडा व्रीडयाऽऽर्त्ताः। अहो!! वादिलिप्सातुरे मय्यमुष्मिन्, जगत्युत्कटं वादिदुर्भिक्षमेतत् ॥ ११ ॥ तस्य ममाग्रे कोऽसौ, वादी सर्वज्ञमानमुद्वहति?। इति तत्र गन्तुमुत्कं, तमग्निभूतिर्जगादेवम् ॥ १२ ॥ किं तत्र वादिकीटे, तव प्रयासेन? यामि बन्धोऽहम्। कमलोन्मूलनहेतो–र्नेतव्यः? किं सुरेन्द्रगजः ॥ १३ ॥ अकथयदथेन्द्रभूति–र्यद्यपि मच्छात्रजय्य एवासौ। तदपि प्रवादिनाम, श्रुत्वा स्थातुं न शक्नोमि ॥१४॥ यथा–पीलयतस्तिलः कश्चि–द्दलतश्च यथा कणः। सूडयतस्तृणं किञ्चि–दगस्तेः पिवतः सरः ॥ १५ ॥ मर्दयतस्तुषः कोऽपि, तद्वदेष ममाभवत्। तथापि सासहिर्न हि, सुधा सर्वज्ञवा-

दिनम् ॥ १६ ॥ एकस्मिन्नजिते ह्यस्मिन्, सर्वमप्यजितं भवेत्। एकदा हि सती लुप्त-शीला स्यादसती सदा ॥१७॥ चित्रं चैवं त्रिजगति, सहस्रशो निर्जिते मया वादैः। क्षिप्रचटीस्थाल्यामिव, कङ्कटुकोऽसौ स्थितो वादी ॥१८॥ अस्मिन्नजिते सर्वं, जगज्जयोद्भूतमपि यशो नश्येत्। अल्पमपि शरीरस्थं, शल्यं प्राणान् वियोजयति ॥ १९ ॥ यतः–छिद्रे स्वल्पेऽपि पोतः किं, पाथोधौ न निमज्जति ?। एकस्मिन्निष्टके कृष्टे, दुर्गः सर्वोऽपि पात्यते ॥ २० ॥"

इत्यादि विचिन्तयन् कृतद्वादशतिलकः स्वर्णयज्ञोपवीतभूषितः स्फारपीताम्बराडम्बरः कैश्चित्पुस्तकपाणिभिः कैश्चित्कमण्डलुपाणिभिः कैश्चिद्दर्भपाणिभिः "सरस्वतीकण्ठाभरण! वादिविजयलक्ष्मीशरण! वादिमदगञ्जन! वादिमुखभञ्जन! वादिगजसिंह! वादिसिंहशरभ! वादिविजयविचक्षण! वादिवृन्दभूपाल! वादिशिरःकाल! वादिकदलीकृपाण! वादितमोभाण! वादिगोधूमघरट्ट! मर्दितवादिमरट्ट! विदिताखिलशास्त्ररहस्य!" इत्यादि-विरुदावलीमुखरितदिक्चक्रैः छात्रपञ्चशतैः परिवृत इन्द्रभूतिः प्रभोः समीपं गच्छंश्चिन्तयामास–'अहो!! धृष्टेनानेन किमेतत्कृतं ? यदहं सर्वज्ञाटोपेन प्रकोपितः' एतेन सत्यापिता एता जनोक्तयः, यदुत—

"कृष्णसर्पस्य मण्डूक–श्चपेटां दातुमुद्यतः। आखूरदैश्च मार्जार-दंष्ट्रापाताय सादरः ॥ १ ॥ वृषभः स्वर्गजं शृङ्गैः, प्रहर्तुं काङ्क्षति द्रुतम्। द्विपः पर्वतपाताय, दन्ताभ्यां यतते रयात् ॥ २ ॥ शशकः केसरिस्कन्ध–केसरां कृष्टुमीहते। मदृष्टौ यदसौ सर्व–वित्त्वं ख्यापयते जने ॥ ३ ॥ त्रिभिर्विशेषकम् ॥ शेषशीर्षमणिं लातुं, हस्तः स्वीयः प्रसारितः। सर्वज्ञाटोपतोऽनेन, यदहं परिकोपितः ॥ ४ ॥" भवतु किमेतेन ?, अधुना नाशयामि, यतः—

"तावद्गर्जन्ति मातङ्गा, वने मदभरालसाः। शिरोविलग्नलाङ्गूलो, यावन्नायाति केसरी ॥५॥ मम भाग्य-मरात्मा, वाचयं समुपस्थितः। अद्य तां रसनाकण्डू-मपनेष्ये विनिश्चितम् ॥६॥ लक्षणे मम दक्षत्वं, साहित्ये संहिता मतिः। तर्के कर्कशताऽत्यर्थं, क शास्त्रे नास्ति ? मे श्रमः ॥ ७ ॥ यमस्य मालवो दूरे, किं स्यात् ? को वा वचस्विनः। अपोषितो रसो नूनं, किमजेयं ? च चक्रिणः ॥ ८ ॥ अभेद्यं किमु ? वज्रस्य, किमसाध्यं ? महात्मनाम्। क्षुधितस्य न किं खाद्यं ?, किं न वाच्यं ? खलस्य च ॥ ९ ॥ कल्पद्रूणामदेयं किं ?, निर्विण्णानां किमत्यजम्। गच्छामि तर्हि तस्यान्ते, पश्याम्येतत्पराक्रमम् ॥१०॥" इत्यादि चिन्तयन् प्राप्तः समवसरणभूमौ—

"वीरं निरीक्ष्य सोपान-स्थितो दध्यौ स विस्मितः। किं ब्रह्मा ? शङ्करो ? विष्णुः ?, स्कन्दः ? किं वा सदाशिवः ? ॥ ११ ॥ चन्द्रः ? किं, स न, यत्कलङ्ककलितः, सूर्योऽपि नो, तीव्ररुक्। मेरुः ? किं, न, स यन्नितान्तकठिनो, विष्णुः ?, न, यत्सोऽसितः ॥ ब्रह्मा ? किं, न, जरातुरः स च, जराभीरुर्न, यत्सोऽतनु-र्ज्ञातं दोषविवर्जितोऽखिलगुणाकीर्णोऽन्तिमस्तीर्थकृत् ॥१२॥ पुनः—हेमासिंहासनासीनं, सुरराजनिषेवितम्। आदित्यमिव दुष्प्रेक्ष्यं, दृष्ट्वा वीरमचिन्तयत् ॥ १३ ॥ कथं मया महत्त्वं हा !!, रक्षणीयं पुराऽर्जितम्। प्रासादं कीलिकाहेतो-र्भङ्क्तुं को नाम वाञ्छति ? ॥ १४ ॥ सूत्रार्थी पुरुषो हारं, कस्त्रोटयितुमीहते ?। कः कामकलशं शस्यं, स्फोटयेत् ? ठिकरीकृते ॥ १५ ॥ भस्मने चन्दनं को वा, दहेत् ? दुष्प्रापमप्यथ। लोहार्थी को महाम्भोधौ, नौभङ्गं कर्त्तुमिच्छति ? ॥ १६ ॥ एकेनाविजितेनापि, मानहानिस्तु का ? मम। जगज्जैत्रस्य किं नाम, करिष्यामि ? च साम्प्रतम् ॥ १७ ॥

अविचारितकारित्व-महो !! मे मन्ददुर्द्धियः । जगदीशावतारं य-ज्जेतुमेनं समागतः ॥ १८ ॥ अस्याग्रेऽहं कथं वक्ष्ये ?, पार्श्वे यास्यामि ? वा कथं । सङ्कटे पतितोऽस्मीति, शिवो रक्षतु मे यशः ॥ १९ ॥ कथञ्चिदपि भाग्येन, चेद्भवेदत्र मे जयः । तदा पण्डितमूर्द्धन्यो, भवामि भुवनत्रये ॥ २० ॥ इत्यादि चिन्तयन्नेव, सुधामधुरया गिरा । आभाषितो जिनेन्द्रेण, नाम-गोत्रोक्तिपूर्वकम् ॥२१॥ हे गौतमेन्द्रभूते ! त्वं, सुखेनागतवानसि ?। इत्युक्तेऽचिन्तयद्वेत्ति ?, नामापि किमसौ मम ॥ २२ ॥ यद्वा–जगत्त्रितयविख्यातं, को वा नाम न वेत्ति? माम् । जनस्याबालगोपालं, प्रच्छन्नः ? किं दिवाकरः ॥२३॥ प्रकाशयति गुप्तं चेत्, सन्देहं मे मनःस्थितम् । तदा जानामि सर्वज्ञमन्यथा तु न किञ्चन ॥२४॥ चिन्तयन्तमिति प्रोचे, प्रभुः को जीवसंशयः ?। विभावयसि ? नो वेद–पदार्थं शृणु तान्यथ ॥२५॥ समुद्रो मथ्यमानः किं ?, गङ्गापूरोऽथवा किमु ?। आदि ब्रह्मध्वनिः किं वा ?, वीरवेदध्वनिर्बभौ ॥२६॥

वेदपदानि च–"विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय पुनस्तान्येवानुविनश्यति, न प्रेत्यसञ्ज्ञाऽस्ति" इति । तत्र 'विज्ञानघनो' गमनागमनादिचेष्टावान् आत्मा, स एव 'एतेभ्यः' पृथिव्यप्तेजोवाय्वाकाशेभ्यो भूतेभ्यः 'समुत्थाय' प्रकटीभूय, मद्याङ्गेषु मदशक्तिरिव, पुनस्तान्येवानुविनश्यति–तत्रैव विलयमाप्नोति, जले बुद्बुद इव । ततो भूतव्यतिरिक्तस्यात्मनोऽभावात् 'न प्रेत्यसञ्ज्ञाऽस्ति' न मृतस्य पुनर्जन्मास्ति, इत्येतेषां वेदपदानामर्थस्तव मनसि यद्वर्त्तते तदयुक्तं, शृणु तावदेतेषां पदानां सत्यमर्थं–'विज्ञानघनो' नाम ज्ञानदर्शनोपयोगात्मकं विज्ञानं, तन्मयत्वादात्मा विज्ञानघनः, प्रतिप्रदेशमनन्तज्ञानपर्यायात्मकत्वात्तस्य, स एव विज्ञानघन–उपयोगात्मक आत्मा

कथञ्चित्पृथिव्यादिभूतेभ्यस्तद्विकारेभ्यो वा घटादिभ्यः 'समुत्तिष्ठते' उपयोगतयोत्पद्यते, घटादिज्ञानपरिणतो आत्मा घटादिभ्य एव हेतुभूतेभ्यो भवति, घटादिज्ञानोपयोगस्य घटादिवस्तुसापेक्षत्वात् । एवं चैतेभ्यो भूतेभ्यो-घटादिवस्तुभ्यस्तदुपयोगतया जीवः 'समुत्थाय' उत्पद्य पुनस्तान्येवानुविनश्यति, किमुक्तं ?, तस्मिन् घटादिपदार्थे नष्टे व्यवहिते वा आत्माऽपि तदुपयोगरूपतया नश्यति, अन्योपयोगरूपतयोत्पद्यते सामान्य-रूपतया वा अवतिष्ठते । ततश्च न प्रेत्यसञ्ज्ञाऽस्ति, कोऽर्थः ?, न प्राक्तनी घटाद्युपयोगरूपा सञ्ज्ञाऽवतिष्ठते, वर्त्तमानोपयोगेन तस्या नाशितत्वादिति । तथा "स वै अयमात्मा ज्ञानमयो ब्रह्ममयो मनोमयो वाङ्मयः कायमयः चक्षुर्मयः श्रोत्रमय आकाशमयो वायुमयस्तेजोमयोऽप्मयः पृथ्वीमयो हर्षमयो धर्ममयोऽधर्ममयो दददमयः" इत्यत्रोक्तं 'दमो दानं दया' इति दकारत्रयं यो वेत्ति 'स जीवः' इत्याद्यैः, पुनः "यथा चारित्रस्तथा भवति, साधुकारी साधुर्भवति पाप-कारी पापो भवति" तथैव "पुण्यः पुण्येन कर्मणा, पापः पापेन कर्मणा" इत्यादिवेदपदैरस्त्येव भूतातिरिक्त आत्मा ।

किञ्च-विद्यमानभोक्तृकमिदं शरीरं, भोग्यत्वात्, ओदनादिवत्, इत्याद्यनुमानेनापि यथा—

"क्षीरे घृतं तिले तैलं, काष्ठेऽग्निः सौरभं सुमे । चन्द्रकान्ते सुधा यद्वत्, तथाऽऽत्माऽङ्गगतः पृथक् ॥ १ ॥"

एवं च वीरवचनैश्छिन्नसन्देहः श्रीइन्द्रभूतिः पञ्चशतच्छात्रपरिवृतः प्रव्रजितः । ततः प्रभुमुखात् "उप्पन्नेइ वा विगमेइ वा धुवेइ वा" इति त्रिपदीमवाप्य द्वादशाङ्गीं रचितवानिति प्रथमो गणधरः ॥ १ ॥

"तं च प्रव्रजितं श्रुत्वा, दध्यौ तद्बान्धवोऽपरः । अपि जातु द्रवेदद्रि-र्ज्वलेज्जलमपि क्वचित् ॥ १ ॥"

"वह्निः शीतः स्थिरो वायुः, सम्भवेन्न तु बान्धवः। हारयेदिति पप्रच्छ, लोकानश्रद्दधद्भृशम् ॥ २ ॥"
"ततश्च निश्चये जाते, चिन्तयामास चेतसि। गत्वा जित्वा च तं धूर्त्तं, वालयामि सहोदरम् ॥ ३ ॥"
"सोऽप्येवमागतः शीघ्रं, प्रभुणाऽऽभाषितस्तथा। सन्देहं तस्य चित्तस्थं, व्यक्तीकृत्यावदद्विभुः ॥ ४ ॥"
"हे गौतमाग्निभूते! कः, सन्देहस्तव कर्मणः?। कथं वा वेदतत्त्वार्थं, विभावयसि? न स्फुटम् ॥ ५ ॥"

वेदपदानि च—"पुरुष एवेदं ग्निं सर्वं यद्भूतं यच्च भाव्यं, उतामृतत्वस्येशानः, यदन्नेनातिरोहति, यदेजति यन्नेजति यद्दूरे यदु अन्तिके यदन्तरस्य सर्वस्य यदु सर्वस्यास्य बाह्यतः" इति। तत्र 'पुरुष एव' आत्मैव, एवकारः पुरुषव्यतिरिक्तस्य कर्मेश्वरादेर्निषेधार्थं, 'ग्निं' इति वाक्यालङ्कारे, इदं प्रत्यक्षं दृश्यमानं चेतनाचेतनरूपं सर्वं यद् 'भूतं' अतीतं यच्च 'भाव्यं' भविष्यन्मुक्तिसंसारावपि, स पुरुष एव, 'उत' शब्दः समुच्चये, 'अमृतत्वस्य' अमरणभावस्य मोक्षस्य 'ईशानः' स्वामी, लुप्तचकारनिर्देशाद्यच्च 'अन्नेन' आहारेण 'अतिरोहति' अतितरां वृद्धिमुपैति, तथा यदेजति—चलति पश्वादि, यन्नेजति—न चलति पर्वतादि, यद्दूरे मेर्वादि, "यदु" इत्यत्र 'उ' अवधारणे, ततो यदेवान्तिके—समीपे, तथा यद् 'अन्तः' मध्येऽस्य—चेतनाचेतनस्य, सर्वस्य यदेवास्य सर्वस्य बाह्यतः, तत्सर्वं पुरुष एवेत्यनेन वेदवाक्येन यन्नरामरतिर्यक्पर्वतपृथिव्यादिकं वस्तुजातं दृश्यते तत्सर्वमात्मैव, ततः कर्मादेर्निषेधः स्पष्ट एव, अन्यच्च—न प्रत्यक्षादिगोचरं कर्म। किञ्च—अमूर्त्तस्यात्मनो मूर्त्तेन कर्मणा कथमनुग्रहोपघातौ भवतः, न खलु आकाशस्य चन्दनादिना मण्डनं खड्गादिना खण्डनं वा सम्भवति, ततो नास्त्येव कर्म, परं "पुण्यः पुण्येन कर्मणा, पापः पापेन

कर्मणा" इत्यादिना वेदपदेन स्फुट एव कर्मसद्भावस्ततः किं तत्त्वमिति तव प्रतिभासते, परमयुक्तमेवैतत्, यतस्त्रिविधानि वेदपदानि, कानिचिद्विधिप्रतिपादकानि, यथा—"अग्निहोत्रं जुहुयात्स्वर्गकाम"इत्यादीनि, कानिचिदनुवादपराणि, यथा—"द्वादशमासाः संवत्सर" इत्यादीनि, कानिचिच्च स्तुतिपराणि, यथैतान्येव "पुरुष एवेदं" इत्यादीनि, ततोऽनेन पुरुषस्य महिमा जात्यादिमदत्यागायाद्वैतभावना वा ख्याप्यते, न तु कर्माद्यभावः, यथा—

"जले विष्णुः स्थले विष्णु-र्विष्णुः पर्वतमस्तके। सर्वभूतमयो विष्णु-स्तमाद्विष्णुमयं जगत्॥ १॥"

अनेन श्लोकेन विष्णोर्महिमा कथ्यते, न त्वन्यपदार्थानामभावः। नहि खल्वकर्मण आत्मनः कस्यापि कार्यस्य कर्तृत्वं युज्यते, एकान्तशुद्धतया प्रवृत्तिकारणाभावाद्, गगनवदिति। किञ्चात्र आगमा-नुमानेऽपि "पुण्यः पुण्येन कर्मणा, पापः पापेन कर्मणा" इत्यागमः। तथा जगद्वर्त्तिसौभाग्या-भाग्य-विरूपता-दरिद्रतादिसमस्तमपि वस्तुजातमवन्ध्यकारणजन्यं, कार्यत्वात्, घटपटादिवत्, कथमन्यथा एकः सुखी अन्यो दुःखी, एकः प्रभुरन्यः किङ्कर इत्यादि प्रत्यक्षं जगद्वैचित्र्यं सम्भवेदित्यनुमानं। तथा अमूर्त्तस्यात्मनो मूर्त्तेन कर्मणाऽनुग्रहोपघातावप्यविरुद्धावेव, यतोऽमूर्त्तस्यापि ज्ञानस्य ब्राह्म्याद्यौषध्याऽनुग्रहो मदिरापानादिना चोपघातः सर्वजनप्रतीत एव। इत्येवं वेदार्थयुक्तिं चाकर्ण्याग्निभूतिरपि छात्रपञ्चशतैः सह प्रव्रजित इति द्वितीयो गणधरः॥ २॥

अथ वायुभूतिरपि तौ प्रव्रजितौ श्रुत्वा 'यस्य इन्द्रभूत्यग्निभूती शिष्यौ जातौ, स मम पूज्य एव, तद्गच्छाम्यहमपि पृच्छामि संशय'मिति विमृश्यागतः, एवं सर्वेऽप्यागताः, प्रभुणाऽपि प्रतिबोधितास्सर्वे, तत्क्रमश्चायं—

"तज्जीवतच्छरीरे, सन्दिग्धं वायुभूतिनामानम्। ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ? ॥ १ ॥"

यतो "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय०" इत्यादिवेदपदैर्भूतेभ्यो भिन्नो जीवो नास्तीति ध्वन्यते, पुनः "सत्येन लभ्यस्तपसा ह्येष ब्रह्मचर्येण नित्यं ज्योतिर्मयो विशुद्धो, यं पश्यन्ति धीरा यतयः संयतात्मानः" इति, अस्यार्थः—एष ज्योतिर्मयो विशुद्ध आत्मा सत्येन तपसा ब्रह्मचर्येण च नित्यं 'लभ्यः' ज्ञेयः, यमात्मानं धीराः संयतात्मानो यतयः पश्यन्ति ज्ञानचक्षुषा, एभिस्तु वेदपदैः स्पष्टमेव भूतेभ्यो भिन्नो जीवः प्रतीयते, ततो यच्छरीरं तदेव जीवोऽन्यो वा ? इति तव सन्देहः, परमविचारितोऽयं, यस्मात् "विज्ञानघने"त्यादिपदैरप्यसदुक्तप्रकारेणार्थे कृते प्रगट एवात्मसद्भाव इति श्रुत्वा विगतसन्देहः सोऽपि पञ्चभिश्छात्रशतैः सह प्रव्रजित इति तृतीयो गणधरः ॥ ३ ॥

"पञ्चसु भूतेषु तथा, सन्दिग्धं व्यक्तसञ्ज्ञकं विबुधम्। ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ? ॥ १॥"

वेदपदानि—"स्वप्नोपमं वै सकलं इत्येष ब्रह्मविधिरञ्जसा विज्ञेय" इति, अर्थात्—'वै' निश्चितं सकलमेतत्पृथिव्यादिकं स्वप्नोपमं असत्, अनेन वेदवाक्येन तावद्भूतानामभावो ध्वन्यते, तथा—"पृथ्वी देवता आपो देवता" इत्यादिकैस्तु भूतसद्भावः, ततः किं तत्त्वमत्रेति तव सन्देहः, परमविचारितोऽयं। यस्मात् "स्वप्नोपमं वै सकलं" इत्यादीनि पदानि अध्यात्मचिन्तायां कनककामिन्यादिसंयोगस्यानित्यत्वाद्विपाककटुकत्वाच्च तदासक्तिनिवृत्तिसूचकानि, न तु भूतनिषेधकानि, इति श्रुत्वा सोऽपि छात्रपञ्चशतैः सह प्रव्रजित इति चतुर्थो गणधरः ॥ ४ ॥

"यो यादृशः स तादृश, इति सन्दिग्धं सुधर्मनामानम्। ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ? ॥१॥"

वेदपदानि—"पुरुषो वै पुरुषत्वमश्नुते, पशवः पशुत्वम्" इत्यादीनि भवान्तरसादृश्यप्रतिपादकानि, तथा "शृगालो वै एष जायते, यः सपुरीषो दह्यते" इत्यादीनि च भवान्तरवैसादृश्यप्रतिपादकानि दृश्यन्तेऽतोऽत्र किं तत्त्वमिति तव सन्देहः, परं नायं युक्तो विचारः, यतः—"पुरुषो वै पुरुषत्वमश्नुते" इत्यादीनि वेदपदानि न नियमेन भवान्तरसादृश्यप्रतिपादकानि, किन्तु—'मनुष्योऽपि कश्चिदिह जन्मनि निसर्गतो मार्दवार्जवादिगुणसम्पन्नो मनुष्यायुःकर्म बद्ध्वा मृतः पुनरपि मनुष्यो भवती'त्यर्थप्रतिपादकानि। तथा च "पुण्यः पुण्येन कर्मणा, पापः पापेन कर्मणा" इत्यादिवेदवाक्यैर्मार्दवार्जवादिगुणयुतस्य पशोरपि मनुजत्वे देवत्वे वा-महारम्भादिपापस्थानासक्तस्य मनुजस्यापि च पशुत्वे नारकत्वे वा कथं नोत्पादो भवेत्?, भवेदेव। अथ च यथा शालिबीजाद्गोधूमाङ्कुरोत्पत्तेरसम्भवस्तथा मनुष्यत्वात्पशुत्वभवनासम्भवः, इति या युक्तिस्तव चित्ते प्रतिभाति साऽप्यसुन्दरा, यतो गोमयादिभ्यो वृश्चिकाद्युत्पत्तेर्दर्शनादनियमेव कार्यकारणयोर्भिन्नता, इति श्रुत्वाऽसन्दिग्धः सोऽपि छात्रपञ्चशतैः सह प्रव्रजित इति पञ्चमो गणधरः ५

"अथ बन्धमोक्षविषये, सन्दिग्धं मण्डिताभिधं विबुधम्। ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि? ॥ १ ॥"

वेदपदानि—"स एष विगुणो विभुर्न बध्यते संसरति वा, न मुच्यते मोचयति वा, न वा एष बाह्यं अभ्यन्तरं वा वेदेति" इत्यादीनि, तत्र 'स एष' अधिकृतो जीवो 'विगुणः' सत्त्वादिगुणरहितो 'विभुः' सर्वत्र व्यापको 'न बध्यते' पुण्यपापाभ्यां न युज्यते संसरति वा, अत्रापि नेत्यनुवर्त्तते। 'न मुच्यते' कर्मणा न वियुज्यते, बन्धाभावात्, नाप्यन्यं मोचयति, अकर्तृत्वात्। न वा एष 'बाह्यं' आत्मभिन्नं पुद्गलादिकं मदाहङ्कारादिकं चाभ्यन्तरं 'वेदेति'

जानाति, प्रकृतिधर्मत्वाज्ज्ञानस्येति बन्धमोक्षयोरनुपपत्तिरेतैर्वेदपदैः, तथा "न ह वै सशरीरस्य प्रियाप्रिययोरप्रतिहतिरस्ति, अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशत" इत्यस्यार्थः–'न ह वै' नैव 'सशरीरस्य' बाह्यदेहवतः 'प्रियाप्रिययोः' सुखासुखयोः 'अप्रतिहतिः' अविनाशोऽस्ति, किमुक्तं ?, बाह्यदेहवतः प्राणिनः सुखासुखयोर्विनाशो नास्तीति न, किन्तु सत्यपि बाह्यदेहेऽध्यात्मशरीरवतः सुखदुःखाभावोऽस्ति, 'वा' अथवा 'अशरीरं' मोक्षं, तत्र वसन्तं मुक्तात्मानं 'प्रियाप्रिये' सुखदुःखे न स्पृशत, इत्यादीनि मोक्षसद्भावप्रतिपादकानि, ततः कथं निश्चीयते ? 'बन्धमोक्षावस्ती'ति या तव मतिः सा न सुन्दरा, यतः–प्रागुक्तवेदपदानामर्थस्त्वया विपरीतः क्रियते, सरलार्थस्त्वयं–'स एष 'विगुणो' विगतच्छाद्मस्थिकज्ञानादिगुणो 'विभुः' केवलज्ञानवत्त्वेन सर्वगतः, एवंविध आत्मा पुण्यपापाभ्यां न बद्ध्यते, मिथ्यात्वादिकारणाभावात्, न च 'संसरति' पर्यटति भवेषु चातुर्गतिकेषु, भवभ्रमणनिबन्धनकर्मणोऽभावात्, न मुच्यते, बन्धनात्मककर्माभावात्, नाप्यन्यं मोचयति, अकर्तृकत्वात्, न वा एष 'बाह्यं' आत्मव्यतिरिक्तं पौद्गलिकसुखादिकमाभ्यन्तरं वा मदाहङ्कारादिकं 'वेदेति' अनुभवति, तन्निबन्धनकर्माभावात्, इत्यस्मदुक्तप्रकारेणार्थकरणे एतानि "स एष" इत्यादिवेदपदानि मुक्तात्मस्वरूपप्रतिपादकानि, न तु सर्वथा बन्धाद्यभावप्रतिपादकानीति श्रुत्वा विगतसन्देहः सार्द्धत्रिशतैश्छात्रैः सह प्रव्रजित इति षष्ठो गणधरः ॥ ६ ॥

"अथ देवविषयसन्देह–संयुतं मौर्यपुत्रनामानम्। ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ? ॥ १ ॥"

वेदपदानि–"को जानाति ? मायोपमान् गीर्वाणान् इन्द्र-यम-वरुण-कुबेरादीन्" इत्यादीनि देवसत्तानिषेधकानि, तथा "स

एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गलोकं गच्छति" इत्यादीनि तत्सत्ताव्यवस्थापकानीति तव सन्देहः, परमयुक्तः, यत एते त्वया मया च प्रत्यक्षं दृश्यन्ते देवाः, अन्यच्च "स एष यज्ञायुधी" इत्यादिना त्वदागमप्रमाणेनापि सन्त्येव देवाः । यच्च मायोपमत्वं "को जानाति" इत्यादिपदेऽभ्यधायि, तत्तेषामप्यनित्यत्वसूचकं, न तु सर्वथाऽसद्भावसूचकमिति श्रुत्वाऽपगतसन्देहः सोऽपि सार्द्धत्रिशतैश्छात्रैः सह प्रव्रजित इति सप्तमो गणधरः ॥ ७ ॥

"अथ नारकसन्देहात्, सन्दिग्धमकम्पितं विबुधम् । ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ? ॥ १ ॥"

वेदपदानि—"न ह वै प्रेत्य नारकाः सन्ति" इत्यादीनि नारकाभावप्रतिपादकानि, तथा "नारको वै एष जायते, यः शूद्रान्नमश्नाति" इत्यादीनि नारकसत्ताप्रतिपादकानि, ततः किं तत्त्वमिति सन्देहस्तव, परं "न ह वै प्रेत्य नारकाः सन्ति" इत्यस्या यथार्थोऽयं—यत्र खलु 'प्रेत्य' परलोके केचिन्नारका मेर्वादिवत् शाश्वताः सन्ति, किन्तु यः कश्चिदिहोत्कृष्टं पापमर्जयति, स इतो गत्वा प्रेत्य—भवान्तरे नारको भवत्यतो न केनापि पापं समाचरणीयं, यद्वा नारका मृत्वाऽनन्तमेव नारकतया नोत्पद्यन्तेऽतोऽपि "प्रेत्य नारका न सन्ती"त्युच्यते, इति श्रुत्वा व्यपगतसन्देहः शतत्रयैश्छात्रैः सह प्रव्रजित अष्टमो गणधरः ॥ ८ ॥

"अथ पुण्ये सन्दिग्धं, द्विजमचलभ्रातरं विबुधमुख्यम् । ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ? ॥ १ ॥"

त्वं तावदग्निभूतिसन्देहोक्तैः "पुरुष एवेदं ग्निं सर्वं, यद्भूतं यच्च भाव्यं" इत्याद्यैर्वेदपदैः 'सर्वं दृश्यमानमिदं जगत्पुरुष एवे'ति मत्वा यत्पुण्यमुपलक्षणत्वात्पापं च निषेधयसि तदविचारितं, यतस्तानि वेदपदानि न हि पुण्य-

पापनिषेधपराणि, किन्तु पुरुषस्तुतिपराणि, अन्यच्च—"पुण्यः पुण्येन कर्मणा, पापः पापेन कर्मणा" इत्यादिवेदवाक्यैः स्पष्टैव पुण्यपापयोः सिद्धिरप्यागमविहितेति, विशेषस्त्वग्निभूतिवर्णनादवसेय इति श्रुत्वा निरस्तसन्देहस्त्रिशतैश्छात्रैः सह प्रव्रजित इति नवमो गणधरः ॥ ९ ॥

"अथ परभवसन्दिग्धं, मेतार्यं नाम पण्डितप्रवरम्। ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ? ॥ १ ॥"

त्वं तावदिन्द्रभूतिसन्देहोक्तैः "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय पुनस्तान्येवानुविनश्यति" इत्याद्यैर्वेदपदैः परभवासद्भावं मनुषे, परमयुक्तमेतत्, यतो—विपरीतस्त्वयाऽर्थः क्रियते, अस्मदुक्तप्रकारेणैतेषां पदानामर्थं विभावय, यथा सन्देहो निवर्त्तते, इति श्रुत्वा व्यपगतसन्देहश्छात्राणां शतत्रयेण सह प्रव्रजित इति दशमो गणधरः ॥१०॥

"निर्वाण विषयसन्देह-संयुतं च प्रभासनामानम्। ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ? ॥ १ ॥"

अत्र वेदपदानि—"अग्निहोत्रं जुहुयात्स्वर्गकामः—जरामर्यं वै तत्सर्वं यदग्निहोत्रं" तथा "द्वे ब्रह्मणी वेदितव्ये—परमपरं च, तत्र परं-सत्यज्ञानमनन्तरं ब्रह्म" इत्यादीनि, तत्र प्रागुपन्यस्तानां पदानामर्थस्त्वं तावदेवं करोषि—यदग्निहोत्रं तज्जरामर्यं, किमुक्तं ?, सर्वदा कर्त्तव्यं, अत्राग्निहोत्रक्रियायाः सर्वदा कर्त्तव्यतोक्ता, सा च न निर्वाणकारणं भवितुमर्हति, केषाञ्चिद्वधकत्वेन केषाञ्चिच्चोपकारकत्वेन सबलत्वात्, तद्व्यतिरिक्तं कालान्तरं च नोक्तं, यत्र मोक्षप्रापणक्रियाऽऽरम्भः क्रियते, तस्मात्सिद्धं—मोक्षो नास्ति, इति मोक्षाभावप्रतिपादकान्येतानि पदानि, शेषाणि तु तदस्तित्वप्रतिपादकानि, ततः किं तत्त्वमिति तव सन्देहः, परमविचारितोऽयं, यतो—"जरामर्यं" इत्यत्र वाशब्दोऽप्यर्थे, ततो

ते णं काले णं ते णं समए णं समणे भगवं महावीरे अट्ठियगामं नीसाए पढमं अंतरावासं वासावासं उवागए, चंपं च पिट्ठिचंपं च

'जरामर्यं वा' यावज्जीवमप्यग्निहोत्रं कुर्यान्न तु नियमेन, तथा च निर्वाणसाधकक्रियारम्भकालास्तित्वमनिवार्यमेव, अतः सिद्धं—यः कश्चित्स्वर्गाद्यर्थी स यावज्जीवमप्यग्निहोत्रं कुर्यात्, यस्तु निर्वाणार्थी सोऽग्निहोत्रं विमुच्य निर्वाणसाधकक्रियामारभेत, इति श्रुत्वा व्यपगतसन्देहश्छात्रशतत्रयेण सह प्रव्रजित इत्येकादशो गणधरः ॥

एवं चतुश्चत्वारिंशच्छतद्विजाः प्रव्रजितास्तेषु मुख्यानामेकादशानां निषद्यात्रयेण × त्रिपदीग्रहणपुरस्सरं द्वादशाङ्ग-चतुर्दशपूर्वरचना गणधरपदप्रतिष्ठा च। तत्र द्वादशाङ्गीरचनानन्तरं स्वामी गणधराणां तदनुज्ञां करोति, शक्रश्च दिव्यचूर्णभृतं दिव्यं वज्रमयस्थालं गृहीत्वा प्रभोः सन्निहितो भवति, ततः स्वामी समुत्थाय सम्पूर्णां चूर्णमुष्टिं गृह्णाति, गौतमप्रमुखाश्चैकादशापि गणधरा ईषदवनता कृताञ्जलिपुटाश्च क्रमशस्तिष्ठन्ति, देवा वाद्यनिर्घोषादिकोलाहलं निरुध्य सावधानाः शृण्वन्ति, ततः प्रभुः 'गौतमस्य द्रव्य-गुण-पर्यायैस्तीर्थमनुजानामी'ति भणंश्चूर्णांस्तन्मस्तके क्षिपति, ततो देवाश्चूर्णादिवृष्टिं कुर्वन्ति। गणं च प्रभुः सुधर्मस्वामिनं पुरस्कृत्यानुजानाति। "चन्दनाऽपि ततस्तत्रो—त्पाट्यानीता सुरैः स्वयम्" इति पद्मानन्दकाव्यवचनाच्चन्दनाऽपि तत्रैव प्रव्रजिता अभूदिति गणधरवादः ॥

१२३—तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरः अस्थिकग्रामस्य (पञ्चम्यर्थे द्वितीयाऽत्र) निश्रया

× निषद्या नाम [illegible], तत्र गौतमस्वामी प्रभुं प्रणम्य पृच्छति 'कथ्यतां भगवन्! किं तत्त्व'मिति, ततो भगवान् भणति—"उप्पन्नेइ वा"। पुनस्तथैव [illegible]—"विगमेइ वा"। पुनरप्येवं [illegible] भणति—"धुवेइ वा"। एतास्तिस्रो निषद्या। आसामेव प्राप्त्या 'यत्सत्तदुत्पादव्ययध्रौव्ययुक्तं, अन्यथा वस्तुनः सत्ताऽयोगात्' [illegible] तेषां गणधराणां प्रतीतिर्भवति, ततश्च ते प्राग्भवभावितमतयो बीजबुद्धित्वाद् द्वादशाङ्गमुपरचयन्ति।

नीसाए तओ अंतरावासे वासावासं उवागए, वेसालिं नगरिं वाणियगामं च नीसाए दुवालस अंतरावासे वासावासं उवागए, रायगिहं नगरं नालंदं च बाहिरियं नीसाए चउद्दस अंतरावासे वासावासं उवागए, छ मिहिलाए, दो भद्दिआए, एगं आलंभियाए, एगं सावत्थीए, एगं पणीअभूमीए, एगं पावाए मज्झिमाए हत्थिवालस्स रण्णो रज्जुगसभाए अपच्छिमं अंतरावासं वासावासं उवागए ॥ १२६ ॥

तत्थ णं जे से पावाए मज्झिमाए हत्थिवालस्स रण्णो रज्जुगसभाए अपच्छिमं अंतरावासं वासावासं उवागए ॥ १२७ ॥

तस्स णं अंतरावासस्स जे से वासाणं चउत्थे मासे सत्तमे पक्खे कत्तिअबहुले, तस्स णं कत्तिअबहुलस्स पन्नरसीपक्खे णं, जा

---

वेगवतीसरित्तटे शूलपाणियक्षायतने प्रथमं "अंतरावासं" वर्षारात्रं–चतुर्मासकं 'वर्षावासं' वर्षासु वसनार्थ-मुपागतः, चम्पायाः पृष्ठिचम्पायाश्च निश्रया त्रीन् वर्षारात्रान्–विशाल्या चतुर्मासकानि वर्षावासार्थमुपागतः, नगर्या वाणिज्यग्रामस्य च निश्रया द्वादश वर्षारात्रान् वर्षावासार्थमुपागतः, राजगृहस्य नगरस्य नालन्देत्याख्यया प्रसिद्धायाश्च 'बाहिरिकायाः' शाखापुरविशेषस्य निश्रया चतुर्दश वर्षारात्रान् वर्षावासार्थमुपागतः, षट् 'मिथि-लायां' मल्लिजिनजन्मभूमौ, द्वौ भद्रिकायां, एकं आलम्भिकायां, एकं श्रावस्त्यां, एकं प्रणीतभूमौ–वज्रभूम्या-ख्येऽनार्यदेशे, एकं पापायां मध्यमायां हस्तिपालस्य राज्ञो 'रज्जुका' लेखकाः 'कारकून' इति लोके प्रतीतास्तेषां सभा, अपरिभुज्यमाना जीर्णा शुल्कशाला, तस्यां 'अपश्चिमं' अन्त्यं वर्षारात्रं–चतुर्मासकं वर्षावासार्थमुपागतः।

१२७–तत्र यस्मिन् वर्षे पापायां मध्यमायां, यस्या अपापेति नामासीत्प्राक्, परं प्रभोर्निर्वृतत्वाद्देवैः पापेत्युक्तं तस्यां, हस्ति-पालस्य राज्ञो 'रज्जुकसभायां' शुल्कशालायां 'अपश्चिमं' अन्त्यं 'अन्तरावासं' चतुर्मासकं वर्षावासार्थमुपागतः।

१२८–तस्यान्तरावासस्य मध्ये योऽसौ वर्षाकालस्य चतुर्थो मासः सप्तमः पक्षः कार्त्तिकबहुलः, तस्य कार्त्ति-

सा चरमा रयणी, तं रयणिं च णं समणे भगवं महावीरे कालगए विइकंते समुज्जाए छिन्न-जाइ-जरा-मरण-बंधणे सिद्धे बुद्धे मुत्ते अंतगडे परिनिव्वुडे सव्वदुक्खप्पहीणे। चंदे नामं से दुच्चे संवच्छरे, पीइवद्धणे मासे, नंदिवद्धणे पक्खे। अग्गिवेसे नामं से दिवसे, उवसमि त्ति

---

कार्त्तिकस्य पञ्चदश्याः 'पक्षो' दिवसः, या सा 'चरमा' पक्षस्यान्त्या रजनी×, तस्यां रजन्यां च श्रमणो भगवान् महावीरः 'कालगतः' कायस्थिति-भवस्थित्योः कालादुगतः 'व्यतिक्रान्तः' संसारान्निर्गतः 'समुद्यातः' अपुनरावृत्त्या सम्यगूर्ध्वं गतः, नहि सुगतादिवत्पुनर्भवावतारी, छिन्नानि जाति-जरा-मरण-बन्धनानि-तद्धेतुभूतानि कर्माणि येन, 'सिद्धः' साधितार्थः 'बुद्धो'ऽवगततत्त्वार्थः, मुक्तो-भवोपग्राहिकर्मबन्धनेभ्यः, अन्तकृत्सर्वदुःखानां 'परिनिर्वृतः' कर्मकृतसकलसन्तापरहितः, सर्वेभ्यः-शारीरमानसेभ्यो दुःखेभ्यः प्रहीणो-रहितोऽभूत्।

अथ भगवतो निर्वाणवर्षादेः सैद्धान्तिकानि नामान्याह-युगे हि पञ्च संवत्सरास्तत्र तृतीयपञ्चमावभिवर्द्धिताख्यौ, प्रमाणं प्रत्येकमेनयोरूयशीत्यधिकानि त्रीण्यहोरात्रशतानि, चतुश्चत्वारिंशच्च द्वाषष्टिभागा दिनस्य (३८३ ४४/६२), शेषास्त्रयश्चन्द्राख्याः, प्रमाणं प्रत्येकमेतेषां चतुष्पञ्चाशदधिकानि त्रीण्यहोरात्रशतानि, द्वादश च द्वाषष्टिभागा दिनस्य (३५४ १२/६२)। तेषु चन्द्रनामा स द्वितीयः संवत्सरो, यत्र भगवान्निर्वृतः, प्रीतिवर्द्धनो मासः, जैनशैल्या

---

× यदि च संस्कृते। पक्षान्तः कार्तिकी नाभिप्रायस्य "जा सा चरमा रयणी"ति, अतः सिद्धं "पक्षस्यान्ते पाक्षिकं" इति व्युत्पत्तिः पञ्चदशीग्राहिका।

१-अभिनन्दनः-सुप्रतिष्ठो-विजयः-प्रीतिवर्द्धनः-श्रेयान्-शिशिरः-शोभनो-हैमवान्-वसन्तः-कुसुमसम्भवो-निदाघो-वनविरोधी चेति श्रावणादिद्वादशमासाः सिद्धान्तोक्ताः।

पवुच्चइ, देवाणंदा नामं सा रयणी, निरति त्ति पवुच्चइ। अच्चे लवे, मुहुत्ते पाणू, थोवे सिद्धे, नागे करणे, सव्वट्ठसिद्धे मुहुत्ते। साइणा नक्खत्तेणं जोगमुवागए णं कालगए विइक्कंते जाव सव्वदुक्खप्पहीणे ॥ १२८ ॥

कार्त्तिकस्यैतन्नामत्वात्, नन्दिवर्द्धन इति कृष्णपक्षस्य नाम, अग्निवेश्य[1] इति नाम सोऽमावास्याया दिवसः, उपशम इति नाम्नाऽपि प्रोच्यते, देवानन्दा[2] नाम साऽमावास्या-रजनी, नामान्तरेण निरतिरित्यपि प्रोच्यते, अर्चाख्यो लवः, ससोच्छ्वासमितस्तोकसप्तकमितः कालः, मुहूर्त्ताभिधः प्राणः, सिद्धनामा स्तोकः, नागाभिधं करणं, शकुन्यादिकरण-चतुष्के तृतीयमिदं, अमावास्योत्तरार्द्धेऽवश्यं भवत्येतत्, सर्वार्थसिद्धाख्यो मुहूर्त्तो[3], य एकोनत्रिंशतमस्त्रिंशन्मुहूर्त्तेषु, एवंविधे समये स्वातिना नक्षत्रेण चन्द्रयोगमुपागते सति भगवान् कालगतो व्यतिक्रान्तो यावत्सर्वदुःखप्रहीणोऽभूत्।

अथ भगवतो निर्वाणसमकालमेव प्रकम्पितासनाः सर्वे सुराऽसुरेन्द्राः समागच्छन्ति भगवद्देहान्तिके, ततो यथाविधिर्भगवद्देहस्याग्निसंस्कारं विधाय यथाजीतं दंष्ट्राऽस्थ्यादीनि गृहीत्वा नन्दीश्वरेऽष्टाह्निकोत्सवं कृत्वा स्वस्थानं व्रजन्तीत्यादिजम्बूद्वीपप्रज्ञप्त्युक्तः सर्वोऽपि विधिर्विज्ञेयः। तत एवाह—

१-पूर्वाङ्गसिद्धो-मनोरमो-मनोहरो-यशोभद्रो-यशोधरः-सर्वकामसमृद्ध-इन्द्रो-मूर्द्धाभिषिक्तः-सौमनसो-धनञ्जयो-ऽर्थसिद्धो-ऽभिजातो-ऽत्याशनः-शतञ्जयो-ऽग्निवेश्य इति पञ्चदश दिनानि। २-उत्तमा-सुनक्षत्रा-इलापत्या-यशोधरा-सौमनसी-श्रीसम्भूता-विजया-वैजयन्ती-जयन्ती-अपराजिता-इच्छा-समाहारा-तेजा-अतितेजा-देवानन्दा-चेति पञ्चदश रात्रयः। ३-रुद्रः-श्रेयान्-मित्रं-वायुः-सुप्रतीतो-ऽभिचन्द्रो-माहेन्द्रो-बलवान्-ब्रह्मा-बहुसत्य-ऐशान-त्वष्टा-भावितात्मा-वैश्रवणो-वारुण-आनन्दो-विजयो-विजयसेनः-प्राजापत्य-उपशमो-गन्धर्वो-ऽग्नि-वैश्यः-शतवृषभ-आतपवान्-अर्थवान्-ऋणवान्-भौमो-वृषभः-सर्वार्थसिद्धो-राक्षसश्चेति त्रिंशन्मुहूर्त्ताः।

जं रयणिं च णं समणे भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे, सा णं रयणी बहुहिं देवेहि य देवीहि य ओवयमाणेहिं उप्पयमाणेहि य उज्जोविया आवि हुत्था ॥ १२९ ॥ जं रयणिं च णं समणे भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे, सा णं रयणी बहूहिं देवेहि य देवीहि य ओवयमाणेहिं उप्पयमाणेहि य उप्पिंजलगमाणभूआ कहकहगभूआ आवि हुत्था ॥ १३० ॥

जं रयणिं च णं समणे भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे, तं रयणिं च णं जिट्ठस्स गोअमस्स इंदभूइस्स अणगारस्स अंतेवासिस्स नायए पिज्जबंधणे वुच्छिन्ने अणंते अणुत्तरे जाव केवलवरनाणदंसणे समुप्पन्ने ॥ १३१ ॥

१२९-यस्यां रजन्यां श्रमणो महावीरः कालगतो यावत्सर्वदुःखप्रहीणोऽभूत्, सा रजनी बहुभिर्देवैर्देवीभिश्च 'अवपतद्भिः' स्वर्गादुत्तरद्भिः 'उत्पतद्भि' ऊर्ध्वमुच्छलद्भिश्च कृत्वा उद्योतवत्यभवत्।

१३०-यस्यां रजन्यां श्रमणो भगवान्महावीरः कालगतो यावत्सर्वदुःखप्रहीणोऽभूत्, सा रजनी बहुभिर्देवैर्देवीभिश्च अवपतद्भिरुत्पतद्भिश्च 'उत्पिञ्जलभूतेव' अत्याकुला इव कहकहेत्यव्यक्तवर्णकोलाहलमयी चाप्यभवत्।

१३१-यस्यां रजन्यां श्रमणो भगवान् महावीरः कालगतो यावत्सर्वदुःखप्रहीणोऽभूत्तस्यां च रजन्यां ज्येष्ठस्य अन्तेवासिनो गौतमगोत्रस्य इन्द्रभूतिनामानगारस्य 'ज्ञातजे' श्रीवर्द्धमानस्वामिनि प्रेमबन्धने 'व्युच्छिन्ने' त्रुटिते सति अनन्तवस्तुविषये 'अनुत्तरे' सर्वोत्कृष्टे यावत्केवलवरज्ञानदर्शने समुत्पन्ने; तद्व्यतिकरस्त्वेवम्—

× भगवत् निर्वाणसमये देवशर्मणः प्रतिबोधाय क्वाप्यसन्नग्रामे भगवता प्रेषितः श्रीगौतमस्तं प्रतिबोध्य

× दीक्षितमात्रानन्तरं ये ये मया दीक्ष्यन्ते ते ते सर्वेऽपि केवलिनो भवन्ति परमहं कथं न भवामि ? इति विषादपरेण गौतमेन

ए शाचित्रगपगुरुाच्छ्रुतं, यदुत-आत्मलब्ध्या योऽष्टापदे जिनान्वन्दते, स तद्भवमोक्षगामी। ततो भगवदाज्ञया तत्र गत्वा आत्मलब्ध्या

पश्चादागच्छन् श्रीवीरनिर्वाणं श्रुत्वा वज्राहत इव शून्यः क्षणं तस्थौ, बभाण च—

"प्रसरति मिथ्यात्वतमो, गर्जन्ति कुतीर्थिकौशिका अद्य। दुर्भिक्षडमरवैरादि-निशाचरा भवन्ति सप्रसराः ॥१॥"

"राहुग्रस्तनिशाकर–मिव गगनं दीपहीनमिव सदनम्। भरतमिदं गतशोभं, त्वया विनाऽद्य प्रभो! जज्ञे ॥२॥"

"कस्यांह्रिपीठे प्रणतः पदार्थान्, पुनः पुनः प्रश्नपदी करोमि?।"
"कं वा भदन्तेति वदामि? को वा, मां गौतमेत्याप्तगिराऽथ वक्ता? ॥ ३ ॥"

हा हा हा!!! वीर! किं कृतं?, यदीदृशेऽवसरेऽहं दूरीकृतः, किं आडकं मण्डयित्वा बालवत्तवाञ्चलेऽलगिष्यं?, किमहं त्वयि कृत्रिमस्नेहोऽभवं?, किं मुक्तौ साङ्कीर्ण्यकरोऽभविष्यं?, किं वा तव भारोऽभवं?, यदेवं मां विमुच्य गतः, एवं च 'वीर! वीर!' इति कुर्वतो 'वी वी' इत्येव गौतमस्य मुखे लग्नं, तथा च क्षणात्–'हुं ज्ञातं, वीतरागा निःस्नेहा भवन्ति, ममैवायं अपराधो यन्मया श्रुतोपयोगो न दत्तस्तदा, धिगिमं एकपाक्षिकं स्नेहं, अलमनेन, एकोऽस्मि, नाहं कस्यचित्, नास्ति मम कश्चन, एवं साम्यं भावयतस्तस्य केवलमुत्पेदे।

कविराह–"मोक्षमार्गप्रपन्नानां, स्नेहो हि वज्रशृङ्खला। वीरे जीवति जातो न, गौतमो यत्तु केवली ॥ १ ॥"

---

चटित्वा जिनानभिवन्द्य तत्रैव चम्पकतरुतले रात्रिमुषित्वा पश्चादागच्छता पञ्चदशशततापसाः प्रतिबोधिता दीक्षिताश्च। तानपि केवलमुत्पन्नमिति ज्ञात्वाऽतीव विषीदन् 'गौतम! मा विषीद, यतोऽन्ते द्वावप्यावां तुल्यौ भविष्यावः' इत्युक्त्वाऽऽश्वासितो भगवता भणितं च–'चेत्सद्यः केवलमीहसे, तर्हि मम रागं त्यजे'ति। गौतमेनोक्तं–'न मे तत्केवलेन किमपि प्रयोजनं, यत्कृते भवद्रागं त्यज्यते' इति।

जं रयणिं च णं समणे भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे, तं रयणिं च णं नव मल्लई नव लेच्छई कासी-कोसलगा अट्ठारस वि गणरायाणो अमावासाए पाराभोयं पोसहोववासं पट्ठविंसु, गए से भावुज्जोए, दव्वुज्जोयं करिस्सामो ॥ १३२ ॥

---

प्रातरिन्द्राद्यैः श्रीगौतमस्य केवलमहिमा कृतः । अत्र कविः—

"अहङ्कारोऽपि बोधाय, रागोऽपि गुरुभक्तये । विषादः केवलायाभूत्, चित्रं श्रीगौतमप्रभोः ॥ १ ॥"

ततो द्वादशवर्षाणि केवलिपर्यायं प्रपाल्य दीर्घायुरिति कृत्वा सुधर्मस्वामिनो गणं समर्प्य मोक्षं प्राप्तः ।

अत्रापि कविः—"वीरो वरः प्रिया सिद्धि-र्गौतमोऽनुवरस्तथा । प्रत्यक्षं सकललोकस्य, जातं विवाहमङ्गलम् ॥ १ ॥"

ततः सुधर्मस्वामिनः केवलोत्पत्तिः, सोऽप्यष्टौ वर्षाणि केवलित्वे विहृत्यार्यजम्बूस्वामिनो गणं समर्प्य सिद्धः ।

१३२–यस्यां रजन्यां श्रमणो भगवान् महावीरः कालगतो यावत्सर्वदुःखप्रहीणः, तस्यां रजन्यां नव मल्लकीजातीयाः काशीदेशराजानः, नव लेच्छकीजातीयाः कोशलदेशराजानः, एते अष्टादशापि कार्यवशाद् 'गणं' मेलापकं कुर्वन्तीति गणराजानो, ये भगवन्मातुलस्य श्रीचेटकमहाराजस्य सामन्ताः श्रूयन्ते, ते तस्याममावास्यायां पाक्षिकदिनत्वात् × 'पारं' संसारान्तं 'आभोगयति' प्रापयति यस्तथा पोषं-पुष्टिं धर्मस्य धत्ते इति

---

× ननु सन्देहविषौषध्यां कल्पलतायामपि च तीर्थोद्गारिकादिसम्मतितयोक्तं "तेण उयणवसएहिं, समइक्कंतेहिं वद्धमाणाओ । पज्जोसवण चउत्थी, कालगसूरिहिंतो ठविया ॥ १ ॥ वीसहिं दिणेहिं कप्पो, पंचगहाणीइ कप्पठवणा य । नवसयतेणउएहिं, वुच्छिन्ना संघआणाए ॥ २ ॥ सालाहणेण रन्ना, संघाएसेण कारिओ भयवं । पज्जोसवण चउत्थी, चाउम्मासं चउदसीए ॥ ३ ॥

चउमासयपडिकमणं, पक्खियदिवसम्मि चउविहो संघो। नवसयतेणउएहिं, आयरणं तं पमाणं ति ॥ ४ ॥" एतद्गाथाचतुष्के "चउमासयपडिकमणं, पक्खियदिवसम्मि" इति यद्भणितं, तेन स्पष्टं ध्वन्यते यत्पाक्षिकं आदितोऽपि चतुर्दश्यामासीत्, इत्थमेव ह्यर्थसङ्गतिर्विहिता श्रीमज्जयसोममहोपाध्यायैस्तथाहि—"एतन्मूलं तु 'विक्रमार्कात्सपञ्चाशच्छतत्रयीमितवर्षे चतुर्दशीपक्षो बभूवे'ति केषुचिज्जूर्णपट्टावलीपत्रेषूपलभ्यते, ततश्चैता गाथाः केनचित्तत्पक्षीयेण गीतार्थेन कृता इति विभाव्यते, 'चउमासगपडिक्कमणं, पक्खियदियहम्मी'ति वाक्येन साकं सङ्गच्छते चेत्थं" इति पौषधषट्० वृत्तिः पत्र ७। ततः कथं 'अमावास्यायां पाक्षिकदिनत्वा'दित्युक्तिः सङ्गच्छते ? इति चेच्छृणु—प्रथमं त्वेतद्गाथाचतुष्कस्य सर्वथैवाभावस्तीर्थोद्गारिके, "एतद्गाथाया मूलतया कल्पितेष्वपि तीर्थोद्गारादिष्वदर्शना"दिति श्रीमज्जयसोममहोपाध्यायविहितपौषधषट्त्रिंशिकावृत्तिवाक्यात्तीर्थोद्गारिकप्रत्यवलोकनेऽनुपलब्धत्वाच्च ।

नन्वेवं तर्हि श्रीजिनप्रभसूरिवराद्यैः समर्थसाक्षरैः कथं प्रमाणतयोपन्यस्तमेतद्गाथाचतुष्कमित्याशङ्का तु "न च 'जिनप्रभाचार्यैरप्येषा समालम्बिता' इति वाच्यं, तत्पूर्ववर्त्तिकल्पविषमपदनिरुक्तकृद्विनयेन्दुसूरिकृतं 'वायणंतरे पुण नवसयतेणउएहिं' इत्येतत्पदव्याख्यानमुपजीव्य तैस्तत्पदव्याख्याने तथैव 'तेणउयणवसएहिं' इत्यादिगाथाकदम्बकस्य लिखितत्वात्" इति पौषधषट्त्रिंशिकावृत्तिगतेन श्रीमज्जयसोममहोपाध्यायवाक्येनैवापाकृता भवति ।

अन्यच्च—पाक्षिकं पञ्चदश्यामेव सार्वदिकं, तथैव युक्त्याऽऽगमेनापि च प्रतीयमानत्वात् । तत्र तावद्युक्त्या—यथा दिवसान्ते दैवसिकं, रात्र्यन्ते च रात्रिकं, तथा पक्षान्त एव पाक्षिकं युक्तं । न चैतदनागमिकं, तथैवागमादिना प्रतिपाद्यमानत्वात्तथाहि—"दिवसस्यान्ते दैवसिकं, रात्रेरन्ते रात्रिकं, पक्षस्यान्ते पाक्षिकं, चतुर्णां मासानामन्ते चातुर्मासिकं, संवत्सरस्यान्ते सांवत्सरिकं" इति

प्रवचनसारोद्धारवृत्तौ सिद्धसेनसूरयः "प्राप्ते पक्षान्ते विशेषप्रतिक्रमणेन प्रतिक्रामन्ति" इति पाक्षिकचूर्णौ। "दिवसनिशाऽवसानेषु प्रतिक्रमणं विदधाना अपि पक्ष–चतुर्मास–संवत्सरान्तेषु विशेषप्रतिक्रमणं कुर्वन्ति" इति, पुनः "प्रथम–चरमतीर्थङ्करतीर्थेषु पक्षान्तादिषु प्रतिक्रमणं कर्त्तव्यमेव" इति, पुनरपि "प्रत्यहं उभयकालं, विशेषतस्तु पक्षान्तादिषु कुर्वन्ति" इति पाक्षिकसूत्रवृत्तौ।

आम्नाभेते, स्वगं रत्नशेखरसूरिरपि श्राद्धविधिकौमुद्यां 'चतुर्दश्यामेवादितः पाक्षिकं प्रतिक्रमण'मित्याग्रहं पुष्णन्नपि प्रतिक्रमणकालनिरूपणे "पाक्षिक–चातुर्मासिक–सांवत्सरिकाणि तु पक्षाद्यन्ते च स्युः" इत्यनेन वाक्येन पक्षान्त एव पाक्षिकं प्रतिपादितवान्। पक्षान्तस्तु "पञ्चदश्यौ यज्ञकालौ, पक्षान्तौ पर्वणी अपि" इत्यभिधानचिन्तामण्यादिप्रामाण्यात्पञ्चदश्येव, न चतुर्दशी।

ननु चतुर्दश्यां पाक्षिकस्वीकारेऽन्यस्यां चतुर्दश्यां पक्षान्तो भवत्येवेति चेन्न, प्राङ्निर्दिष्टशब्दकोशप्रामाण्यात् "एगमेगस्स णं भंते! पक्खस्स कति दीहा पण्णत्ता?, गोयमा! पण्णरस, तं जहा–पडिवादिवसे बीयदिवसे जाव पण्णरसे दिवसे" इति सूर्यप्रज्ञप्त्यागमप्रामाण्याच्चापि पञ्चदश्यामेव पक्षान्तस्य भवनात्। अन्यच्च–यद्येवं? तर्हि यदृच्छया सर्वास्वपि तिथिषु पाक्षिककरणे को निवारयिता?, सर्वासामपि तिथीनां पक्षप्रमाणपञ्चदशदिनानन्तरमेव भवनात्।

किञ्च–यदि चतुर्दश्यामेवादितः पाक्षिकमासीत्तदाऽन्यूनाधिकानि चतुर्विंशतिश्चान्द्रे षड्विंशतिश्चाभिवर्द्धिते वर्षे सर्वाग्रेण पाक्षिकाण्यभूवन् प्रागिति निर्विवादं गन्तव्यमेव स्यात्, तथा च कथं त्रीण्यूनानि पाक्षिकाणि साम्प्रतं विधीयन्ते?, अथ च–"यदा चतुर्मासकं पूर्णिमायामभूत्तदा प्रतिक्रमणानि पञ्चविंशतिरष्टाविंशतिर्वा बभूवुः?, तथा तानि शास्त्राक्षरबलेन विधीयमानानि परम्परातो वा?, शास्त्राक्षरबलेन चेत्तदा तदभिधानं प्रसाद्यमिति प्रश्नोऽत्रोत्तरं–वर्षमध्ये प्रतिक्रमणानि पञ्चविंशतिरष्टाविंशतिर्वेति

क्वापि ज्ञातं नास्ति, शास्त्रमध्ये तु दैवसिक-रात्रिक-पाक्षिक-चातुर्मासिक-सांवत्सरिकलक्षणानि पञ्च प्रतिक्रमणानि प्रतिपादितानि सन्तीति" हीरप्रश्ने ४ प्रकाशे श्रीहीरविजयसूरिभिरपि पञ्चमीपर्युषणाकाले पाक्षिकादीनि प्रतिक्रमणानि पञ्चविंशतिरष्टाविंशतिर्वा बभूवुरिति स्पष्टं कथं नोत्तरितम् ?, इत्यपि सुविमृश्यम् ।

आगमेनापि आवश्यकचूर्णि–पाक्षिकचूर्णि–वृत्ति–व्यवहारभाष्यचूर्णि–वृत्ति–निशीथचूर्णि–दशाश्रुतस्कन्धचूर्णिप्रभृतिषु बहुषु शास्त्रेषु तथैव प्रतिपादितत्वात्पञ्चदश्यामेव पाक्षिकं प्रतिक्रमणं प्रागासीदित्येव सिद्ध्यति, तथाहि–"**जह गेहं पइदिवसं, सोहिअं तह वि पक्खसंधीसु । सोहिज्जइ सविसेसं, एवं इहयंपि नायवं ॥ १ ॥**" इत्यावश्यकचूर्णौ (उ० पृ० ६४) निर्युक्तिगाथा । अत्र पक्षसन्धिरेव पाक्षिकप्रतिक्रान्तौ निर्दिष्टा, पक्षसन्धिः पञ्चदश्येव, यदुक्तं–"**स पर्वसन्धिः प्रतिप–त्पञ्चदश्योर्यदन्तरं**" इत्यभिधानचिन्तामणौ । पाक्षिकचूर्णिवृत्त्योः पाठावुपरि दर्शितौ, अन्यच्च "**पक्षोऽर्धमासरूपो व्यतिक्रान्तो–ऽतिलङ्घितः, अन्यश्च, पक्ष इति वर्त्तते, भे–भवतां कल्याणेन–शुभेन, (प्रत्युपस्थितः) युक्त इति गम्यते**" इत्येतस्मिन् पाक्षिकक्षामणावृत्तिपाठेऽपि पञ्चदश्येव पाक्षिकप्रतिक्रमणे नियुक्तेति स्फुटं ध्वन्यते, चतुर्दश्यां पक्षस्याव्यतिक्रान्तत्वादन्यपक्षस्याप्रत्युपस्थितत्वाच्चेति ।

अथ च सर्वास्वपि पूर्णिमासु पाक्षिक–चातुर्मासिकयोर्नियतत्वं यदि स्यात्तर्हि सूत्रकृताङ्गत्रयोविंशेऽध्ययने "**चाउद्दसऽट्ठमुद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसहं सम्ममणुपालेमाणे ××× विहरइ**" इत्येतदालापकव्याख्यायां "**पूर्णमासीषु च सर्वास्वपीत्यर्थः**" इत्येवंविधं सर्वसाधारणमुल्लेखमकृत्वा कथं "**पूर्णमासीषु च–तिसृष्वपि चतुर्मासकतिथिष्वित्यर्थः**" इत्येवंविधो व्यक्तिगत उल्लेखो विहितः शीलाङ्काचार्यैरित्यपि न वाच्यं, यतोऽस्या व्याख्याया हेतुरेव चातुर्मासिकप्राधान्यख्यापनत्वं, न तु पूर्णिमापाक्षिकनिषेधख्यापनत्वं । यद्यनया

व्याख्यया पूर्णिमापाक्षिकनिषेधः स्वीक्रियते चेत्तर्हि प्राग्निर्दिष्टायाः पाक्षिकशब्दव्युत्पत्तेरसङ्गतिर्भवति। अन्यच्च–यद्यत्र पूर्णिमाशब्देन चतुर्मासकत्रयपूर्णिमैवाराध्यत्वेन ग्राह्या स्यात्तर्हि उद्दिष्टाशब्दनिर्दिष्टाऽमावास्याऽपि काचिद्व्यक्तिगतैव ग्राह्या, न तु सर्वाः। यदि चामावास्याः सर्वा आराध्यास्तर्हि पूर्णिमया किमपराद्धं ?, येन चतुर्मासकत्रयपूर्णिमैवाराध्यत्वेन गृह्यते, पर्वत्वेन साम्यत्वादुभयोरपि तिथ्योः। किञ्च 'पूर्णिमापाक्षिकनिषेधिकेयं [illegible] व्याख्या' इति तु तदैव स्वीकर्तुं शक्यते यदा सर्वमान्ये कस्मिन्नप्यागमवृत्त्यादौ "चतुर्दश्यां पाक्षिकप्रतिक्रमणं" यद्वा "पाक्षिकप्रतिक्रमणतिथिश्चतुर्दशी" इत्येवंरूपाया आज्ञायाः समुपलब्धिर्भवेत्, नह्येवंरूपाऽऽज्ञा काप्युपलभ्यते।

ननु व्यवहारभाष्यचूर्णौ कृताऽपि च पाक्षिकशब्देन चतुर्दशी साक्षान्निर्दिष्टा, ततः कथं पञ्चदश्यां पाक्षिकमिति चेन्मैवं, अभिप्रायापरिज्ञानात्। सामाचारीणां विद्यासाधनकालनिरूपणायैव, न तु पाक्षिकप्रतिक्रमणाय, पाक्षिकशब्देन चतुर्दशी निर्दिष्टा। साऽपि कृष्णैव, न तु शुक्ला। यदुक्तं–"किण्हपक्खस्स चउद्दसीए विज्जासाहणोवयारो" इति व्यवहारचूर्णौ, तथा "मासस्य मध्यं पाक्षिकं पक्षेण निवृत्तं ज्ञातव्यं, तच्च कृष्णचतुर्दशीरूपमवसातव्यं, तत्र प्रायो विद्यासाधनोपचारभावात्" इति व्यवहारभाष्यवृत्तौ। न चात्र पाक्षिकप्रतिक्रमणकर्त्तव्यताया गन्धोऽपि, तथाप्यनेन पाठेन चतुर्दश्यामेव पाक्षिकं प्रतिक्रमणमिति साध्यते चेत्तदा कृष्णचतुर्दश्यामेव पाक्षिकं स्यात्, न शुक्लचतुर्दश्यां, कृष्णचतुर्दश्येवात्र पाक्षिकशब्देन व्यपदिश्यमानत्वात्। यद्वा "पूज्यास्तु वदन्ति–उपचारशब्देन पूर्वसेवाऽत्र भण्यते, ततः कृष्णचतुर्दश्यां पूर्वसेवा–नूतनमन्त्रग्रहणजपलक्षणा क्रियते, पाक्षिके च–पञ्चदशीलक्षणे परिपाटिः–परावर्त्तनं विधीयते, इत्थं व्याख्याने पौर्णमास्यपि पाक्षिकं भवति, परिपाटी च (पञ्चदश्यां) घटते। शुक्लचतुर्दश्यां तु पूर्वसेवा न क्रियते इति सर्वजनप्रतीतं, कृष्णचतुर्दश्यां च सस्फुरो मन्त्रो भवति, अतस्तत्र पूर्वसेवा" इति जीवानुशासनवृत्तौ

२० पत्रे। अनया व्याख्यया व्यवहारभाष्यवृत्तिपाठोऽपि, न चतुर्दश्यां, किन्तु पञ्चदश्यामेव पाक्षिकं सूचयति।

"किञ्च चतुर्दश्यां पाक्षिकप्रतिक्रमणमङ्गीकुर्वता सूत्रोक्तां पूर्णिमां विहाय चतुर्मासिकं अपि तत्र एव प्रतिक्रमणीयं, यतः चतुर्मासिके अष्टौ पक्षा भवन्ति, ते च तन्मते चतुर्दश्यां एव पूर्णतां अगच्छन्, पाक्षिकस्य तत्र एव करणत्वात्। अथ चतुर्मासिकसम्बन्धी पक्षः प्रतिपद आरभ्यते पाक्षिकसम्बन्धी तु अन्यत एव इति चेत्तर्हि कोऽयं अर्धजरतीयन्यायः ?, तथा च सति महान् सूत्रविरोधः, तत्र ईदृग् अर्थस्य अदर्शनान्न युक्तं एव, ततश्च कृष्णचतुर्दशीरूपं इति चेत्तर्हि सकलमपि पूर्वोक्तं दूषणकदम्बकं तत्पश्चाल्लग्नमनुधावति। किञ्च–एवं चतुर्दश्यां पाक्षिकप्रतिक्रमणं कुर्वतां पूर्णमास्यां चतुर्मासिकं आचरतां चतुर्मासिकसम्बन्धितपो बाध्यते, स्थानाऽनवाप्तेः, पाक्षिकचतुर्मासिकयोर्मध्यन्दिनाभावात्। ननु किमर्थं तद्दिनं ईक्षते ?, उच्यते–पाक्षिके चतुर्थस्य करणात् चतुर्मासिके षष्ठसम्भवात्, मध्यन्दिनमन्तरेण तच्च न घटते, तस्माद्युक्त्याऽपि पाक्षिकं पञ्चदश्यामेव युज्यते" इति सामाचारीशतके पत्र ४२।

पुनः "पक्खिअं पक्खिअमेव, पक्खिए पोसहो–पक्खिअपोसहो, चउद्दसिअट्ठमीसु वा" इति दशाश्रुतस्कन्धपञ्चमदशाचूर्णौ, अत्र "पक्खिअं पक्खिअमेव" इति सावधारणवाक्येन पञ्चदश्येव पाक्षिके गृहीता, न चतुर्दशी, इति स्फुटमेव। यदि "पक्खिअमेव" इति शब्देन चतुर्दशी गृहीताऽभविष्यत्तर्हि पार्थक्येन चतुर्दशिग्रहणं नाकरिष्यच्चूर्णिकारपूज्याः, व्यर्थत्वात्।

न च वाच्यं–उपवासादिपाक्षिककृत्यानि चतुर्दश्यामेवोक्तानि शास्त्रे, अतस्तत्रैव युक्तं पाक्षिकप्रतिक्रमणमपीति, शास्त्रे पाक्षिकोपवासादितपोविधानं चतुर्दश्यामेव विधेयमिति नामग्राहं कुत्राप्यनुक्तत्वात्। यत्रकुत्रापि पाक्षिकतपोविधानमस्ति तत्र सर्वत्र प्रायः "पक्खिअ"

शब्द एवोपलभ्यते, तथाहि—"पक्खिअपोसहिएसुं, कारयति तवं सयं करोति च" इत्येतद्व्यवहारभाष्यगाथाऽंशव्याख्यायां "पाक्षिके-अर्द्धमासपर्वणि, पौषधिके च—अष्टम्यादिषु पर्वसु परं तपः कारयति स्वयमपि करोति च" इति श्रीमन्मलयगिर्याचार्याः । तथा "पक्खिए चउत्थं न करेइ ?, मासगुरु" इति व्यवहारचूर्णौ । पुनः "पक्खिए चउत्थं न करेति, तो पच्छित्तं" इति निशीथचूर्णौ । अन्यत्र "चतुर्दश्युपवासश्च पर्वतिथितपोविधानं" इति जीवानुशासनवृत्तिवाक्याच्चतुर्दशी-पाक्षिकतपसोरैक्यत्वभ्रमो दूरापास्त एवेति ।

एतन्मतेऽपि शास्त्रप्रमाणैर्युक्त्याऽपि च सिद्धमेतत्, यदुत—पाक्षिकं पञ्चदश्यामेवागमानुगतं, आचरणानुगतं पुनश्चतुर्थीपर्युषणाप्रवृत्त्यनन्तरं चतुर्दश्यामिति, तथैव सर्वमान्यप्रवचनाधारगीतार्थरचितशास्त्रेपूपलभ्यमानत्वात्तथाहि—"एवं च कारणेणं अज्जकालगायरिएहिं चउत्थीए पज्जोसवणं पवत्तियं, समत्तसंघेण य अणुमन्नियं । तव्वसेण य पक्खियाईणि वि* चउद्दसीए आयरियाणि, अन्नहा आगमुत्ताणि पुण्णिमाए×" इति कलिकालसर्वज्ञश्रीमद्धेमचन्द्रसूरिगुरुश्रीमद्देवचन्द्रसूरयो मूलशुद्धिरित्यपरनामठाणाप्रकरणवृत्तौ, तथैव "पूज्या इत्थं वदन्ति—यदा सांवत्सरिकं पञ्चम्यामासीत्तदा पाक्षिकाणि पञ्चदश्यां सर्वाण्यभूवन् । ××× साम्प्रतं चतुर्थ्यां

* [illegible] "यत्तु क्वापि ठाणावृत्तौ 'तव्वसेण पक्खियाईणि चउद्दसीए' इत्यादिलिखितं दृश्यते, तत्र राकारक्तेन केनचित्पाठः परावृत्य लिखितो, जीर्णादर्शेषु [illegible]रपि गुरुतत्त्वप्रदीपादौ ज्ञापितमस्ति" इति प्रवचनपरीक्षायुक्तिः समाश्रयणीया, गुरुतत्त्वप्रदीपे सर्वथैवैतत्पाठचार्चिकया-[illegible] गुरुमण्डनानाम्भिः स्वोपज्ञे विचारामृतसङ्ग्रहे (पत्र २४) "पक्खियाईणि" इत्यादिकस्यैव ठाणावृत्तिपाठस्यास्तित्वस्वीकारात् ।

×ननु 'पुण्णिमाए' इति शब्देन पूर्णिमैव व्यपदिश्यते, पाक्षिकाणि तु प्रतिपक्षभावित्वादमावास्यायामपि भवन्ति, ततः कथं 'पक्खियाईणि' इति शब्दस्य 'पुण्णिमाए' इति [illegible] इति चेदुच्यते—न केवलम् 'पुण्णिमाए' इत्यनेन शुक्लपञ्चदश्येव गृहीता, किन्तु चन्द्रकलाया वृद्धिं हानिं वा अपेक्ष्य 'पूरणं-पूर्णं, पूर्णेन निर्वृत्ता पूर्णिमा' [illegible] इति पूर्णिमा' अनया व्युत्पत्त्या चन्द्रकलाहानेर्मापकत्वादमावास्याऽपि गृहीता भवति ग्रन्थलाघवाय 'पुण्णिमाए' इत्येकेनैव शब्देन, अतो न काऽप्यसङ्गतिः ।

पर्युषणा, ततश्चतुर्दश्यां पाक्षिकाणि घटन्ते" इति जीवानुशासनवृत्तौ (२१ पत्रे) श्रीदेवसूरयः ।

ततः सिद्धं-आचरणानुगतं चतुर्दश्यां पाक्षिकं साम्प्रतं, परं चतुर्दश्याः पञ्चदश्या वा क्षये त्रयोदश्यां तत्करणं त्वागमाचरणयोरन्यतरस्याप्यनाराध्यत्वं, अतः सत्यामौदयिकीचतुर्दश्यां तस्यामेव तत्करणमुचितं, अन्यथा युगप्रधानाचरणाविलोपनेन निह्नवत्वावाप्तिप्रसङ्गात्, यदुक्तं-"आयरियपरंपरएण, समागयं जो उ छेयबुद्धीए । कोवेइ (कोपयति-दूषयति) छेयवाई, जमालिनासं स नासिहिति ॥ १ ॥" इति सूत्रकृताङ्गनिर्युक्तौ त्रयोदशाध्ययने ।

अत एवोक्तं-"चउद्दसीहाणीए मूलपक्खो त्तिऽमावसा-पुण्णिमासिणीसु (पक्खियं) कीरइ" इति जिनपतिसूरिभिः स्वसामाचार्यां । तथा "चाउमासियचउद्दसीहासे पुण्णिमा जुज्जइ, तेरसिगहणे आगमआयरणाणं अन्नतरंपि नाराहियं होज्जा" इति जिनप्रभसूरिभिर्विधिमार्गप्रपायां । तथा "पूर्णिमायाः पर्वतिथित्वेन मूलपक्षे-सिद्धान्ते प्रत्याख्यातत्वात्पूर्णिमायामेव तत्सङ्गतिमङ्गति । अपि च-पर्वभूतां पूर्णिमां अमावास्यां वा विहाय अपर्वभूतायां त्रयोदश्यां कथं पाक्षिककृत्यं क्रियेत ?, को नाम विज्ञंमन्यो निकटवर्त्तिनीं बृहत्प्रवाहां गङ्गां तीर्थभूतां विहाय अतीर्थभूते कूपे स्नानं समाचरेत् ? । पुनः त्रयोदश्यां तिथ्यां तत्करणे तु आगमाचरणयोर्द्वयोर्मध्ये एकस्यापि पक्षस्य अनाराधितत्वं स्यात्" इति समयसुन्दरोपाध्यायैः सामाचारीशतके ६८पत्रे ।

नन्वेवं तर्हि किमिति द्वितीयापञ्चम्याद्यन्यपर्वतिथिक्षयेऽकृत्वा पाश्चात्यायां तृतीया-षष्ठ्यादितिथौ तदाराधनं प्रतिपच्चतुर्थ्यादिपौर्वात्यायामेव क्रियते ?, उच्यते-तत्रापर्वत्वेन पौर्वात्य-पाश्चात्ययोर्द्वयोरपि तिथ्योः समानत्वेऽपि पौर्वात्यायां तत्तत्पर्वतिथिभोगस्योपलभ्यमानत्वात्पाश्चात्यायां तु तद्गन्धस्याप्यनुपलम्भात्, यदुक्तं "नवमीतिथेः अपर्वतिथित्वेन सप्तम्या साम्येऽपि अष्टमीसत्कभोगबहुलत्वेन

पर्वं सप्तम्यामेवाष्टमीकृत्यं" इति सामाचारीशतके ६९ पत्रे, तथा "अष्टमीहानावष्टमीकृत्यकरणस्य स्थानान्तरानवाप्तौ सप्तम्यास्तम्भङ्गोगवत्कृत्यमङ्गावात्सप्तमीकृत्यस्यैवानन्यगत्या (तत्) स्थानतया गीतार्थैरङ्गीकारात्। ननु तर्हि चतुर्दशीहानौ त्रयोदश्यामपि तद्वदेव पाक्षिककृत्यं चतुर्दशीतिथिविधेयं कथं विधेयतया नाद्रियते ? इति चेन्न, चतुर्दश्यां पाक्षिककृत्यस्य कालिकाचार्यैराचरितत्वात्, पौर्णमास्यां तु पाक्षिककृत्यकरणमागमानुगामि, तेन चैत्यपरिपाटि–मुनिजनवन्दन-पाक्षिकातिचारालोचना-ऽऽलोचनास्थानीयचतुर्थतपोविशेषविधानादिपाक्षिककृत्यं पाक्षिकपर्वत्वेनाचरितायाश्चतुर्दश्या हानौ सदागमाविगीतपूर्णिमारूपपाक्षिकतिथौ कार्यमिति सम्प्रदायः । सत्यां च भूतेष्टायां ( चतुर्दश्यां ) पूर्वाचार्याचरणाविशेषात्तस्यामेव पाक्षिककृत्यमनुसन्धेयं, आचरणाया अपि कथञ्चिदागमानुपातित्वात्। त्रयोदश्यां तु तत्कृत्यकरणे आगमाचरणयोरन्यतरस्याप्यनाराधितत्वं स्यात्" इति पौषधषट्त्रिंशिकावृत्तौ २७ पत्रे ।

एवं पञ्चदशीं विनाऽन्यतिथीनां वृद्धावपि पौर्वात्यायामेव पाक्षिकादीनि सर्वाण्यपि धर्मकार्याणि विधेयानि, तस्यामेव सूर्योदयास्तमनयोर्योगस्य लभ्यमानत्वात्, यदुक्तं–"तिहिवुड्ढीए पच्चक्खाण–कल्लाणयन्हवणाइसु पढमा तिही घेतव्वा" इति जिनपतिसूरिभिः स्वसामाचार्यां, तथा "सव्वतिहिवुड्ढीए पुण पढमा चेव पमाणं, संपुण्ण त्ति काउं" इति जिनप्रभसूरिवरैर्विधिमार्गप्रपायां, एवमेव "उदयतिथित्वे उभयत्र वर्त्तमानत्वेन, साम्येऽपि उदयास्तमनयोर्द्वयोस्तत्र वर्त्तमानत्वात्सम्पूर्णतिथित्वाच्च प्रथमतिथेराधिक्येन मान्यता, प्रथमतिथिं सम्पूर्णभोगां विहाय अल्पभोगाया उत्तरतिथेरङ्गीकरणे कारणाभावः" इति सामाचारीशतके ६९ पत्रे ।

तथा हानौ तथा वृद्धावपि पञ्चदश्याः पाक्षिकं औदयिकीचतुर्दश्यामेव विधेयं, न पुनर्मिथ्याकल्पनया चतुर्दशीत्वेन कल्पितायामा-

द्यायां पञ्चदश्यां, तथा कृते च निष्कारणं युगप्रधानाचरणाभङ्गप्रसङ्गत्वात्। एवं तिथीनां हानिवृद्धिप्रसङ्गे आराधनानियमसंवादिकाः शास्त्रान्तरगाथा अपीमा दृश्यन्ते, तथाहि—"चाउम्मासिअवरिसे, पक्खिअपंचऽट्ठमीसु नायव्वा। ताओ तिहिओ जासिं, उदेइ सूरो न अन्नाओ॥१॥ पूआ पच्चक्खाणं, पडिक्कमणं तह य नियमगहणं च। जाए उदेइ सूरो, ताए तिहिए उ कायव्वं॥२॥ उदयम्मि जा तिही सा, पमाणमियरा उ कीरमाणाणं। आणाभंगऽणवत्था–मिच्छत्त-विराहणा-पावं॥३॥" इति दशाश्रुतस्कन्धभाष्ये, तथा—"तिहिपडणे पुव्वतिही, कायव्वा जुत्ता धम्मकज्जेसु। चाउद्दसीविलोवे, पुण्णिमियं पक्खिपडिक्कमणं॥१॥" इत्युमास्वातिवाचकविहितायां आ(वि)चारवल्लभायां×। एवमेव "पज्जुसणे चउमासे, पक्खिअपव्वऽट्ठमीसु नायव्वा। ताओ तिहिओ जासिं, उदेइ सूरो न अन्नाओ॥१॥ भवइ जहिं तिहिहाणी, पुव्वतिहीविद्धिया य सा कीरइ। पक्खी न तेरसीए, कुज्जा सा पुण्णिमासीए॥२॥" इति श्रीहारिभद्रीयतत्त्वविचारसारे×। अन्यत्रापि "तिहीवुड्ढीए पुव्वा, गहिया पडिपुण्ण-

× न च वाच्यं–अनयोर्ग्रन्थयोरस्तित्वस्यैवासम्भवः, कुत्राप्यनुपलभ्यमानत्वात्, ततस्तयोरिमा गाथा इति कथं निश्चीयते? इति, यतः श्रूयते–पञ्चशतग्रन्था निर्मिता उमास्वातिभि', तेषु तत्त्वार्थ–प्रशमरत्यादयो द्वित्रा एव साम्प्रतमुपलभ्यन्ते, एवं हरिभद्रसूरिरचितेष्वपि चतुश्चत्वारिंशदधिकचतुर्दशशतेषु ग्रन्थेषु कराङ्गुलिगण्या एव ग्रन्थाः साम्प्रतमुपलभ्यन्ते, ततो यदाऽस्मदीयैश्चिरन्तनाचार्यैरिमा गाथाः प्रमाणतयोद्धृतास्तदा भविष्यत्येतयोर्ग्रन्थयोर्विद्यमानता, पश्चात्कालदोषेण व्यवच्छिन्नावभूतां स्यात् अतोऽत्र तु न किमप्यसम्भाव्यं, परमुमास्वातिप्रघोषत्वेन भवता स्वीकृते "क्षये पूर्वा" इत्यादि श्लोकस्य तु स्पष्ट एवोमास्वातिकृतित्वासम्भवः, भिन्नभिन्नग्रन्थेषु भिन्नभिन्नपाठतयोपलभ्यमानत्वात्तथाहि—"क्षये पूर्वा तिथिः कार्या, वृद्धौ कार्या तथोत्तरा। श्रीवीरज्ञाननिर्वाणं, कार्यं लोकानुगैरिह॥१॥" इति रत्नशेखरसूरिः श्राद्धविधौ। अस्यैव तृतीयपादं "श्रीमद्वीरनिर्वाणं" इति तत्त्वतरङ्गिण्यादौ, "श्रीमहावीरनिर्वाणं" इत्यप्यन्ये वर्तमानपत्रादौ। कवित्वदृष्ट्याऽपि न सम्भवत्येवंविधा ग्रामीणकृतिरुमास्वातिमहर्षीणाम्।

पौषधः, एवंविधो य उपवासस्तं 'प्रस्थापितवन्तः' कृतवन्तः, आहारत्यागरूपं उपवासं कृतवन्त इत्यर्थः, अन्यथा दीपकरणासम्भवः। ततश्च 'गतः स भावोद्योतो ज्ञानमयो भगवान्, अतो द्रव्योद्योतं करिष्याम'

भोगमंजुत्ता। इयरा वि माणणिज्जा, परं थोव त्ति न तत्तुल्ला ॥ १ ॥" इति। तथैव "छट्ठिसहिया न अट्ठमी, तेरसीसहियं न पक्खियं होइ। पडिवयसहियं न कया वि, इमं भणियं वीयरागेहिं ॥ १ ॥" इति।

ननु पर्वतिथीनां हानिर्वृद्धिर्वा जैनसिद्धान्ते नैव भवतीत्युद्घुष्यते कैश्चित्तत्सिद्धान्तानुगतमुत्तीर्णं वा ?, उच्यते—तत्सिद्धान्तोत्तीर्णमेव, यतो जैनसिद्धान्ते पर्वापर्वयोरन्यतरायाः कस्या अपि तिथेर्वृद्धिः सर्वथैव नोक्ता, केवलं युगादितो द्वाषष्टिद्वाषष्टितमायास्तिथेर्हानिरेवोक्ता, न चैतत्कथनमनागमिकं, सूर्यप्रज्ञप्तिसूत्रवृत्त्यादिजैनज्योतिस्सिद्धान्ते तथैवाभिहितत्वात्, तथाहि—"युगादितश्चतुर्थे पर्वणि प्रतिपद्यवमरात्रिभूतायां द्वितीया समाप्तिमुपयातीति × × × सप्तत्रिंशत्तमे पर्वणि गते द्वितीयायामवमरात्रिभूतायां तृतीया समाप्नोति × × × तृतीयायां चतुर्थी समापतत्यष्टमे पर्वणि गते, चतुर्थ्यां पञ्चमी एकचत्वारिंशत्तमे पर्वणि, पञ्चम्यां षष्ठी द्वादशे पर्वणि, षष्ठ्यां सप्तमी पञ्चचत्वारिंशत्तमे पर्वणि, सप्तम्यामष्टमी षोडशे, अष्टम्यां नवमी एकोनपञ्चाशत्तमे, त्रयोदश्यां चतुर्दशी अष्टाविंशतितमे, चतुर्दश्यां पञ्चदशी एकषष्टितमे, पञ्चदश्यां प्रतिपद्द्वात्रिंशत्तमे इति, एवमेव युगपूर्वार्द्धे, एवं युगोत्तरार्द्धेऽपि द्रष्टव्यं सूर्यप्रज्ञप्त्यादौ" इति विचारामृतसंग्रहे ३२ पत्रे तपाकुलमण्डनसूरयः।

एतावता सिद्धमेतदद्भुत—भवत्येव जैनसिद्धान्तापेक्षया पञ्चदशानामपि तिथीनां हानिर्न च पर्वापर्वयोरन्यतराया अपि वृद्धिरित्यलमतिप्रसङ्गेन, विशेषार्थिना विलोक्याः सामाचारीशतक—जीवानुशासन—पौषधषट्त्रिंशिकावृत्त्यादयो विस्तरग्रन्था:।

जं रयणिं च णं समणे भगवं महावीरे जाव सव्वदुक्खप्पहीणे, तं रयणिं च णं खुद्दाए भासरासी नाम महग्गहे दोवाससहस्सठिई समणस्स भगवओ महावीरस्स जम्मनक्खत्तं संकंते ॥ १३३ ॥

जप्पभिइं च णं से खुद्दाए भासरासी महग्गहे दोवाससहस्सठिई समणस्स भगवओ महावीरस्स जम्मनक्खत्तं संकंते, तप्पभिइं च



इति विचिन्त्य दीपाः तेजस्कायमया रत्नमया वा प्रवर्त्तिताः, ततः प्रभृति दीपोत्सवः प्रवृत्तः । कार्त्तिकशुक्लप्रतिपदि च श्रीगौतमस्य केवलमहिमा देवैः कृतः, अतस्तत्रापि जनप्रमोदः । नन्दिवर्द्धननृपश्च भगवतो निर्वाणं श्रुत्वा शोकार्त्तः सन् सुदर्शनया भगिन्या सम्बोध्य स्वगृहे द्वितीयायां भोजितस्ततो भ्रातृद्वितीयापर्वरूढिः ।

१३३–यस्यां रजन्यां श्रमणो भगवान् महावीरो यावत्सर्वदुःखप्रहीणोऽभूत्तस्यां रजन्यां 'क्षुद्रात्मा' क्रूरो भस्मराशिनामा अष्टाशीतिग्रहेषु त्रिंशत्तमो × महाग्रहो द्विवर्षसहस्रस्थितिकः, एकस्मिन्नक्षत्रे राशौ वा एतावन्तं कालमवस्थानात्, श्रमणस्य भगवतो महावीरस्य जन्मनक्षत्रं–उत्तराफाल्गुनीनामकं सङ्क्रान्तः ।

१३४–यत्प्रभृति स क्षुद्रात्मा भस्मराशिमहाग्रहो द्विवर्षसहस्रस्थितिकः श्रमणस्य भगवतो महावीरस्य

× अङ्गारको-विकालको-लोहिताक्षः-शनैश्चर-आधुनिकः-प्राधुनिक -कणः-कणकः-कणकणकः-कणवितानक.-कणसन्तानक -सोम.-सहितः-अश्वसेनः-कार्योपगः-कर्बूरकः-अजकरकः-दुन्दुभकः-शङ्खः-शङ्खनाभ.-शङ्खवर्णाभः-कंस.-कंसनाभः-कंसवर्णाभः-नील -नीलावभासः-रूपी-रूपावभासः-भस -भस्मराशि -तिलः-तिलपुष्पवर्णः-दकः-दकवर्णः-कार्यः-वन्ध्य -इन्द्राग्निः-धूमकेतुः-हरिः-पिङ्गलः-बुधः-शुक्र -बृहस्पतिः-राहुः-अगस्तिः-माणवकः-कामस्पर्शः-धुरः-प्रमुखः-विकटः-विसन्धिकल्पः-प्रकल्पः-जटालः-अरुणः-अग्निः-कालः-महाकालः-स्वस्तिक.-सौवस्तिकः-वर्द्धमानः-प्रलम्ब -नित्यालोकः-नित्योद्योतः-स्वयम्प्रभः-अवभासः-श्रेयस्करः-क्षेमङ्करः-आभङ्करः-प्रभङ्करः-अरजाः-विरजाः-अशोकः-वीतशोक.-विततः-विवस्त्रः-विशाल.-शाल.-सुव्रतः-अनिवृत्तिः-एकजटी-द्विजटी-कर.-करिकः-राजा-अर्गलः-पुष्प -भावः-केतुः इत्यष्टाशीतिर्ग्रहाः ।

तं समणाणं निग्गंथाणं निग्गंथीण य नो उदिए उदिए पूआ-सक्कारे पवत्तइ ॥ १३४ ॥ जया णं से खुद्दाए जाव जम्मनक्खत्ताओ विइक्कंते भविस्सइ, तया णं समणाणं निग्गंथाणं निग्गंथीण य उदिए उदिए पूआ-सक्कारे भविस्सइ ॥ १३५ ॥

जं रयणिं च णं समणे भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे, तं रयणिं च णं कुंथू अणुद्धरी नामं समुप्पन्ना, जा ठिया

---

जन्मनक्षत्रं सङ्क्रान्तस्तत्प्रभृति च श्रमणानां निर्ग्रन्थानां निर्ग्रन्थीनां च 'उदितोदितः' उत्तरोत्तरं वृद्धिमान् पूजा-चन्दनादिका, सत्कारो-वस्त्रदानादिबहुमानो न प्रवर्त्तते। अत एव देवेन्द्रेण विज्ञप्तः स्वामी—

"जिनेश ! तव जन्मर्क्षं, गन्ता भस्मकदुर्ग्रहः। बाधिष्यते स वर्षाणां, सहस्रे द्वे तु शासनम् ॥ १ ॥"

"तस्य सङ्क्रमणं याव-द्विलम्बस्व ततः प्रभो ! । भवत्प्रभावप्रभावेण, स यथा विफलो भवेत् ॥ २ ॥"

"स्वामसूने शक्र ! केनापि, नायुः सन्धीयते क्वचित्। दुःषमाभावतो बाधा, भाविनी मम शासने ॥ ३ ॥"

किञ्च—अन्यान्यग्रन्थोक्त्या निगृहीते त्वया कल्किकुनृपे व्यतिक्रान्ते च मज्जन्मर्क्षाद्भस्मराशिग्रहे त्वत्स्थापित-कल्किपुत्रधर्मदत्तराज्यात्प्रारभ्य साधुसाध्वीनां उदितोदितः पूजासत्कारो भविष्यतीत्यप्युक्तं। सूत्रकारा अप्याहुः—

१३५—यदा स क्षुद्रात्मा यावद् भगवतो जन्मनक्षत्राद्व्यतिक्रान्तो भविष्यति, तदा श्रमणानां निर्ग्रन्थानां निर्ग्रन्थीनां च उदितोदितः उदय उदये वा पूजासत्कारो भविष्यति।

१३६—यस्यां रजन्यां श्रमणो भगवान् महावीरः कालगतो यावत्सर्वदुःखप्रहीणोऽभूत्तस्यां रजन्यां 'अनुद्धरी' उद्धर्तुमशक्या कुन्थुरिति नाम जन्तुजातिः, समुत्पन्ना, या स्थिता अचलन्ती सति छद्मस्थानां निर्ग्रन्थानां

अचलमाणा छउमत्थाणं निग्गंथाणं निग्गंथीण य नो चक्खुफासं हव्वमागच्छइ, जा अठिया चलमाणा छउमत्थाणं० चक्खुफासं हव्वमागच्छइ
जं पासित्ता बहुहिं निग्गंथेहिं निग्गंथीहि य भत्ताइं पच्चक्खायाइं। से किमाहु ? भंते !, अज्जप्पभिई संजमे दुराराहे भविस्सइ ॥१३७॥
ते णं काले णं ते णं समए णं समणस्स भगवओ महावीरस्स इंदभूइपामुक्खाओ चउद्दस समणसाहस्सीओ उक्कोसिआ समणसंपया हुत्था
समणस्स भगवओ महावीरस्स अज्जचंदणापामुक्खाओ छत्तीसं अज्जियासाहस्सीओ उक्कोसिआ अज्जियासंपया हुत्था ॥ १३९ ॥
समणस्स० संख-सयगपामुक्खाणं समणोवासगाणं एगा सयसाहस्सी अउणट्ठिं च सहस्सा, उक्कोसिया समणोवासगाणं संपया हुत्था

निर्ग्रन्थीनां च नो 'चक्षुःस्पर्शं' दृष्टिपथं शीघ्रमागच्छति, या अस्थिता चलन्ती सती छद्मस्थानां निर्ग्रन्थानां निर्ग्रन्थीनां च चक्षुःस्पर्शं शीघ्रमागच्छति।

१३७–यां कुन्थुमनुद्धरीं दृष्ट्वा बहुभिर्निर्ग्रन्थैर्निर्ग्रन्थीभिश्च भक्तानि प्रत्याख्यातानि–अनशनं कृतमित्यर्थः। शिष्यः पृच्छति–तत् 'किमाहुर्भदन्ताः !' किं कारणं यद्भक्तानि प्रत्याख्यातानि ?, गुरुराह–अद्यप्रभृति संयमो दुराराध्यो भविष्यति। अथ प्रभोः परिवारसङ्ख्यामाह—

१३८–तस्मिन् काले तस्मिन् समये श्रमणस्य भगवतो महावीरस्य इन्द्रभूतिप्रमुखाश्चतुर्दश श्रमणसहस्राणि, उत्कृष्टा एतावती श्रमणसम्पदा अभवत्।

१३९–श्रमणस्य० आर्याचन्दनाप्रमुखाणि षट्त्रिंशदार्यिकासहस्राणि, एतावत्युत्कृष्टा आर्यिकासम्पदाऽभवत्।

१४०–श्रमणस्य भगवतो महावीरस्य शङ्ख–शतकप्रमुखाणां श्रमणोपासकानां एकं शतसहस्रं–लक्षं एकोनषष्टिसहस्राणि च, एतावत्युत्कृष्टा श्रमणोपासकानां सम्पदाऽभवत्।

सूत्राणि १३६-४० प्रभुनिर्वाणे जीवोत्पत्तिबहुलत्वाद्बहुभिः श्रमणादिभिः कृतोऽनशनो वीरपरिवारश्च

समणस्स० सुलसा-रेवईपामुक्खाणं समणोवासिआणं तिन्नि सयसाहस्सीओ अट्ठारस सहस्सा, उक्कोसिआ समणो० संपया हुत्था

समणस्स णं भगवओ महावीरस्स तिन्नि सया चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं सव्वक्खरसन्निवाईणं जिणो विव अवितहं वागरमाणाणं उक्कोसिआ चउद्दसपुव्वीणं संपया हुत्था ॥ १४२ ॥

समणस्स भगवओ महावीरस्स तेरससया ओहिनाणीणं अइसेसपत्ताणं, उक्कोसिया ओहिनाणिसंपया हुत्था ॥ १४३ ॥

समणस्स णं भगवओ महावीरस्स सत्तसया केवलनाणीणं संभिण्णवरनाणदंसणधराणं, उक्कोसिया केवलनाणिसंपया हुत्था ॥१४४॥

---

१४१–श्रमणस्य भगवतो महावीरस्य सुलसा-रेवतीप्रमुखाणां श्रमणोपासिकानां त्रीणि शतसहस्राणि अष्टादश च सहस्राणि, उत्कृष्टा श्रमणोपासिकानां सम्पदाऽभवत्।

१४२–श्रमणस्य भगवतो महावीरस्य त्रीणि शतानि चतुर्दशपूर्विणां 'अजिनानां' अपेगम्यमानत्वात्, असर्वज्ञानामपि 'जिनसङ्काशानां' सर्वज्ञतुल्यानां सर्वाक्षरसन्निपातिनां, सर्वे 'अक्षरसन्निपाताः' वर्णसंयोगा ज्ञेयतया विद्यन्ते येषां ते तथा, अतो जिन इव 'अवितथं' सत्यं व्याकुर्वतां, उत्कृष्टा चतुर्दशपूर्विणां सम्पदाऽभवत्।

१४३–श्रमणस्य भगवतो महावीरस्य त्रयोदशशतानि अवधिज्ञानिनां 'अतिशेषाः' आमर्षौषध्यादिलब्धिरूपा अतिशयास्तान्प्राप्तानां, उत्कृष्टा एतावती अवधिज्ञानिसम्पदा अभवत्।

१४४–श्रमणस्य भगवतो महावीरस्य सप्तशतानि केवलज्ञानिनां 'सम्भिन्ने' सम्पूर्णे वरे च ज्ञानदर्शने ये धरन्ति, तेषां, एतावत्युत्कृष्टा केवलज्ञानिसम्पदाऽभवत्।

समणस्स णं भगवओ महावीरस्स सत्तसया वेउव्वीणं अदेवाणं देविड्ढिपत्ताणं, उक्कोसिया वेउव्वियसंपया हुत्था ॥ १४५ ॥

समणस्स णं भगवओ महावीरस्स पंचसया विउलमईणं, अड्ढाइज्जेसु दीवेसु दोसु अ समुद्देसु सन्नीणं पंचिंदियाणं पज्जत्तगाणं मणोगए भावे जाणमाणाणं, उक्कोसिआ विउलमईणं संपया हुत्था ॥ १४६ ॥

समणस्स णं भगवओ महावीरस्स चत्तारि सया वाईणं सदेवमणुआसुराए परिसाए वाए अपराजियाणं उक्कोसिया वाइसंपया हुत्था

समणस्स णं भगवओ महावीरस्स सत्त अंतेवासिसयाइं सिद्धाइं जाव सव्वदुक्खप्पहीणाइं, चउद्दस अज्जियासयाइं सिद्धाइं ॥१४८॥

---

१४५–श्रमणस्य भगवतो महावीरस्य सप्तशतानि "वेउव्वीणं"ति वैक्रियलब्धिमतां, अदेवानामपि 'देवर्द्धि-प्राप्तानां' देवर्द्धिविकुर्वणासमर्थानां, उत्कृष्टा वैक्रियलब्धिमत्सम्पदाऽभवत् ।

१४६–श्रमणस्य० पञ्चशतानि विपुलमतीनां अर्धतृतीयेषु द्वीपेषु द्वयोश्च समुद्रयोर्विषये सञ्ज्ञिनां पञ्चेन्द्रि-याणां पर्याप्तकानां मनोगतान् भावान् जानतां, उत्कृष्टा विपुलमतीनां × सम्पदाऽभवत् । [ ऽभवत् ।

१४७–श्रमणस्य० चत्वारि शतानि वादिनां सदेवमनुजासुरायां पर्षदि वादेऽपराजितानां, उत्कृष्टा वादिसम्पदा-

१४८–श्रमणस्य०सप्तान्तेवासिशतानि सिद्धानि यावत्सर्वदुःखप्रहीणानि, चतुर्दश आर्यिकाशतानि सिद्धानि ।

---

× तत्र घटोऽनेन चिन्तितः, स च सौवर्णः–पाटलिपुत्रकीयः–शारदः–कृष्ण इत्यादिबहुविधविशेषणोपेतमन्यमानवस्तुग्राहित्वेन विपुला–विस्तीर्णा मतिः–मनःपर्यायज्ञानरूपा येषां ते विपुलमतयः, ते हि सार्द्धद्व्यङ्गुलाधिके मनुजक्षेत्रे स्थितानां सञ्ज्ञिपञ्चेन्द्रियाणां मनोगतान् भावान् जानन्ति । ऋजुमतयस्तु सार्द्धद्व्यङ्गुलोने सम्पूर्णे वा मनुजक्षेत्रे स्थितानां सञ्ज्ञिपञ्चेन्द्रियाणां मनःपुद्गलमात्रमेव जानन्ति । दर्शनाभावादत्र "जाणमाणाणं" इत्येवोक्तं ।

समणस्स णं० भट्ठसया अणुत्तरोववाइयाणं गइकल्लाणाणं ठिइकल्लाणाणं आगमेसिभद्दाणं उक्कोसिआ अणुत्तरोववाइयाणं संपया हुत्था
समणस्स णं भगवओ महावीरस्स दुविहा अंतगडभूमी हुत्था, तं जहा–जुगंतगडभूमी य परियायंतगडभूमी य, जाव तच्चाओ पुरिसजुगाओ जुगंतगडभूमी, चउवासपरियाए अंतमकासी ॥ १५० ॥
ते णं काले णं ते णं समए णं समणे भगवं महावीरे तीसं वासाइं अगारवासमज्झे वसित्ता, साइरेगाइं दुवालसवासाइं छउमत्थ-

१४९–श्रमणस्य० अष्टौ शतानि 'अनुत्तरोपपातिकानां' अनुत्तरविमानोत्पन्नमुनीनां, येषां गतिर्देवसत्का कल्याणी–उत्कृष्टा, स्थितिरपि देवायुःसत्का कल्याणी, यद्वा गतौ–प्राणगमने स्थितौ–जीवितेऽपि च कल्याणं येषां। पुनः आगमिष्यद्भद्राणां, आगामिभवे सेत्स्यमानत्वात्, एतावत्युत्कृष्टा अनुत्तरोपपातिकानां सम्पदाऽभवत्।

१५०–श्रमणस्य भगवतो महावीरस्य द्विविधा 'अन्तकृतः' मोक्षगामिनस्तेषां 'भूमिः' कालोऽन्तकृद्भूमिः अभवत्, तद्यथा–युगान्तकृद्भूमिः पर्यायान्तकृद्भूमिश्च। तत्र 'युगानि' कालविशेषास्तानि च क्रमवर्त्तीनि, ततोऽनुक्रमभाविनो गुरुशिष्यरूपाः पुरुषास्तेऽपि 'युगा' युगप्रधानास्तैः प्रमिता अन्तकृद्भूमिर्युगान्तकृद्भूमिः, ततस्तृतीयं पुरुषयुगं–जम्बूस्वामिनं यावत् श्रीवीरतीर्थे सिद्धिमार्गो वहमानोऽभूदेषा युगान्तकृद्भूमिः। 'पर्यायः' केवलित्वकालस्तमाश्रित्य चतुर्वर्षपर्यायेऽन्तमकार्षीदिति पर्यायान्तकृद्भूमिः, अर्थात्स्वामिनो ज्ञानोत्पत्त्यनन्तरं चतुर्षु वर्षेष्वतीतेषु भगवच्छासने सिद्धिमार्गो वहमानो जातः जम्बूस्वामिनं यावच्च स्थितः।

१५१–तस्मिन् काले तस्मिन्समये श्रमणो भगवान् महावीरस्त्रिंशद्वर्षाणि 'अगारवासमध्ये' गृहस्थाश्रमे उषित्वा 'सातिरेकाणि' सार्द्धषण्मासाधिकानि द्वादशवर्षाणि छद्मस्थपर्यायं पालयित्वा 'देशोनानि' सार्द्ध-

परियागं पाउणित्ता, देसूणाइं तीसं वासाइं केवलिपरियागं पाउणित्ता, बायालीसं वासाइं सामण्णपरियागं पाउणित्ता, बावत्तरिवासाइं सव्वाउयं पालइत्ता, खीणे वेयणिज्जाउयनामगुत्ते, इमीसे ओसप्पिणीए दूसमसुसमाए समाए बहुविइक्कंताए, तिहिं वासेहिं अद्धनवमेहि य मासेहिं सेसेहिं, पावाए मज्झिमाए हत्थिवालस्स रण्णो रज्जुयसभाए, एगे अबीए, छट्ठेणं भत्तेणं अपाणएणं, साइणा नक्खत्तेणं जोगमुवागएणं, पच्चूसकालसमयंसि, संपलियंकनिसण्णे, पणपन्नं अज्झयणाइं कल्लाणफलविवागाइं पणपन्नं अज्झयणाइं पावफलविवागाइं छत्तीसं च अपुट्ठवागरणाइं वागरित्ता, पहाणं नाम अज्झयणं विभावेमाणे विभावेमाणे कालगए विइक्कंते समुज्जाए छिन्न-जाइ-जरा-मरण-

---

पञ्चमासोनानि त्रिंशद्वर्षाणि केवलिपर्यायं पालयित्वा, द्विचत्वारिंशद्वर्षाणि श्रामण्यपर्यायं पालयित्वा, द्वासप्तिवर्षाणि सर्वायुः पालयित्वा, क्षीणेषु सत्सु वेदनीयायुर्नामगोत्राख्येषु चतुर्षु भवोपग्राहिकर्मसु, अस्यामवसर्पिण्यां दुष्षमसुषमायां समायां—चतुर्थेऽरके बहुव्यतिक्रान्ते सति, त्रिषु वर्षेषु अर्द्धनवमेषु च मासेषु शेषेषु सत्सु, पापायां मध्यमायां हस्तिपालस्य राज्ञो 'रज्जुकसभायां' लेखकशालायां 'एकः' कर्मसहायरहितत्वात्, अद्वितीयः, न तु ऋषभादिवद्दशसहस्रादिसाधुपरिवृत इति, अत्र कविः— [॥ १ ॥" (रथो०)

"यत्र कश्चन मुनिस्त्वया समं, मुक्तिमापदितरैर्जिनैरिव। दुष्षमासमयभाविलिङ्गिनां, व्यञ्जि तेन गुरुनिर्व्यपेक्षता

षष्ठेन भक्तेन अपानकेन, स्वातिना नक्षत्रेण सह चन्द्रयोगमुपागते सति, प्रत्यूषकालसमये—घटिकाचतुष्कावशिष्टायां निशायां 'सम्पल्यङ्कनिषण्णः' सम्यक् पद्मासनेनोपविष्टः सन् पञ्चपञ्चाशदध्ययनानि कल्याणफलविपाकानि पञ्चपञ्चाशदध्ययनानि पापफलविपाकानि षट्त्रिंशच्च 'अपृष्टव्याकरणानि' अपृष्टोत्तराणि अध्ययनानि 'व्याकृत्य' कथयित्वा, प्रधानं नाम मरुदेवाधिकारसम्बद्धं अध्ययनं विभावयन् विभावयन्—प्ररूपयन् २

कालगए सिद्धे बुद्धे मुत्ते अंतगडे परिनिव्वुडे सव्वदुक्खप्पहीणे ॥ १५१ ॥

समणस्स भगवओ महावीरस्स जाव सव्वदुक्खप्पहीणस्स नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे

कालगतः व्यतिक्रान्तः संसारात् 'समुद्यातः' सम्यगूर्ध्वं गतः, छिन्नानि जाति-जरा-मरण-बन्धनानि यस्य, तथा सिद्धो बुद्धो मुक्तः संसारान्तकृत् 'परिनिर्वृतः' कर्मसन्तापरहितः सर्वदुःखप्रहीणो जातः ।

१५२–श्रमणस्य भगवतो महावीरस्य यावत्सर्वदुःखप्रहीणस्य नव वर्षशतानि व्यतिक्रान्तानि, दशमस्य च वर्षशतस्य अयमशीतितमः संवत्सरः कालो गच्छति । यद्यप्येतस्य सूत्रस्य व्यक्तोऽर्थो न ज्ञायते, तथापि यथा पूर्वसूरिभिर्व्याख्यातं तथा व्याख्यायते, तथाहि–अत्र केचिद्वदन्ति–यत्कल्पसूत्रस्य पुस्तकलिखनकालज्ञापनायेदं सूत्रं श्रीमद्देवर्द्धिगणिक्षमाश्रमणैर्लिखितं, तथा चायमर्थः–वीरनिर्वाणादशीत्यधिके नव वर्षशतेऽतिक्रान्ते सिद्धान्तलिखनसमये कल्पोऽपि पुस्तके लिखितः, यदुक्तं–

"× वल्लहिपुरम्मि नयरे, देवड्ढिपमुहसयलसंघेहिं । पुत्थे आगमु लिहिओ, नवसय-असीआओ वीराओ ॥ १ ॥"

अन्ये पुनः–"नवशत अशीतिवर्षे, वीरात्सेनाङ्गजार्थमानन्दे । सङ्घसमक्षं समहं, प्रारब्धं वाचितुं विज्ञैः ॥ १ ॥"

इत्यादिकल्पान्तर्वाच्यप्रमाणतः श्रीवीरनिर्वाणादशीत्यधिके नववर्षशतेऽतिक्रान्ते कल्पस्य सभायां वाचना जातेति ज्ञापयितुमिदं सूत्रं न्यस्तमिति वदन्ति, तत्त्वं पुनः केवलिनो विदन्ति ।

---

× वल्लभीपुरे नगरे, देवर्द्धिप्रमुखसकलसङ्घैः । पुस्तके आगमो लिखितः, नवशताशीतौ वीरात् ॥ १ ॥ १–पदैकदेशे परसमुदायोपचाराद् ध्रुवसेनपुत्रशोकनिवृत्त्यर्थं ।

संवच्छरे काले गच्छइ, वायणंतरे पुण 'अयं तेणउए संवच्छरे काले गच्छइ' इइ दीसइ ॥ १५२ ॥



वाचनान्तरे पुनरयं त्रिनवतितमः संवत्सरः कालो गच्छतीति दृश्यते, अत्रापि केचिद्वदन्ति-'वाचनान्तरे' प्रत्यन्तरे "तेणउए" इति दृश्यते, तेन कल्पस्य पुस्तके लिखनं पर्षदि वाचनं वा अशीत्यधिके नववर्षशतेऽतिक्रान्ते इति क्वचित्पुस्तके लिखितं, तदेव पुस्तकान्तरे 'त्रिनवत्यधिके नववर्षशतेऽतिक्रान्ते' इति लिखितं दृश्यते। अन्ये वदन्ति-कल्पस्य पुस्तके लिखनरूपवाचनाया हेतुभूतोऽयमशीतितमः संवत्सरस्तदन्यस्य पर्षदि वाचनरूपवाचनान्तरस्य हेतुभूतोऽयं त्रिनवतितमः संवत्सरः। तथा च स्थितं-नवशताशीतितमे वर्षे पुस्तके लिखनं नवशतत्रिनवतितमे च वर्षे पर्षदि वाचनं कल्पस्य जातमिति, तत्त्वं पुनर्बहुश्रुता विदन्ति।

इति श्रीपर्युषणाकल्पावचूर्यन्तर्वाच्यादिविविधव्याख्यामुपजीव्य प्रवचनप्रभावकश्रीखरतरगच्छगगनाङ्गणदिनकर-क्रियोद्धारक-श्रीमन्मोहनमुनीश्वरविनेयविनेयानुयोगाचार्य-श्रीमत्केशरमुनिजी-गणिवरसंगृहीतायां कल्पार्थबोधिनीनामपर्युषणाकल्पव्याख्यायां प्रभोरुपसर्गसहनादिवर्णनान्वितं ज्ञान-निर्वाणरूपपञ्चम-षष्ठकल्याणकव्यावर्णनात्मकं षष्ठं व्याख्यानं समाप्तम्।

तत्समाप्तौ च समाप्तमिदं "कल्लाणफला य जीवाणं" इत्याद्याप्तवाक्यात्सकलजगज्जीवकल्याणमङ्गलश्रेयःकरणप्रवण-गर्भाधान १ गर्भहरण ("गर्भस्य-श्रीवर्द्धमानरूपस्य हरणं-त्रिशलाकुक्षौ सङ्क्रामणं" इति कल्पदी० जयविजयः) २ जन्म ३ दीक्षा ४ ज्ञान ५ निर्वाण ६ रूपकल्याणकषट्कनिबन्धबन्धुरं श्रीवीरचरित्रम्।

ग्रं० १२०-२-१ मूलं, ८५९-३-१ वृत्तिः, २७१-२-६ टि० नं० १, २०-३-६ टि० नं० २, सर्वाग्रेण १२८०-३-६, व्या० पङ्क्तस्य ४५०१-३-२।

# अथ सप्तमं व्याख्यानम्–



ते णं काले णं ते णं समए णं पासे णं अरहा पुरिसादाणीए पंचविसाहे हुत्था, तं जहा–विसाहाहिं चुए, चइत्ता गब्भं वक्कंते १, विसाहाहिं जाए २, विसाहाहिं मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए ३, विसाहाहिं अणंते अणुत्तरे निव्वाघाए निरावरणे कसिणे पडिपुण्णे केवलवरनाणदंसणे समुप्पन्ने ४, विसाहाहिं परिनिव्वुए ५ ॥ १५२ ॥

ते णं काले णं ते णं समए णं पासे अरहा पुरिसादाणीए जे से गिम्हाणं पढमे मासे पढमे पक्खे चित्तबहुले, तस्स णं चित्तबहुलस्स चउत्थीपक्खे णं पाणयाओ कप्पाओ वीसं सागरोवमट्ठियाओ अणंतरं चयं चइत्ता, इहेव जंबुद्दीवे दीवे भारहे वासे वाणारसीए नयरीए

---

१५३–अथ पार्श्वचरित्रं–तस्मिन् काले तस्मिन्समये पार्श्वोऽर्हन् 'पुरुषादानीयः' स्वपरसमयेषु सर्वत्र आदेयवाक्यत्वाच्छुभकर्मत्वाच्च पुरुषप्रधानः पञ्चविशाखोऽभवत्, पञ्चकल्याणकानि विशाखायां जातानीत्यर्थः । तद्यथा–विशाखायां च्युतो देवलोकात्, च्युत्वा 'गर्भं व्युत्क्रान्तः' मातृकुक्षौ गर्भत्वेनोत्पन्नः १, विशाखायां जातः २, विशाखायां मुण्डो भूत्वाऽगारान्निष्क्रम्यानगारितां प्रव्रजितः ३, विशाखायां अनन्तेऽनुत्तरे निर्व्याघाते 'निरावरणे' समस्तावरणरहिते कृत्स्ने प्रतिपूर्णे केवलवरज्ञानदर्शने समुत्पन्ने ४, विशाखायां परिनिर्वृतः ५ ।

१५४–तस्मिन् काले तस्मिन्समये पार्श्वोऽर्हन् पुरुषादानीयो योऽसौ ग्रीष्मकालस्य प्रथमो मासः प्रथमः पक्षश्चैत्रबहुलः, तस्य चैत्रबहुलस्य चतुर्थीदिवसे प्राणताख्याद्दशमकल्पाद्विंशतिसागरोपमस्थितिकादनन्तरं

आससेणस्स रण्णो वामाए देवीए पुव्वरत्तावरत्तकालसमयंसि विसाहाहिं नक्खत्तेणं जोगमुवागएणं आहारवक्कंतीए (ग्रं० ७००) भववक्कंतीए सरीरवक्कंतीए कुच्छिंसि गब्भत्ताए वक्कंते ॥ १५४ ॥

पासे णं अरहा पुरिसादाणीए तिन्नाणोवगए आवि हुत्था, तं जहा–चइस्सामि त्ति जाणइ, चयमाणे न जाणइ, चुएमि त्ति जाणइ। तेणं चेव अभिलावेणं सुविणदंसणविहाणेणं सव्वं, जाव निअगं गिहं अणुपविट्ठा, जाव सुहंसुहेणं तं गब्भं परिवहइ ॥ १५५ ॥

ते णं काले णं ते णं समए णं पासे अरहा पुरिसादाणीए जे से हेमंताणं दुच्चे मासे तच्चे पक्खे पोसबहुले, तस्स णं पोसबहुलस्स

---

'चयं' दिव्यशरीरं त्यक्त्वा अस्मिन्नेव जम्बूद्वीपाख्ये द्वीपे भारते वर्षे वाणारस्यां नगर्यां अश्वसेनस्य राज्ञो वामाया देव्याः कुक्षौ पूर्वरात्रापररात्रकालसमये–मध्यरात्रौ, विशाखानक्षत्रेण चन्द्रयोगमुपागते सति 'आहारव्युत्क्रान्त्या' दिव्याहारत्यागेन, एवं दिव्यभवत्यागेन दिव्यशरीरत्यागेन गर्भतया 'व्युत्क्रान्तः' उत्पन्नः।

१५५–पार्श्वोऽर्हन् पुरुषादानीयः त्रिभिर्मत्यादित्रिभिर्ज्ञानैरुपगतोऽभवत्, तद्यथा–चोष्येऽहमितो भवादिति जानाति, च्यवमानो न जानाति, एकसामयिकत्वात्तस्य, च्युतोऽस्मीति जानाति, तेनैव–प्राग्वीरचरित्रोक्तेन 'अभिलापेन' पाठेन स्वप्नदर्शन–तत्फलप्रश्नादिविधानेन सर्वं भणितव्यं, यावत्स्वप्नलक्षणपाठकसुखात्स्वप्नफलं श्रुत्वा वामादेवी निजकं गृहमनुप्रविष्टा, यावत्सुखंसुखेन तं गर्भं परिवहति।

१५६–तस्मिन् काले तस्मिन्समये पार्श्वोऽर्हन् पुरुषादानीयो योऽसौ 'हेमन्तस्य' शीतकालस्य द्वितीयो मासस्तृतीयः पक्षः पौषबहुलः, तस्य पौषबहुलस्य दशमीदिवसे नवसु मासेषु बहुप्रतिपूर्णेषु 'अर्द्धाष्टमेषु' सार्द्ध-

तए णं सा वामा देवी अन्नया कयाइ नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणं राइंदिआणं विइक्कंताणं, पुव्वरत्तावरत्तकालसमयंसि विसाहाहिं नक्खत्तेणं जोगमुवागएणं आरोग्गा आरोग्गं दारयं पयाया ॥ १५६ ॥

जं रयणिं च णं पासे अरहा पुरिसादाणीए जाए, सा रयणी बहुहिं देवेहिं देवीहि य जाव उप्पिंजलगभूआ कहकहगभूआ आवि होत्था ॥

सेसं तहेव, नवरं-जम्मणं पासाभिलावेणं भाणिअव्वं, जाव तं होउणं कुमारे पासे नामेणं ॥ १५८ ॥

---

सत्सु रात्रिन्दिवेष्वधिकेषु व्यतिक्रान्तेषु सत्सु, पूर्वरात्रापररात्रकालसमये, विशाखानक्षत्रेण सह चन्द्रयोगमुपागते सति, आरोग्या वामादेवी आरोग्यं दारकं प्रजाता ।

१५७–यस्यां रजन्यां पार्श्वोऽर्हन् पुरुषादानीयो जातः, सा रजनी बहुभिर्देवैर्देवीभिश्च यावत् 'उत्पिञ्जलभूता' भृशमाकुला इव कहकहेत्यव्यक्तवर्णकोलाहलमयीवाभवत् ।

१५८–शेषं जन्मोत्सवादिकं सर्वं तथैव-पूर्ववत्, नवरं-जन्म पार्श्वाभिलापेन भणितव्यं, यावद् द्वादशे दिवसे मित्रज्ञातीयजनान् भोजयित्वा, यस्मात्प्रभौ गर्भस्थे सति कृष्णनिशायां पार्श्वे सर्पन्तं कृष्णसर्पं ददर्श माता, तस्माद्भवतु कुमारः पार्श्व इति नाम्ना । ततः

"नीलोत्पलदलच्छायः, श्रीपार्श्वः सर्पलाञ्छनः । नवहस्तोन्नतवपुः, प्रपेदे यौवनं क्रमात् ॥ १ ॥"

"प्रसेनजिन्नरेन्द्रस्य, कुशस्थलपुरेशितुः । पुत्रीं प्रभावतीं प्रेम-परां पर्यणयत्प्रभुः ॥ २ ॥"

अन्यदा गवाक्षस्थः प्रभुरेकस्यां दिशि व्रजतः पूजोपकरणहस्तान्नागरानालोक्य 'एते क्व यान्ती'ति पृष्टः कश्चिदाह-प्रभो! कुत्रचित्सन्निवेशवासी दरिद्रो मृतमातापितृको ब्राह्मणपुत्रः कृपार्द्रैर्लोकैर्जीवितः कठनामाऽऽसीत् ।

पासे णं अरहा पुरिसादाणीए दक्खे दक्खपइन्ने पडिरूवे अल्लीणे भद्दए विणीए, तीसं वासाइं अगारवासमज्झे वसित्ता, पुणरवि लोगंतिएहिं जिअकप्पिएहिं देवेहिं ताहिं इट्ठाहिं जाव एवं वयासी ॥ १५९ ॥

---

"कस्मिंश्चिदुत्सवे स्वर्ण-वस्त्रभूषणभूषितान्। प्रेक्ष्य पौरान् विरक्तोऽसौ, प्रपन्नस्तापसव्रतम् ॥ १ ॥"
"स च वाणारसीं प्राप्तः, पर्यटन् कठतापसः । पञ्चवह्नितपस्तेपे, बाह्योद्याने कृतस्थितिः ॥ २ ॥"

तं पूजितुमेते जना व्रजन्तीति श्रुत्वा—

"तस्य पार्श्वं गतः पार्श्वो, ज्ञानत्रितयभास्करः। अज्ञानकष्टमेतद्भो !, ब्रुवन्निति कृपानिधिः ॥ १ ॥"
"अङ्गुल्या दर्शयन् दारु-खण्डं ज्वलनकुण्डतः। आकर्षयन् पृथग्यत्नात्, तद्विदारमकारयत् ॥ २ ॥"
"निस्सृतो दारितात्तस्मा-दर्द्धदग्धो महोरगः। दृशा सुधाऽऽर्द्रया दृष्ट्वा, नष्टार्त्तिं तं विभुर्व्यधात् ॥ ३ ॥"
" अश्रावयत्परमेष्ठि-मन्त्रं स्वामी कृपाकरः। सर्पः समाधिना मृत्वा, धरणेन्द्रो बभूव सः ॥ ४ ॥"
"कठोऽपि लज्जितो लोकै-र्निन्द्यमानोऽन्यतो ययौ। मृत्वा स्वायुःक्षये मेघ-कुमारेषूदपद्यत ॥ ५ ॥"

ततोऽहो ज्ञानी !! इति जनैः स्तूयमानः प्रभुः स्वावासं ययौ।

१५९-पार्श्वोऽर्हन् पुरुषादानीयो दक्षो दक्षप्रतिज्ञः प्रतिरूपः 'आलीनः' गुणैराश्लिष्टो भद्रको विनीतः, त्रिंशद्वर्षाणि अगारवासमध्ये उषित्वाऽन्यदा वने क्रीडन् नेमिराजीमत्योश्चरित्रसूचकं चित्रमालोक्य वैराग्योल्लसितमानसोऽभूत्, पुनरपि, प्राकृतत्वाद्विभक्तिव्यत्यये, लोकान्तिका जीतकल्पिका देवास्ताभिरिष्टाभिर्वाग्भिर्यावदेवं अवादिषुः।

कठतापसान्तिके गमनं पार्श्वस्य, ज्वलत्काष्ठान्नागनिष्कासनं नमस्कारश्रावणं च

॥१२६॥

"जय जय नंदा !, जय जय भद्दा !, भद्दं ते" जाव जय जय सद्दं पउंजंति ॥ १६० ॥

पुव्विं पि णं पासस्स णं अरहओ पुरिसादाणीयस्स माणुस्सगाओ गिहत्थधम्माओ अणुत्तरे आभोइए, तं चेव सव्वं, जाव दाणं दाइया- णं परिभाइत्ता जे से हेमंताणं दुच्चे मासे तच्चे पक्खे पोसबहुले, तस्स णं पोसबहुलस्स इक्कारसीदिवसे णं पुव्वण्हकालसमयंसि विसालाए सिबियाए सदेवमणुयासुराए परिसाए, तं चेव सव्वं, नवरं–वाणारसिं नगरिं मज्झंमज्झेणं निग्गच्छइ, निग्गच्छित्ता जेणेव आसमपए उज्जाणे, जेणेव असोगवरपायवे, तेणेव उवागच्छइ, उवागच्छित्ता असोगवरपायवस्स अहे सीयं ठावेइ, ठावित्ता सीयाओ पच्चोरुहइ,

१६०–'जय जय' अतिशयेन जयवान् भव हे नन्द–समृद्धिमन् !, 'जय जय' विशेषतो जयवान् भव हे 'भद्रवान्' कल्याणवान् !, भद्रं ते भवतु इत्याद्युक्त्वा यावज्जय जय शब्दं प्रयुञ्जन्ति ।

१६१–पूर्वमपि पार्श्वस्य अर्हतः पुरुषादानीयस्य 'मानुष्यकात्' मनुष्योचितात् गृहस्थधर्मात् 'अनुत्तरे' सर्वो- त्कृष्टे 'आभोगिके' उपयोगात्मके ज्ञान-दर्शने अवध्याख्येऽभूतां, ताभ्यां स्वस्य दीक्षासमयमवलोकयति, इत्यादि तदेव महावीरचरित्रोक्तं सर्वं वाच्यं, यावत् 'दानं' धनं 'दायिकानां' गोत्रिकाणां परिभाज्य-विभागशो दत्वा योऽसौ 'हेमन्तस्य' शीतकालस्य द्वितीयो मासस्तृतीयः पक्षः पौषबहुलः, तस्य पौषबहुलस्यैकादशीदिवसे 'पूर्वाह्णकाल- समये' दिवसाग्रप्रहरे विशालायां शिबिकायामुपविष्टः सन् सदेवमनुजासुरया पर्षदा सम्यगनुगम्यमानमार्गः, इत्यादि तदेव प्रागुक्तं सर्वं वाच्यं, नवरं–वाणारस्या नगर्या मध्यंमध्येन निर्गच्छति, निर्गत्य यत्रैव आश्रमपद- नामकं उद्यानं, यत्रैवाशोकवरपादपस्तत्रैवोपागच्छति, उपागत्याशोकवरपादपस्याधस्तात् शिबिकां स्थापयति, स्थापयित्वा शिबिकातः प्रत्यवतरति, प्रत्यवतीर्य स्वयमेवाभरणमाल्यालङ्कारान् अवमुञ्चति, अवमुच्य स्वयमेव

पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमुयइ, ओमुइत्ता सयमेव पंचमुट्ठियं लोअं करेइ, करित्ता अट्ठमेणं भत्तेणं अपाणएणं विसाहाहिं नक्खत्तेणं जोगमुवागए णं एगं देवदूसमादाय तिहिं पुरिससएहिं सद्धिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ १६१ ॥

पासे णं अरहा पुरिसादाणीए तेसीइं राइंदियाइं निच्चं वोसट्ठकाए चियत्तदेहे जे केइ उवसग्गा उप्पज्जंति, तं जहा-दिव्वा वा माणुस्सा वा तिरिक्खजोणिआ वा अणुलोमा वा पडिलोमा वा, ते उप्पन्ने सम्मं सहइ खमइ तितिक्खइ अहियासेइ ॥ १६२ ॥

---

पञ्चमौष्टिकं लोचं करोति, कृत्वाऽष्टमेन भक्तेन 'अपानकेन' जलरहितेन, विशाखानक्षत्रेण सह चन्द्रयोगमुपागते, एकं देवदूष्यमादाय त्रिभिः पुरुषशतैः सार्द्धं मुण्डो भूत्वा 'अगारात्' गृहान्निष्क्रम्य अनगारितां प्रव्रजितः। ततः कोपकटसन्निवेशे धन्यनामगृहस्थगृहे परमान्नेन प्रथमपारणकं जातं, पञ्चदिव्यानि च सञ्जातानि।

१६२-पार्श्वोऽर्हन् पुरुषादानीयस्त्र्यशीतिरात्रिदिवसान् यावन्नित्यं व्युत्सृष्टकायस्त्यक्तदेहस्सन् ये केचन उपसर्गा उत्पद्यन्ते, तद्यथा-'दिव्या' देवकृता वा मानुष्या वा तैर्यग्योनिका वा अनुलोमा वा प्रतिलोमा वा, तानुत्पन्नान् सम्यक् सहते क्षमते तितिक्षते अध्यासयति च। तत्र देवकृतोपसर्गः कठतापसजीवदेवकृतो यथा—

प्रव्रज्यानन्तरमेकदा विहरन् कस्याश्चिन्नगर्या आसन्ने तापसाश्रमे कूपसमीपे—

"स तत्रास्थाद्धातुकीद्रु-मूले प्रतिमया निशि। इतश्च कठजीवोऽपि, प्राप्तो मेघकुमारताम् ॥१॥ विद्युन्[मेघ]माल्यभिधोऽचाली-त्तेन देशेन दैवतः। प्रेक्ष्य पार्श्वप्रभुं कोपा-दुपद्रोतुं प्रचक्रमे ॥ २ ॥ सिंहवृश्चिकसर्पाद्यै-रप्यक्षुब्धहृदः प्रभोः। वृष्टिं कर्त्तुं प्रवृत्तेऽस्मिन्, नासाग्रं जलमाययौ ॥ ३ ॥ अत्र क्षणे च सञ्जाता-सनकम्पः समा-

गयौ । धरणेन्द्रः सदेवीकः, प्रभोरन्ते गुरुत्वरः ॥ ४ ॥ ऊर्ध्वंमुल्लामयाश्चक्रे–ऽधस्तात्कुण्डलिकाकृतिः । धरणेन्द्रः प्रभुं मूर्ध्नि, फणाच्छत्रावृतं व्यधात् ॥ ५ ॥ निर्भर्त्स्य त्रासितो दूरं, दुरात्मा कठवारिदः । विमुक्तो धरणेन्द्रेण, स प्रभोः शरणं श्रितः ॥६॥ कृतं धरणपत्नीभिः, सङ्गीतं पुरतः प्रभोः । पुनस्तुल्यमना जज्ञे, द्वयोरप्युपरि प्रभुः॥७॥"

कठजीवासुरोऽपि प्रभुशरणं प्रपद्य क्षमयित्वा च स्वापराधं दशभविकवैरवियुक्तो जातः, भवदशकं चेदं—

"भ्रातरावरविन्दस्य, नरेशस्य पुरोहितौ । कमठो मरुभूतिश्च +, कुर्कुटोरगकुञ्जरौ × ॥ १ ॥ पञ्चमे नरके पूर्वः, सहस्रारे सुरः परः । फणी किरणवेगाख्यो,* विद्याधरधराधवः ॥ २ ॥ पञ्चमे नरके पूर्वो–ऽच्युतकल्पे सुरः परः । भिल्लः प्रत्यगविदेहेषु, वज्रनाभधराधिपः † ॥३॥ सप्तमे नरके पूर्वो, मध्यमग्रैवेयके परः । पञ्चास्यः प्राग्विदेहेषु, सुवर्णबाहुचक्र्यपि § ॥४॥ चतुर्थे नरके पूर्वः, प्राणते त्रिदशोऽपरः । कठोऽर्हंश्च दशेत्युक्ता, भवाः कमठ-पार्श्वयोः ॥ ५ ॥ भवे त्वेकादशे मेघ–कुमारः कमठः शठः । कृत्वा पार्श्वप्रभोर्वृष्टि–कष्टं वैरोज्झितोऽजनि ॥ ६ ॥"

एवं च छाद्मस्थ्येन विहरतः प्रभोः कलिकुण्ड–कुर्कुटेश्वरादितीर्थस्थापना जाता ।

---

+ कमठोऽनाचारीति ज्ञात्वा राज्ञा निर्विषयीकृतस्तापसीभूतो वन्दनार्थमागतं मरुभूतिं शिलाप्रक्षेपेण जघान । × सर:पङ्के निमग्नं मरुभूतिजीवं कुञ्जरं कुर्कुटोरगीभूतः कमठजीवो दष्ट्वाऽमारयत् । * श्रमणीभूय विहरन् पुष्करवरद्वीपे वैताढ्यशैले कायोत्सर्गस्थो मरुभूतिजीवः किरणवेगाख्यो विद्याधरमुनिस्तत्रैव फणितयोत्पन्नेन कमठजीवेन दष्ट्वा मारितः । † श्रमणीभूय नारकानन्तरभव्या विहरन् ज्वलनगिरौ कायोत्सर्गस्थं वज्रनाभराजर्षिं तत्रैव भिल्लत्वेनोत्पन्नः कमठजीव एकेन शरेण जघान । § चक्रीत्वं प्रपाल्य श्रमणो विहरन्नटव्यां प्राप्तः स मुनिर्दर्शनमात्रादेवोत्पन्नकोपेन कमठजीवसिंहेन मारितः ।

तए णं से पासे भगवं अणगारे जाए, इरियासमिए भासासमिए, जाव अप्पाणं भावेमाणस्स तेसीइं राइंदियाइं विइक्कंताइं, चउरासीइमस्स राइंदिअस्स अंतरा वट्टमाणस्स जे से गिम्हाणं पढमे मासे पढमे पक्खे चित्तबहुले, तस्स णं चित्तबहुलस्स चउत्थीपक्खे णं पुवण्हकालसमयंसि धाइयपायवस्स अहे छट्ठे णं भत्तेणं अपाणएणं विसाहाहिं नक्खत्तेणं जोगमुवागएणं झाणंतरिआए वट्टमाणस्स अणंते अणुत्तरे निव्वाघाए निरावरणे, जाव केवलवरनाणदंसणे समुप्पन्ने, जाव जाणमाणे पासमाणे विहरइ ॥ १६३ ॥

पासस्स णं अरहओ पुरिसादाणीयस्स अट्ठ गणा अट्ठ गणहरा हुत्था, तं जहा-सुभे य अज्जघोसे य, वसिट्ठे बंभयारि य । सोमे सिरिहरे चेव, वीरभद्दे जसे वि य ॥ १ ॥ १६४ ॥

---

१६३-ततः स पार्श्वो भगवान् अनगारो जातः, ईर्यायां समितः भाषायां समितः, यावदात्मानं भावयतः त्र्यशीतिरात्रिदिवसा व्यतिक्रान्ताः, चतुरशीतितमस्य रात्रिदिवसस्य अन्तरा वर्त्तमानस्य योऽसौ ग्रीष्मस्य प्रथमो मासः प्रथमः पक्षश्चैत्रबहुलः, तस्य चैत्रबहुलस्य चतुर्थीदिवसे पूर्वाह्णकालसमये-प्रथमप्रहरे धातकीपादपस्याधः षष्ठेन भक्तेन अपानकेन विशाखानक्षत्रेण सह चन्द्रयोगमुपागते सति ध्यानान्तरिकायां-शुक्लध्यानस्याद्यभेदद्वये वर्त्तमानस्य अनन्तेऽनुत्तरे निर्व्याघाते निरावरणे यावत्केवलवरज्ञानदर्शने समुत्पन्ने, यावत्ताभ्यां सर्वजीवानां सर्वभावान् जानन् पश्यंश्च विहरति ।

१६४-पार्श्वस्य अर्हतः पुरुषादानीयस्याष्टौ गणा अष्टौ गणधराश्चाभवन्, तत्र एकवाचनिका यतिसमूहा गणास्तन्नायकाः सूरयो गणधराः, तेऽष्टौ, "आवश्यकादौ तु दश, तदिह द्वावल्पायुष्कत्वान्नोक्तौ इत्यनुमीयते" इति कल्पटिप्पनके । तद्यथा-शुभः आर्यघोषो वशिष्ठो ब्रह्मचारी सोमः श्रीधरो वीरभद्रो यशस्वी च ।

पासस्स णं अरहओ पुरिसादाणीयस्स अज्जदिन्नपामुक्खाओ सोलस समणसाहस्सीओ उक्कोसिआ समणसंपया हुत्था ॥ १६५ ॥

पासस्स णं अरहओ पुरिसादाणीयस्स पुप्फचूलापामुक्खाओ अट्ठत्तीसं अज्जियासाहस्सीओ उक्कोस्सिया अज्जियासंपया हुत्था ॥ १६६ ॥

पासस्स० सुव्वयपामुक्खाणं समणोवासगाणं एगा सयसाहस्सी चउसट्ठिं च सहस्सा उक्कोसिया समणोवासगाणं संपया हुत्था ॥ १६७ ॥

पासस्स० सुनंदापामुक्खाणं समणोवासियाणं तिण्णि सयसाहस्सीओ सत्तावीसं च सहस्सा उक्कोसिया समणोवासियाणं संपया हुत्था

पासस्स० अद्धट्ठसया चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं सव्वक्खर० जाव चउद्दसपुव्वीणं संपया हुत्था ॥ १६९ ॥

पासस्स० चउद्दससया ओहिनाणीणं, दससया केवलनाणीणं, इक्कारससया वेउव्वियाणं, छस्सया रिउमईणं, दससमणसया सिद्धा,

---

१६५–पार्श्वस्य अर्हतः पुरुषादानीयस्य आर्यदत्तप्रमुखाणि षोडशश्रमणसहस्राणि, उत्कृष्टा श्रमणसम्पदाऽभ०।

१६६–पार्श्वस्यार्हतः पुरुषादानीयस्य पुष्पचूलाप्रमुखाणि अष्टत्रिंशदार्यिकासहस्राणि, उत्कृष्टा आर्यिकासंपदा०।

१६७–पार्श्वस्य अर्हतः पुरुषादानीयस्य सुव्रतप्रमुखाणां श्रमणोपासकानां एकं शतसहस्रं चतुःषष्टिसहस्राणि च, एतावत्युत्कृष्टा श्रमणोपासकानां सम्पदाऽभवत्।

१६८–पार्श्वस्य अर्हतः पुरुषादानीयस्य सुनन्दाप्रमुखाणां श्रमणोपासिकानां त्रीणि शतसहस्राणि सप्तविंशतिसहस्राणि च, एतावत्युत्कृष्टा श्रमणोपासिकानां सम्पदाऽभवत्।

१६९–पार्श्वस्य अर्हतः पुरुषादानीयस्य अध्युष्ट(सार्द्धत्रि)शतानि चतुर्दशपूर्विणां अजिनानामपि जिनसङ्काशानां सर्वाक्षरसन्निपातिनां यावच्चतुर्दशपूर्विणां सम्पदाऽभवत्।

१७०–पार्श्वस्य अर्हतः पुरुषादानीयस्य चतुर्दशशतान्यवधिज्ञानिनां, दशशतानि केवलज्ञानिनां, एकादश-

वीसं अज्जियासया सिद्धा, अद्धट्ठमसया विउलमईणं, छस्सया वाईणं, बारससया अणुत्तरोववाइयाणं ॥ १७० ॥

पासस्स णं अरहओ पुरिसादाणीअस्स दुविहा अंतगडभूमी हुत्था, तं जहा—जुगंतगडभूमी परियायंतगडभूमी य, जाव चउत्थाओ पुरिसजुगाओ जुगंतगडभूमी, तिवासपरिआए अंतमकासी ॥ १७१ ॥

ते णं काले णं ते णं समए णं पासे अरहा पुरिसादाणीए तीसं वासाइं अगारवासमज्झे वसित्ता, तेसीइं राइंदिआइं छउमत्थपरिआयं पाउणित्ता, देसूणाइं सत्तरिवासाइं केवलिपरिआयं पाउणित्ता, पडिपुण्णाइं सत्तरिवासाइं सामण्णपरिआयं पाउणित्ता, एक्कं वाससयं सव्वाउयं पालइत्ता, खीणे वेयणिज्जाउयनामगुत्ते, इमीसे ओसप्पिणीए दूसमसुसमाए समाए बहुविइक्कंताए, जे से वासाणं पढमे मासे

---

शतानि वैक्रियलब्धिमतां, षट्शतानि ऋजुमतीनां, दश श्रमणशतानि सिद्धानि, विंशतिः आर्यिकाशतानि सिद्धानि, अर्द्धाष्टमशतानि विपुलमतीनां, षट्शतानि वादिनां, द्वादशशतान्यनुत्तरोपपातिकानां सम्पदाऽभवत्।

१७१—पार्श्वस्य अर्हतः पुरुषादानीयस्य द्विविधा अन्तकृद्भूमिरभवत्, तद्यथा—युगान्तकृद्भूमिः पर्यायान्तकृद्भूमिश्च, यावच्चतुर्थं पुरुषयुगं युगान्तकृद्भूमिः, श्रीपार्श्वादारभ्य चतुर्थं पट्टधरं यावत्सिद्धिमार्गो वहमानोऽभूत्, 'त्रिवर्षपर्याये' केवलोत्पत्तेस्त्रिषु वर्षेष्वतीतेषु 'अन्तमकार्षीत्' कश्चिन्मोक्षं गतः सा पर्यायान्तकृद्भूमिः।

१७२—तस्मिन् काले तस्मिन् समये पार्श्वोऽर्हन् पुरुषादानीयस्त्रिंशद्वर्षाणि अगारवासमध्ये उषित्वा त्र्यशीतिरात्रिदिवसान् छद्मस्थपर्यायं पालयित्वा, देशोनानि सप्ततिवर्षाणि केवलिपर्यायं पालयित्वा, प्रतिपूर्णानि सप्ततिवर्षाणि श्रामण्यपर्यायं पालयित्वा, एकं वर्षशतं सर्वायुः पालयित्वा, क्षीणेषु सत्सु वेदनीयायुर्नामगोत्रेषु कर्मसु, अस्यामवसर्पिण्यां दुष्षमसुषमायां समायां—चतुर्थेऽरके बहुव्यतिक्रान्ते सति योऽसौ वर्षाकालस्य प्रथमो-

दुंचे पक्खे सावणसुद्धे, तस्स णं सावणसुद्धस्स अट्ठमीपक्खे णं, उप्पिं सम्मेअसेलसिहरंसि, अप्पचउत्तीसइमे, मासिएणं भत्तेणं अपाणएणं, विसाहाहिं नक्खत्तेणं जोगमुवागएणं, पुव्वण्हकालसमयंसि, वग्घारियपाणी कालगए विइक्कंते जाव सव्वदुक्खप्पहीणे ॥ १७२ ॥

पासस्स णं अरहओ पुरिसादाणीयस्स जाव सव्वदुक्खप्पहीणस्स दुवालस वाससयाइं विइक्कंताइं, तेरसमस्स य वाससयस्स अयं तीसइमे संवच्छरे काले गच्छइ ॥ १७३ ॥

ते णं काले णं ते णं समए णं अरहा अरिट्ठनेमी पंचचित्ते हुत्था, तं जहा-चित्ताहिं चुए, चइत्ता०, तहेव उक्खेवो, जाव चित्ताहिं परिनिव्वुए ॥

---

मासो द्वितीयः पक्षः श्रावणशुद्धः, तस्य श्रावणशुद्धस्याष्टमीदिवसे उपरि सम्मेताख्यशैलशिखरस्य, आत्मचतुस्त्रिंशत्तमः, त्रयस्त्रिंशन्मुनिभिः सममित्यर्थः, मासिकेन भक्तेनापानकेन विशाखानक्षत्रेण सह चन्द्रयोगमुपागते सति पूर्वाह्णकालसमये-दिवसाद्यप्रहरे "वग्घारियपाणी"त्ति कायोत्सर्गे स्थितत्वात्प्रलम्बितभुजद्वन्द्वो भगवान् कालगतो व्यतिक्रान्तः संसारात्, यावत्सर्वदुःखप्रहीणो जातः ।

१७३-पार्श्वस्य अर्हतः पुरुषादानीयस्य यावत्सर्वदुःखप्रहीणस्य द्वादश वर्षशतानि व्यतिक्रान्तानि, त्रयोदशमस्य च वर्षशतस्यायं त्रिंशत्तमः संवत्सरः कालो गच्छति। तत्र श्रीपार्श्वनिर्वाणात्सार्द्धे द्विवर्षशतेऽतिक्रान्ते श्रीवीरनिर्वाणमभूत्, ततश्चाशीत्यधिके नववर्षशतेऽतिक्रान्ते पुस्तकवाचना जाता, अतो युक्तमुक्तं 'त्रयोदशमस्य वर्षशतस्यायं त्रिंशत्तमः संवत्सरः कालो गच्छती'ति । इति श्रीपार्श्वनाथचरित्रं समाप्तम् ॥ २३ ॥

१७४-अथ श्रीनेमिनाथचरित्रं जघन्यादिवाचनाभिराह-तस्मिन् काले तस्मिन्समये अर्हन् अरिष्टनेमिः पञ्चचित्रोऽभवत्, पञ्चकल्याणकानि चित्रासु जातानीत्यर्थः, तद्यथा-चित्रायां च्युतो देवलोकात्, च्युत्वा गर्भं

ते णं काले णं ते णं समए णं अरहा अरिट्ठनेमी जे से वासाणं चउत्थे मासे सत्तमे पक्खे कत्तियबहुले, तस्स णं कत्तियबहुलस्स बारसीपक्खे णं अपराजिआओ महाविमाणाओ बत्तीससागरोवमट्ठिआओ अणंतरं चयं चइत्ता इहेव जंबुद्दीवे दीवे भारहे वासे सोरियपुरे नयरे समुद्दविजयस्स रण्णो भारिआए सिवाए देवीए पुव्वरत्तावरत्तकालसमयंसि जाव चित्ताहिं गब्भं वक्कंते, सव्वं तहेव सुमिणदंसण-दविणसंहरणाइअं इत्थ भाणियव्वं ॥ १७५ ॥

ते णं काले णं ते णं समए णं अरहा अरिट्ठनेमी जे से वासाणं पढमे मासे दुच्चे पक्खे सावणसुद्धे, तस्स णं सावणसुद्धस्स पंचमीपक्खेणं नवण्हं मासाणं बहुपडिपुण्णाणं, जाव चित्ताहिं नक्खत्तेणं जोगमुवागएणं आरोग्गा आरोग्गं दारयं पयाया। जम्मणं समुद्द-

---

व्युत्क्रान्तः, 'तथैव' वीरचरित्रोक्तप्रकारेण "उक्खेवो"इति आलापकोच्चारणं, यावच्चित्रायां परिनिर्वृतः।

१७५–तस्मिन् काले तस्मिन्समये अर्हन् अरिष्टनेमिर्योऽसौ वर्षाकालस्य चतुर्थो मासः सप्तमः पक्षः कार्त्तिकबहुलः, तस्य कार्त्तिकबहुलस्य द्वादशीदिवसे अपराजिताख्यान् महाविमानाद् द्वात्रिंशत्सागरोपमस्थितिकाद् अनन्तरं "चयं" दिव्यदेहं त्यक्त्वा अस्मिन्नेव जम्बूद्वीपाभिधे द्वीपे भारते वर्षे सौर्यपुरे नगरे समुद्रविजयस्य राज्ञो भार्यायाः शिवाया देव्याः कुक्षौ पूर्वरात्रापररात्रकालसमये यावच्चित्रायां गर्भे व्युत्क्रान्तः-गर्भत्वेनोत्पन्नः, सर्वं तथैव स्वप्नदर्शनं पितृगेहे द्रवीणसंहरणादिवर्णनमत्र भणितव्यम्।

१७६–तस्मिन् काले तस्मिन् समये अर्हन् अरिष्टनेमिर्योऽसौ वर्षाकालस्य प्रथमो मासो द्वितीयः पक्षः श्रावणशुद्धः, तस्य श्रावणशुद्धस्य पञ्चमीदिवसे नवसु मासेषु बहुप्रतिपूर्णेषु सत्सु यावच्चित्रानक्षत्रेण चन्द्रयोगमुपागते सति आरोग्या शिवादेवी आरोग्यं दारकं प्रजाता। जन्मोत्सवः समुद्रविजयाभिलापेन ज्ञातव्यः, यावन्नामकरणा-

रिट्ठरयणमयं नेमिं, आन तं होउ णं कुमारे अरिट्ठनेमी नामेणं ॥ १७८ ॥

यस्मात् गर्भस्थे भगवति माता चतुर्दशस्वप्नदर्शनानन्तरं रिष्टरत्नमयं नेमि-चक्रधारां पञ्चदशे स्वप्नेऽद्राक्षीत्त-स्मात् अकारस्यामङ्गलपरिहारार्थत्वाच्च भवत्वरिष्टनेमिकुमार इति नाम्ना। तत्र कुमारस्त्वपरिणीतत्वात्, तच्चैवं—

अन्यदा यौवनाभिमुखं श्रीनेमिमालोक्य माता शिवादेवी समवदत्–'वत्स! अनुमन्यस्व पाणिग्रहणं, पूरय चास्मन्मनोरथान्'। स्वामी तु 'योग्यां कन्यामवाप्य परिणेष्ये' इति प्रत्युत्तरयत्। ततोऽन्यदा कौतुकरहितोऽपि प्रभुः समवयस्कैर्मित्रैः प्रेरितः क्रीडमानः कृष्णायुधशालामुपागमत्। तत्र कौतुकोत्सुकैर्मित्रैर्विज्ञप्तोऽङ्गुल्यग्रे कुलाल-चक्रवत्सुदर्शनचक्रमभ्रामयत्, शार्ङ्गं धनुर्मृणालनालवन्नामितवान्, कौमोदकीं गदां यष्टिवदुत्पाटितवान्, शङ्खं च पाञ्चजन्यं स्वमुखेनापूरितवान्, तेन चाखिलं नगरं बधिरितमिवाभवत्, गजादयोऽप्युन्मूलितालानाः प्रणेशुः।

तं च तादृशं शब्दं निशम्योत्पन्नः कोऽपि राज्यलिप्सुर्वैरीति चिन्ताकुलः कृष्णस्त्वरितमायुधशालायामागतः, दृष्ट्वा च नेमिं चकितः सन्—

"आवाभ्यां वीक्ष्यते नेमे!, स्वबलं हरिरित्यवक्। ततो नेमिहरी मल्ला-क्षाटके जग्मतुर्द्रुतम् ॥ १ ॥"

श्रीनेमिराह–"अनुचितं ननु भूलुठनादिकं, सपदि बान्धव! युद्धमिहावयोः।"

"बलपरीक्षणकृद् भुजवालनं, भवतु नान्यरणः खलु युज्यते ॥ १ ॥" (द्रुत०)

द्वाभ्यामपि स्वीकृतं, प्रसारितस्तावद्धरिणा स्वस्य बाहुः, वालितश्च नेमिना कमलनालवत् परं—

"शाखानिभे नेमिजिनस्य बाहौ, ततः स शाखामृग(कपि)वद्विलग्नः।"
"चक्रे निजं नाम हरियथार्थ-मुद्यद्विषादद्विगुणासितास्यः ॥ १ ॥"

ततो विषण्णः कृष्णो 'मम राज्यमेष सुखेन ग्रहीष्यती'ति चिन्तातुरश्चिन्तयामास—

"क्लिश्यन्ते केवलं स्थूलाः, सुधीस्तु फलमश्नुते। ममन्थ शङ्करः सिन्धुं, रत्नान्यापुर्दिवौकसः ॥ १ ॥"

ततः 'किं विधास्यावः ?, नेमिस्तु राज्यलिप्सुर्बलवाँश्चापि' इति बलभद्रेण यावदालोचयति तावद्देवगीरभूत्—

"यो राज्यं न समीहते गजघटाटङ्कारसंराजितं, नैवाकाङ्क्षति चारुचन्द्रवदनां लीलावतीं योऽङ्गनाम्।"
"यः संसारमहासमुद्रमथने भावी च मन्थाचलः, सोऽयं नेमिजिनेश्वरो विजयते योगीन्द्रचूडामणिः ॥ १ ॥"

ततो निश्चिन्तोऽपि विशेषनिश्चयार्थं जलकेलिचिकीर्षया सान्तःपुरो नेमिना सहैकमनुपमं सरः प्राप्तस्तत्र च—

"प्रणयतः परिगृह्य करे जिनं, हरिरवेशयदाशु सरोऽन्तरे। तदनु शीघ्रमसिञ्चत नेमिनं, कनकशृङ्गजलैः स च तं तथा [॥ १ ॥"

तथा रुक्मिणीप्रमुखं गोपिकागणमपि संज्ञितवान्, यदुत-अयं नेमिर्निःशङ्कं क्रीडया करपीडनाभिमुखो कार्यः, ततस्ता अपि—

"काश्चित्केसरसारनीरनिकरैराच्छोटयन्ति प्रभुं, काश्चिद्बन्धुरपुष्पकन्दुकभरैर्निघ्नन्ति वक्षःस्थले।"
"काश्चित्तीक्ष्णकटाक्षलक्षविशिखैर्विध्यन्ति नर्मोक्तिभिः,काश्चित्कामकलाविलासकुशला विस्मापयाञ्चक्रिरे॥१॥"

तथा-"तावत्यः प्रमदाः सुगन्धिपयसा स्वर्णादिशृङ्गीर्भृशं, भृत्वा तज्जलनिर्झरैः पृथुतरैः कर्तुं प्रभुं व्याकुलम्।"

"प्रावर्त्तन्त मिथो हसन्ति सततं क्रीडोल्लसन्मानसा—स्तावद्व्योमनि देवगीरिति समुद्भूता श्रुता चाखिलैः ॥२॥"
"मुग्धाः स्थ प्रमदाः ! यतोऽमरगिरौ गीर्वाणनाथैश्चतुः—षष्ट्या योजनमानवक्त्रकुहरैः कुम्भैः सहस्राधिकैः ।"
"बाल्येऽपि स्नपितो य एष भगवान्नाभून्मनागाकुलः, कर्तुं तस्य सुयत्नतोऽपि किमहो !! युष्माभिरीशिष्यते ? ॥३॥"

ततो नेमिरपि हरिं ताश्च सर्वा जलैराच्छोटयति, कमलपुष्पकन्दुकैश्च ताडयति स्म । इत्येवं सविस्तरं जलकेलिं विधाय तटमागत्य नेमिं हेमसिंहासने निवेश्य सर्वा अपि गोप्यः परिवेष्ट्य स्थिताः ।

ततो रुक्मिणी जगौ—"निर्वाहकातरतयोद्वहसे न यत्त्वं, कन्यां तदेतदविचारितमेव नेमे ! ।"
"भ्राता तवास्ति विदितः सुतरां समर्थो, द्वात्रिंशदुन्मितसहस्रवधूर्विवोढा ॥ १ ॥"

सत्यभामाऽप्युवाच—"ऋषभमुख्यजिनाः करपीडनं, विदधिरे दधिरे च महीशताम्। बुभुजिरे विषयांश्च बहून्सुतान्, सुषुविरे शिवमप्यथ लेभिरे ॥२॥ त्वमसि ? किन्तु नवोऽद्य शिवङ्गमी, भृशमरिष्टकुमार ! विचारय। कलय देवर ! चाकगृहस्थतां, रचय बन्धुमनस्सु च सुस्थताम् ॥३॥ अथ जगाद च जाम्बवती जवात्, शृणु पुरा हरिवंशविभूषणम् । स मुनिसुव्रततीर्थपतिर्गृही, शिवमगादिह जातसुतोऽपि हि ॥ ४ ॥ पद्मावतीति समुवाच विना वधूटीं, शोभा न काचन नरस्य भवत्यवश्यम् । नो केवलस्य पुरुषस्य करोति कोऽपि, विश्वासमेष विट एव भवेदभार्यः ॥ ५ ॥"

गन्धारी जगौ—"सज्जन्ययात्रा-शुभसङ्घसार्थ-पर्वोत्सवा वेश्मविवाहकृत्यम् ।"
"उद्यानिकापुङ्खणपर्षदश्च, शोभन्त एतानि विनाङ्गनां नो ॥ ६ ॥"

लक्ष्मणाऽवोचत्–"स्नानादिसर्वाङ्गपरिष्क्रियायां, विचक्षणः प्रीतिरसाभिरामः।"
"विस्रम्भपात्रं विधुरे सहायः, कोऽन्यो भवेन्नूनमृते प्रियायाः ? ॥ ७ ॥"
सुसीमाऽवादीत्–"विना प्रियां को गृहमागतानां, प्राघूर्णकानां मुनिसत्तमानाम्।"
"करोति ? पूजाप्रतिपत्तिमन्यः, कथं च शोभां लभते ? मनुष्यः ॥ ८ ॥"

एवमन्यासामपि गोपिकानां वचोयुक्त्या यदुनामग्रहाच्च मौनावलम्बिनमपि स्मिताननं जिनमालोक्य "अनिषिद्धमनुमतं" इति न्यायात् 'स्वीकृतं २ पाणिग्रहणं नेमिने'ति बाढमुद्घोषितं ताभिः, प्रससार च तथैव जनोक्तिः, ततः कृष्णेनोग्रसेनसुता राजीमती मार्गिता। लग्नार्थं पृष्टश्च क्रोष्टुकिनामा निमित्तज्ञः प्राह—

"वर्षासु शुभकार्याणि, नान्यान्यपि समाचरेत्। गृहिणां मुख्यकार्यस्य, विवाहस्य तु का कथा ? ॥ १ ॥"
"समुद्रस्तं बभाषेऽथ, कालक्षेपोऽत्र नार्हति। नेमिः कथञ्चित्कृष्णेन, विवाहाय प्रवर्त्तितः ॥ २ ॥"
"मा भूद्विवाहप्रत्यूहो, नेदीयस्तद्दिनं वद। श्रावणे मासि तेनोक्ता, ततः षष्ठी समुज्ज्वला ॥ ३ ॥"

ततो द्वयोरपि स्थानयोर्विहिता विवाहसामग्री, आसन्ने च लग्नसमये चलितः श्रीनेमिकुमारः स्फारशृङ्गारप्राग्भारः समुद्रविजयाद्यनेकनरेन्द्रपरिवृतः शिवादेव्यादिप्रमदाजनगीयमानधवमङ्गलो रथारूढः पाणिग्रहणाय। व्रजंश्चाग्रतो वीक्ष्यापृच्छत् सारथिं 'कस्येदं कृतमङ्गलसारं धवलमन्दिरं ?' इति। सारथिरङ्गुल्यग्रेण दर्शयन् 'तव श्वशुरस्योग्रसेनस्यायं प्रासादः, इमे च गवाक्षस्थे तव भार्याया राजीमत्याः सख्यौ चन्द्रानना-मृगलोचना-

[ ॥१॥"

तत्र कविरुत्प्रेक्षयति, यत्स प्रभुं विज्ञपयति, यदुत—

× "मापहरसु मापहरसु, एअं मह हिययहारिणिं हरिणिं। सामी! अम्हमरणा वि, दुस्सहो पिययमाविरहो ॥१॥"

हरिणी नेमिमुखमालोक्य हरिणं प्रति ब्रूते—+"एसो पसन्नवयणो, तिहुअणसामी अकारणं बंधू। ता विण्णवेसु वल्लह!, रक्खत्थं सव्वजीवाणं ॥ २ ॥" एवं भार्याप्रेरितो हरिणोऽपि नेमिं ब्रूते—"णिज्झरणनीरपाणं, अरण्ण-तणभक्खणं च वणवासो। अम्हाण निरवराहाण, जीविअं रक्ख रक्ख पहो! ॥ ३ ॥"

एवं च सर्वेऽपि पशवः प्रभुं विज्ञपयन्ति। तावत्स्वामी बभाषे—'भो भोः पशुपालकाः! मुञ्चत मुञ्चत इमान् पशून्, नाहं विवाहिष्ये'। तत्कालमेव मुक्ताः पशुपालकैः पशवः। सारथिनाऽपि निवर्त्तितो रथः। अत्र कविः—

"हेतुरिन्दोः कलङ्के यो, विरहे रामसीतयोः। नेमे राजीमतीत्यागे, कुरङ्गः सत्यमेव सः ॥ १ ॥"

समुद्रविजय-शिवादेवीप्रमुखाः स्वजनाः शीघ्रमेव रथं स्खलयन्ति, शिवा च सबाष्पमब्रवीत्—

* "पत्थेमि जणणिवल्लह!, वच्छ! तुमं पढमपत्थणं किंपि। काऊण पाणिगहणं, मह दंसे नियवहूवयणं ॥१॥"

नेमिराट्—"मुञ्चाऽऽग्रहमिमं मात–र्मानुषीषु न मे मनः। मुक्तिस्त्रीसङ्गमोत्कण्ठ–मकुण्ठमवतिष्ठते ॥ २ ॥"

---

× माऽपहर माऽपहर, एतां मम हृदयहारिणीं हरिणीं। स्वामिन्! अस्मन्मरणादपि, दुस्सहः प्रियतमाविरहः ॥ १ ॥

+ एषः प्रसन्नवदनः, त्रिभुवनस्वाम्यकारणो बन्धुः। तस्माद्विज्ञपय वल्लभ!, रक्षार्थं सर्वजीवानाम् ॥ २ ॥ निर्झरणनीरपानं, अरण्यतृणभक्षणं च वनवासः। अस्माकं निरपराधानां, जीवितं रक्ष रक्ष प्रभो! ॥ ३ ॥ * प्रार्थयामि जननीवल्लभ!, वत्स! त्वां प्रथमप्रार्थना कामपि। कृत्वा पाणिग्रहणं, मम दर्शय निजवधूवदनम् ॥ १ ॥

नोदमुक्तं—'भो राजीमति ! वरः प्रथमं गौरो विलोक्यते, अपरे गुणास्तु प्रस्तावे तत्संस्तवे ज्ञायन्ते, तद्गौरत्वं त्वस्य कज्जलानुकारमेव दृश्यते, ततो राजीमती सासूयं प्रत्याह—सख्यौ ! अद्य यावत् 'युवां चतुरे' इति भ्रमो मेऽभवत् स साम्प्रतं भग्नः, यतो भवतीभ्यां सकलगुणकारणं भूषणमपि श्यामत्वं दूषणतया निरूपितं, शृणुतां तावत्सावधानीभूय भवन्त्यौ श्यामत्वे श्यामवस्त्वाश्रयणेऽपि च गुणान् केवलगौरत्वेऽपगुणाँश्च, § इति कृष्णत्वे गुणाः। तथा हि—*"भू-चित्तवल्ली-अगुरु, कत्थूरी-घण-कणीणिगा-केसा। कसवट्ट-मसी-रयणी, कसिणा एए अणग्घफला १ §
"कप्पूरे अंगारो, चंदे चिंधं कणीणिगा नयणे। भुज्जे मरीअं चित्ते, रेहा कसिणा वि गुणहेऊ ॥२॥" इति कृष्णाश्रये गुणाः।
"खारं लवणं दहणं, हिमं च अइगोरविग्गहो रोगी। परवसगुणो अ चुण्णो, केवलगोरत्तणेऽवगुणा ॥ ३ ॥"

एवं च तासामन्योऽन्यं जल्पे जायमाने पशूनामार्त्तस्वरं श्रुत्वा श्रीनेमिः साक्षेपं प्राह—'सारथे ! कोऽयं दारुणः स्वरः ?'। सारथिः प्राह—'युष्मद्विवाहे भोजनार्थमेकत्रीकृतानां पशूनामयं स्वरः'। ततः प्रभुश्चिन्तयति स्म—धिगिमं विवाहोत्सवं, यत्रानुत्सवोऽमीषां जन्तूनां। इतश्च † "हल्ली सहिओ ! किं मे दाहिणं चक्खू परिप्फुरइ ?"त्ति जल्पन्तीं राजीमतीं प्रति सख्यौ 'प्रतिहतमशेषममङ्गलं ते' इत्युक्त्वा थुत्थुत्कारं कुरुतः। नेमिस्तु प्राह—'सारथे ! रथमितो निवर्त्तय, नाहं परिणेष्ये'। अत्रान्तरे प्रभुं पश्यन्नेको हरिणः स्वग्रीवां हरिणीग्रीवोपरि कृत्वा स्थित-

---

* भुश्चित्रवल्ल्यगुरु, कस्तुरी घनः कनीनिका केशाः। कषपट्ट-मषी रजनी, कृष्णा एतेऽनर्घफलाः॥ कर्पूरेऽङ्गारश्चन्द्रे चिह्नं कनीनिका नयने। भोज्ये मरीचं चित्रे, रेखा कृष्णा अपि गुणहेतवः ॥२॥ क्षार लवणं दहनं, हिमं च अतिगौरविग्रहो रोगी। परवशगुणश्च चूर्णः, केवलगौरत्वेऽवगुणा. ॥ † हले सख्यौ ! किं मे दक्षिणं चक्षुः परिस्फुरति ?।

[ ॥१॥"

अत्र कविरुत्प्रेक्षयति, यत्स प्रभुं विज्ञपयति, यदुत—

× "मा पहरसु मा पहरसु, एअं मह हियय हारिणिं हरिणिं। सामी ! अम्हमरणा वि, दुस्सहो पियय माविरहो

"हरिणी नेमिमुखमालोक्य हरिणं प्रति ब्रूते—+ "एसो पसन्नवयणो, तिहुअणसामी अकारणं बंधू। ता विण्णवेसु वल्लह !, रक्खत्थं सव्वजीवाणं ॥ २ ॥" एवं भार्याप्रेरितो हरिणोऽपि नेमिं ब्रूते—"णिज्झरणनीरपाणं, अरण्णतणभक्खणं च वणवासो। अम्हाण निरवराहाण, जीविअं रक्ख रक्ख पहो ! ॥ ३ ॥"

एवं च सर्वेऽपि पशवः प्रभुं विज्ञपयन्ति। तावत्स्वामी बभाषे—'भो भोः पशुपालकाः ! मुञ्चत मुञ्चत इमान् पशून्, नाहं विवाहिष्ये'। तत्कालमेव मुक्ताः पशुपालकैः पशवः। सारथिनाऽपि निवर्त्तितो रथः। अत्र कविः—

"हेतुरिन्दोः कलङ्के यो, विरहे रामसीतयोः। नेमे राजीमतीत्यागे, कुरङ्गः सत्यमेव सः ॥ १ ॥"

समुद्रविजय-शिवादेवीप्रमुखाः स्वजनाः शीघ्रमेव रथं स्खलयन्ति, शिवा च सबाष्पमब्रवीत्—

* "पत्थेमि जणणिवल्लह !, वच्छ ! तुमं पढमपत्थणं किंपि। काऊण पाणिगहणं, मह दंसे नियवहूवयणं ॥१॥"

नेमिराट्—"मुञ्चाऽऽग्रहमिमं मात—र्मानुषीषु न मे मनः। मुक्तिस्त्रीसङ्गमोत्कण्ठ—मकुण्ठमवतिष्ठते ॥ २ ॥"

---

× माऽऽप्रहर माऽऽप्रहर, एतां मम हृदयहारिणीं हरिणीं। स्वामिन् ! अस्मन्मरणादपि, दुस्सहः प्रियतमाविरहः ॥ १ ॥

+ एष प्रसन्नवदनः, त्रिभुवनस्वाम्यकारणो बन्धुः। तस्माद्विज्ञपय वल्लभ !, रक्षार्थं सर्वजीवानाम् ॥ २ ॥ निर्झरणनीरपानं, अरण्यतृणभक्षणं च वनवासः। अस्माकं निरपराधानां, जीवितं रक्ष रक्ष प्रभो ! ॥ ३ ॥ * प्रार्थयामि जननीवल्लभ !, वत्स ! त्वां प्रथमप्रार्थनां कामपि। कृत्वा पाणिग्रहणं, मम दर्शय निजवधूवदनम् ॥ १ ॥

यतः—"या रागिणि विरागिण्य-स्ताः स्त्रियः को निषेवते ? । अतोऽहं कामये मुक्तिं, या विरागिणि रागिणी ॥३॥"

इतश्च राजीमती—'हा !! दैव ! किमुपस्थितमेतत् ?' इत्युक्त्वा मूर्च्छिता, सखीभ्यां चन्दनादिशीतोपचारै-राश्वासिता कथमपि लब्धसंज्ञा साश्रुनयना तारस्वरेण प्राह—

+ "हा जायवकुलदिणयर !, हा निरुवमनाण ! हा जगसरण !। हा करुणायर ! सामी !, मं मुत्तूण कहं चलिओ ? ४"

"हा !! हियय ! धिट्ठ निट्ठुर, अज्ज वि निल्लज्ज ! जीविअं वहसि । अन्नत्थ बद्धराओ, जइ नाहो अत्तणो जाओ ॥५॥"

पुनर्निःश्वस्य सोपालम्भमाह—

× "जइ सयलसिद्धभुत्ताइ, मुत्तिगणिआइ धुत्त ! रत्तोऽसि । ता एवं परिणयणा-रंभेण विडंबिआ किमहं ? ॥६॥"

सख्यौ सरोषमाह—"* लोअपसिद्धी वत्तडी, सहिए ! इक्क सुणिज्ज । सरलं विरलं सामलं, चुक्किअ विही करिज्ज ॥७॥"

"पिम्मरहिअम्मि पिअसहि !, एअम्मि वि किं करेसि ? पिअभावं । पिम्मपरं किं पि वरं, अन्नयरं ते करिस्सामो ॥८॥"

राजीमती कर्णौ पिधायाह—हा !! किमेतदश्राव्यं श्रावयथ ?,

"§ जइ कह वि पच्छिमाए, उदयं पावेइ दिणयरो तह वि । मुत्तूण नेमिनाहं, करेमि नाहं वरं अन्नं ॥ ९ ॥"

+ हा यादवकुलदिनकर !, हा निरुपमज्ञान ! हा जगच्छरण !। हा करुणाकर ! स्वामिन् !, मां मुक्त्वा कथं चलितः ? ॥ ४ ॥ हा हृदय ! धृष्ट निष्ठुर, अद्यापि निर्लज्ज ! जीवितं वहसि । अन्यत्र बद्धरागो, यदि नाथ आत्मनो जात- ॥ ५ ॥ × यदि सकलसिद्धभुक्ताया, मुक्तिगणिकायां धूर्त ! रक्तोऽसि । तर्हि एवं परिणयनारम्भेण विडम्बिता किमहम् ? ॥६॥ * लोकप्रसिद्धा वार्त्ता, सखि ! एका श्रूयते । सरलं विरलं श्यामलं, विस्मृत्य विधिः कुर्यात् ॥७॥ प्रेमरहिते प्रियसखि !, एतस्मिन्नपि किं करोषि प्रियभावम् । प्रेमपर कमपि वरं, अन्यतरं ते करिष्यामः ॥८॥ § यदि कथमपि पश्चिमायां, उदयं प्राप्नोति दिनकरस्तथापि । मुक्त्वा नेमिनाथं, करोमि नाहं वरमन्यम् ॥९॥

...गता अरिट्ठनेमी दक्खे, जाव तिण्णि वाससयाइं कुमारे अगारवासमज्झे वसित्ता णं, पुणरवि लोगंतिएहिं जीअकप्पिएहिं देवेहिं०, तं

पुनरपि नेमिनमाह—"अतेच्छुरिच्छाभिकमेव दत्से, त्वं याचकेभ्यो गृहमागतेभ्यः ।"

"मयाऽभिगन्त्या जगतामधीश !, हस्तोऽपि हस्तोपरि नैव लब्धः ॥१०॥" अथ विरक्ता सती प्राह—

+ "जइ वि हु एअस्स करो, मज्झ करे नो अ आसि परिणयणे । तह वि सिरे मह सुचिअ, दिक्खासमए करो होही [॥ ११ ॥"

पुनः समुद्रविजयः सपरिकरो जगौ—

"नाभेयाद्याः कृतोद्वाहा, मुक्तिं जग्मुर्जिनेश्वराः । ततोऽप्युच्चैः पदं ते स्यात् ?, कुमार ! ब्रह्मचारिणः ॥ १२ ॥"

नेमिराह—हे तात ! क्षीणभोगकर्माऽहमस्मि,

किञ्च—"एकस्त्रीसङ्ग्रहेऽनन्त-जन्तुसङ्घातघातके । भवतां भवतान्तेऽस्मिन्, विवाहे कोऽयमाग्रहः ? ॥ १३ ॥"

अत्र कविः—"मन्ये स्त्रनाविरक्तः, परिणयनमिषेण नेमिरागत्य । राजीमतीं पूर्वभव-प्रेम्णा समकेतयन्मुक्त्यै ॥१४॥"

१७७—अर्हन् अरिष्टनेमिर्दक्षो, यावत्त्रीणि वर्षशतानि कुमारः सन् अगारवासमध्ये उषित्वा, पुनरपि लोकान्तिकैर्जीतकल्पिकैर्देवैर्दीक्षाऽवसरो ज्ञापितस्तद्यथा—

"जय निर्जित कन्दर्प !, जन्तुजाताभयप्रद ! । नित्योत्सवावतारार्थं, नाथ ! तीर्थं प्रवर्त्तय ॥ १ ॥"

एवं प्रभुं विज्ञप्य 'वार्षिकदानानन्तरं स्वामी त्रिभुवनमानन्दयिष्यती'त्युक्त्वा समुद्रविजयादींस्ते प्रोत्साह-

+ यद्यपि एतस्य करो, मम करे न आसीत्परिणयने । तथापि शिरसि मम स एव, दीक्षासमये करो भविष्यति ॥ ११ ॥

चेव सव्वं भाणिअव्वं, जाव दाणं दाइयाणं परिभाइत्ता जे से वासाणं पढमे मासे दुच्चे पक्खे सावणसुद्धे, तस्स णं सावणसुद्धस्स छट्ठीपक्खे णं पुव्वण्हकालसमयंसि उत्तरकुराए सीयाए सदेवमणुआसुराए परिसाए अणुगम्ममाणमग्गे, जाव वारवईए नयरीए मज्झंमज्झेणं निग्गच्छइ। निग्गच्छित्ता जेणेव रेवयए उज्जाणे, तेणेव उवागच्छइ। उवागच्छित्ता असोगवरपायवस्स अहे सीयं ठावेइ। ठावित्ता सीआओ पच्चोरुहइ। पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमुअइ। ओमुइत्ता सयमेव पंचमुट्ठियं लोअं करेइ। करित्ता छट्ठेणं भत्तेणं अपाणएणं चित्तानक्खत्तेणं जोगमुवागएणं एगं देवदूसमादाय एगेणं पुरिससहस्सेणं सद्धिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ १७७ ॥

अरहा णं अरिट्ठनेमी चउपन्नं राइंदियाइं निच्चं वोसट्ठकाए चियत्तदेहे, तं चेव सव्वं, जाव पणपन्नगस्स राइंदियस्स अंतरा वट्टमाणस्स

---

यन्ति स्म, इत्यादिकं सर्वं तदेव–वीरचरित्रोक्तं भणितव्यं, याव'द्दानं'धनं 'दायिकानां' गोत्रिकाणां 'परिभाज्य' दत्त्वा योऽसौ वर्षायाः प्रथमो मासो द्वितीयः पक्षः, श्रावणशुद्धस्तस्य श्रावणशुद्धस्य षष्ठीदिवसे पूर्वाह्णकालसमये उत्तरकुरायां शिविकायां स्थितः सन् सदेवमनुजासुरया पर्षदा अनुगम्यमानमार्गः, यावद्द्वारवत्या नगर्या मध्यंमध्येन निर्गच्छति। निर्गत्य यत्रैव रैवतकमुद्यानं, तत्रैवोपागच्छति। उपागत्य अशोकवरपादपस्याधस्ताच्छिबिकां स्थापयति। स्थापयित्वा शिविकातः प्रत्यवतरति। प्रत्यवतीर्य स्वयमेव आभरणमाल्याऽलङ्कारानवमुञ्चति। अवमुच्य स्वयमेव पञ्चमौष्टिकं लोचं करोति। कृत्वा षष्ठेन भक्तेनापानकेन, चित्रानक्षत्रेण चन्द्रयोगमुपागते सत्येकं देवदूष्यमादाय एकेन पुरुषसहस्रेण सार्द्धं मुण्डो भूत्वा अगारादनगारितां प्रव्रजितः।

१७८–अर्हन् अरिष्टनेमिः चतुष्पञ्चाशद्रात्रिदिवसानि यावन्नित्यं व्युत्सृष्टकायस्त्यक्तदेहः, तदेव वीरचरित्रोक्तं सर्वं ज्ञेयं, यावत्पञ्चपञ्चाशत्तमस्य रात्रिदिवसस्यान्तरा वर्त्तमानस्य योऽसौ वर्षायास्तृतीयो मासः पञ्चमः

जे से वासाणं तच्चे मासे पंचमे पक्खे आसोयबहुले, तस्स णं आसोयबहुलस्स पन्नरसीपक्खे णं दिवसस्स पच्छिमे भाए उज्जिंतसेलसिहरे वेडसपायवस्स अहे छट्ठे[अट्ठमे]णं भत्तेणं अपाणएणं चित्तानक्खत्तेणं जोगमुवागएणं झाणंतरियाए वट्टमाणस्स अणंते अणुत्तरे (निव्वाघाए निरावरणे जाव केवलवरनाणदंसणे समुप्पण्णे), जाव सव्वलोए सव्वजीवाणं सव्वभावे जाणमाणे पासमाणे विहरइ ॥ १७८ ॥

पक्ष आश्विनबहुलस्तस्य आश्विनबहुलस्य पञ्चदशीदिवसे, अमावास्यायामित्यर्थः। दिवसस्य पश्चिमे भागे उज्जयन्ताख्यशैलस्य शिखरे, वेतसनामपादपस्य अधस्तात् षष्ठे[अष्टमे]न भक्तेनापानकेन, चित्रानक्षत्रेण चन्द्रयोगमुपागते सति ध्यानान्तरिकायां–शुक्लध्यानस्याद्यपादद्वये वर्त्तमानस्य अनन्ते अनुत्तरे निर्व्याघाते निरावरणे यावत्केवलवरज्ञानदर्शने समुत्पन्ने, यावत्ताभ्यां सर्वलोके सर्वजीवानां सर्वभावान् जानन् पश्यंश्च विहरति।

तत्र रैवतकस्थे सहस्राम्रवणे प्रभोः केवलमुत्पन्नं, ततः—

"उद्यानपालकस्तत्र, गत्वा विष्णुर्व्यजिज्ञपत्। कोटीर्द्वादशरूप्यस्य, सार्द्धास्तस्मै ददावसौ ॥ १ ॥ सर्वर्द्ध्या वन्दितुं तीर्थ–करं हरिरुपागमत्। भृङ्गीव मालतीं राजी–मत्यपि प्रह्वमानसा ॥ २ ॥ भवान्धकूपतो रज्जु–देशीयां देशनां प्रभोः। निशम्य प्रार्थयाञ्चक्रे, वरदत्तनृपो व्रतम् ॥३॥ प्रभुस्तं दीक्षयामास, द्विसहस्रनृपान्वितम्। बहुकन्याऽन्वितां राजी–मतीं न समह्नोत्सवम् ॥४॥ आजन्मस्वामिपादाब्ज–सेवाबद्धमनोरथाम्। वीक्ष्य राजीमतीं विष्णुः, पप्रच्छ स्नेहकारणम् ॥५॥ ततो धनधनवती–भवादारभ्य नेम्यपि। तया सह स्वसम्बन्ध–माख्यदष्टभवावधिं ॥६॥"

तथाहि–प्रथमे भवेऽहं धनो नाम राजा इयं च धनवतीनाम्नी मम राज्ञी अभूत् १, द्वितीये भवे सौधर्मे कल्पे

आवां देवदेव्यौ २, तृतीये भवेऽहं चित्रगतिनामा विद्याधरोऽभवं इयं रत्नवतीनाम्नी मत्पत्नी ३, चतुर्थे भवे माहेन्द्रे कल्पे द्वावप्यावां देवौ ४, पञ्चमे भवेऽहं अपराजिताख्यो राजा एषा तु प्रियतमानाम्नी मम राज्ञी ५, षष्ठे भवे एकादशे कल्पे द्वावपि देवौ ६, सप्तमे भवेऽहं शङ्खो नाम राजा एषा मम यशोमती राज्ञी ७, अष्टमे भवेऽपराजिते विमाने द्वावपि देवौ ८, नवमे भवेऽहं एषा च राजीमती ९। ततोऽन्यत्र विहृत्य पुनरपि—

"विहरनन्यदा स्वामी, रैवते समवासरत्। रथनेमिरुपादत्त, चारित्रं श्रीजिनान्तिके ॥ ७ ॥"

"नेमिं चान्यदा नत्वा, रथनेमिः प्रतिव्रजन्। बाधितो वृष्टिकायेन, प्राविशत्कन्दरां गिरेः ॥ ८ ॥"

"राजीमत्यपि मेघाम्बु-बाधिता तद्गुहान्तरे। रथनेमिमजानाना, तत्रस्थं प्राविशत्तदा ॥ ९ ॥"

तत्र क्लिन्नानि वस्त्राणि शोषयितुं परितोऽक्षैप्सीत्सा, ततश्च अपहसितसुरवधूरामणीयकां साक्षात्कामरमणीमिव रमणीयां तां विवस्त्रामालोक्य भ्रातृवैरादिव मदनेन मर्मणि हतः कुललज्जां धीरतामपि चोत्सृज्य रथनेमिर्जगाद—

"आगच्छ स्वेच्छया भद्रे!, कुर्वहे सफलं जनुः। उभावपि वयःप्रान्ते, चरिष्यावस्तपोविधिम् ॥ १ ॥ श्रुत्वेत्य-श्रुत्यमव्याज-चित्ता संवीय वाससी। सती स्पष्टमभाषिष्ट, धारयित्वा च धीरताम् ॥ २ ॥ महानुभाव! संरम्भः, कोऽयं? ते भवकारणम्। संस्मर स्वप्रतिज्ञां तां, प्रव्रज्यां मा स्म विस्मर ॥३॥ पूर्वं गृहस्थया यस्त्वं, मया वाचाऽपि नेहितः। साऽहं व्रतप्रतिज्ञायां, त्वामद्य कथमाद्रिये? ॥ ४ ॥ अगन्धनकुले जाता-स्तिर्यञ्चो ये भुजङ्गमाः। तेऽपि वान्तं न पिबन्ति, त्वं नीचः किं ततोऽप्यासि? ॥ ५ ॥ वराटिकाकृतेऽकस्मात्, मा स्म कोटिं विनाशय। तस्माद्वी-

अरहओ णं अरिट्ठनेमिस्स अट्ठारस गणा अट्ठारस गणहरा हुत्था ॥ १७९ ॥
अरहओ णं अरिट्ठनेमिस्स वरदत्तपामुक्खाओ अट्ठारस समणसाहस्सीओ उक्कोसिया समणसंपया हुत्था ॥ १८० ॥
अरहओ णं अरिट्ठनेमिस्स अज्जजक्खिणीपामुक्खाओ चत्तालीसं अज्जियासाहस्सीओ उक्कोसिया अज्जियासंपया हुत्था ॥ १८१ ॥
अरहओ णं अरिट्ठ० नंदपामुक्खाणं समणोवासगाणं एगा सयसाहस्सीओ अउणत्तरिं च सहस्सा उक्कोसिया समणो० संपया हुत्था १८२

---

रत्नमाभाग, शुद्धं धर्मं समाचर ॥६॥ इत्यादि मदनोन्माद–सर्पत्सर्पैकजाङ्गुलीम् । तदुक्तियुक्तिमाकर्ण्य, चिन्तयामास्मिवानिदम् ॥७॥ स्त्रीजातावपि धन्याऽसौ, निधानं गुणसम्पदाम् । कुकर्मजलधौ मग्नो, धिगहं पुरुषोऽपि ही ॥८॥"

एवं भावयित्वा रथनेमिः श्रीनेमिप्रभोरन्तिके तद्व्रतीर्णमालोच्य तपस्तप्त्वा मुक्तिं जगाम । राजीमत्यपि शुद्धं संयममाराध्य शिवशय्यामारूढा सती चिरप्रार्थितं शाश्वतिकं श्रीनेमिसंयोगमवाप, यदुक्तं—

"छद्मस्था वत्सरं तस्थौ, गेहे वर्षचतुःशतीम् । पञ्च वर्षशतीं राजी–मती केवलशालिनी ॥ १ ॥"

१७९–अर्हतोऽरिष्टनेमेः अष्टादश गणा अष्टादश गणधराश्चाभवन् ।

१८०–अर्हतोऽरिष्टनेमेः 'वरदत्त'प्रमुखाण्यष्टादश श्रमणसहस्राणि, एतावत्युत्कृष्टा श्रमणसम्पदाऽभवत् ।

१८१–अर्हतोऽरिष्टनेमेः आर्या 'यक्षिणी'प्रमुखाणि चत्वारिंशदार्यिकासहस्राण्युत्कृष्टा आर्यिकासम्पदाऽभवत् ।

१८२-८४–अर्हतोऽरिष्टनेमेः 'नन्द'प्रमुखाणां श्रमणोपासकानां एकं शतसहस्रं एकोनसप्ततिसहस्राणि च, उत्कृष्टा श्रमणोपासकानां सम्पदाऽभवत् ॥ अर्हतोऽरिष्टनेमेः 'महासुव्रता'प्रमुखाणां श्रमणोपासिकानां त्रीणि

अरहओ णं अरिट्ठ० महासुव्वयापामुक्खाणं समणोवासिगाणं तिण्णि सयसाहस्सीओ छत्तीसं च सहस्सा उक्कोसिया समणोवासिआणं संपया हुत्था ॥१८३॥ अरहो णं अरिट्ठ० चत्तारि सया चउद्दसपुव्वीणं, अजिणाणं जिणसंकासाणं सव्वक्खरसन्निवाईणं जाव संपया हुत्था ८४

अरहो णं अरिट्ठनेमिस्स पन्नरससया ओहिनाणीणं, पन्नरससया केवलनाणीणं, पन्नरससया वेउव्विआणं, दससया विउलमईणं, अट्ठसया वाईणं, सोलससया अणुत्तरोववाइआणं, पन्नरससमणसया सिद्धा, तीसं अज्जियासयाइं सिद्धाइं ॥ १८५ ॥

अरहओ णं अरिट्ठनेमिस्से दुविहा अंतगडभूमी हुत्था, तं जहा–जुगंतगडभूमी परियायंतगडभूमी य, जाव अट्ठमाओ पुरिसजुगाओ जुगंतगडभूमी, दुवासपरिआए × अंतमकासी ॥ १८६ ॥

---

शतसहस्राणि षट्त्रिंशच्च सहस्राण्युत्कृष्टा श्रमणोपासिकानां सम्पदाऽभवत् ॥ अर्हतोऽरिष्टनेमेश्चत्वारि शतानि चतुर्दशपूर्विणां, अजिनानामपि जिनसङ्काशानां सर्वाक्षरसन्निपातिनां यावत्सम्पदाऽभवत् ।

१८५–अर्हतोऽरिष्टनेमेः पञ्चदशशतानि अवधिज्ञानिनां, पञ्चदशशतानि केवलज्ञानिनां, पञ्चदशशतानि वैक्रियलब्धिमतां, दशशतानि विपुलमतीनां, अष्टशतानि वादिनां, षोडशशतानि अनुत्तरोपपातिकानां सम्पदाऽभवत् । पञ्चदश श्रमणशतानि सिद्धानि, त्रिंशदार्यिकाशतानि सिद्धानि ।

१८६–अर्हतोऽरिष्टनेमेर्द्विविधा अन्तकृद्भूमिरभवत्, तद्यथा–युगान्तकृद्भूमिः पर्यायान्तकृद्भूमिश्च, तत्राष्टमं 'पुरुषयुगं' पट्टधरं यावद्युगान्तकृद्भूमिः, कैवल्यलाभाद् द्विवर्षपर्याये कोऽप्यन्तमकार्षीत्सा पर्यायान्तकृद्भूमिः ।

---

× प्रत्यन्तरे "दुवालस परिआए" त्ति मूले वृत्तौ च "द्वादशवर्षपर्याये" रिति व्याख्यानमपि दृश्यते, तल्लेखकदोषजं सम्भाव्यते, स्थानाङ्गेऽष्टमाध्ययने (आ० स० मुद्रिते ४३१ पत्रे) "द्विवर्षमात्रे केवलिपर्याये नेमिनाथस्य जाते संति साधवो भवान्तमकार्षुरि" त्येव व्याख्यातत्वात् ।

ते णं काले णं ते णं समए णं अरहा अरिट्ठनेमी तिण्णि वाससयाइं कुमारवासमज्झे वसित्ता, चउपन्नं राइंदियाइं छउमत्थपरियायं पाउणित्ता, देसूणाइं सत्त वाससयाइं केवलिपरिआयं पाउणित्ता, पडिपुण्णाइं सत्त वाससयाइं सामण्णपरिआयं पाउणित्ता, एगं वाससहस्सं सव्वाउयं पालइत्ता, खीणे वेयणिज्जाउयनामगुत्ते, इमीसे ओसप्पिणीए दूसमसुसमाए समाए बहुविइक्कंताए जे से गिम्हाणं चउत्थे मासे अट्ठमे पक्खे आसाढसुद्धे, तस्स णं आसाढसुद्धस्स अट्ठमीपक्खे णं उप्पिं उज्जिंतसेलसिहरंसि, पंचहिं छत्तीसेहिं अणगारसएहिं सद्धिं, मासिएणं भत्तेणं अपाणएणं, चित्तानक्खत्तेणं जोगमुवागएणं, पुव्वरत्तावरत्तकालसमयंसि नेसज्जिए कालगए (ग्रंथ ८००), जाव सव्वदुक्खप्पहीणे॥१८७॥

अरहओ णं अरिट्ठनेमिस्स कालगयस्स जाव सव्वदुक्खप्पहीणस्स चउरासीइं वाससहस्साइं विइक्कंताइं, पंचासीइमस्स वाससह-

१८७–तस्मिन् काले तस्मिन्समयेऽर्हन् अरिष्टनेमिस्त्रीणि वर्षशतानि कुमारवासमध्ये उषित्वा, चतुष्पञ्चाशत् रात्रिदिवसानि छद्मस्थपर्यायं पालयित्वा, देशोनानि सप्त वर्षशतानि केवलिपर्यायं पालयित्वा, प्रतिपूर्णानि सप्त वर्षशतानि श्रामण्यपर्यायं पालयित्वा, एकं वर्षसहस्रं सर्वायुः पालयित्वा, क्षीणेषु वेदनीयायुर्नामगोत्रेषु कर्मसु, अस्यामवसर्पिण्यां दुष्षमसुषमायां समायां–चतुर्थारककाले बहुव्यतिक्रान्ते सति योऽसौ ग्रीष्मस्य चतुर्थो मासोऽष्टमः पक्ष आषाढशुद्धस्तस्य आषाढशुद्धस्य अष्टमीदिवसे उज्जयन्तनामशैलस्य शिखरोपरि पञ्चभिः षट्त्रिंशद्युतैरनगारशतैः सार्द्धं मासिकेन भक्तेन अपानकेन, चित्रानक्षत्रेण सह चन्द्रयोगमुपागते सति, पूर्वरात्रापररात्रकालसमये–मध्यरात्रौ 'नैषधिकः' निषण्णः सन् कालगतः, यावत्सर्वदुःखप्रहीणो जातः।

१८८–अर्हतोऽरिष्टनेमेः कालगतस्य यावत्सर्वदुःखप्रहीणस्य चतुरशीतिवर्षसहस्राणि व्यतिक्रान्तानि, पञ्चाशीतितमस्य वर्षसहस्रस्य नव वर्षशतानि व्यतिक्रान्तानि, दशमस्य च वर्षशतस्य अयं अशीतितमः संवत्सरः

स्सस्स नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ १८८ ॥ २२ ॥

नमिस्स णं अरहओ कालगयस्स जाव सव्वदुक्खप्पहीणस्स पंच वाससयसहस्साइं, चउरासीइं च वाससहस्साइं नव य वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ १८९ ॥ २१ ॥

मुणिसुव्वयस्स णं अरहओ कालगयस्स (जाव सव्वदुक्खप्पहीणस्स) इक्कारस वाससयसहस्साइं चउरासीइं च वाससहस्साइं नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ १९० ॥ २० ॥

---

कालो गच्छति ॥ श्रीनेमिनिर्वाणाच्चतुरशीतिवर्षसहस्रैर्वीरनिर्वाणमभूत्। पार्श्वनिर्वाणं तु त्र्यशीतिसहस्रैः सार्द्धैः सप्तशतैश्च वर्षैरभूदित्यादि स्वधिया ज्ञेयम्। इति श्रीपञ्चकल्याणकबन्धबन्धुरं नेमिचरितं समाप्तम्।

अथोऽग्रे ग्रन्थगौरवभयात्पश्चानुपूर्व्या नम्यादीनां अजितान्तानां जिनानां अन्तरकालमानमेवाह—

१८९—नमिनाथस्यार्हतः कालगतस्य यावत्सर्वदुःखप्रहीणस्य पञ्च वर्षशतसहस्राणि, चतुरशीतिश्च वर्षसहस्राणि नव च वर्षशतानि व्यतिक्रान्तानि, दशमस्य च वर्षशतस्यायमशीतितमः संवत्सरः कालो गच्छति ॥ नमिनिर्वाणात्पञ्चभिर्वर्षलक्षैर्नेमिनिर्वाणं, ततश्चतुरशीतिसहस्र-नवशताशीतिवर्षातिक्रमे पुस्तकवाचनाऽऽदि ॥ २१ ॥

१९०—मुनिसुव्रतस्यार्हतः कालगतस्य (यावत्सर्वदुःखप्रहीणस्य) एकादश वर्षशतसहस्राणि चतुरशीतिश्च वर्षसहस्राणि नव वर्षशतानि व्यतिक्रान्तानि, दशमस्य च वर्षशतस्यायं अशीतितमः संवत्सरः कालो गच्छति ॥ मुनिसुव्रतनिर्वाणाद्वर्षाणां षड्भिर्लक्षैर्नमिनिर्वाणं, ततश्च पञ्चलक्ष-चतुरशीतिसहस्र-नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि। अत्र मुनिसुव्रत-नमिनिर्वाणान्तरस्य नमिनिर्वाण-पुस्तकवाचनान्तरस्य च मिलने सूत्रोक्तं मानं भवति, एवं सर्वत्र ज्ञेयम् ॥

मल्लिस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स पन्नट्ठिं वाससयसहस्साइं चउरासीइं च वाससहस्साइं नव वाससयाइं विइक्कं-ताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ १९१ ॥ १९ ॥

अरस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स एगे वासकोडिसहस्से विइक्कंते, सेसं जहा मल्लिस्स, तं च एयं-पंचसट्ठिं लक्खा चउरासीइं च वाससहस्साइं विइक्कंताइं, तम्मि समए महावीरो निव्वुओ, तओ परं नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ । एवं अग्गओ जाव सेयंसो ताव दट्ठव्वं ॥ १९२ ॥ १८ ॥

---

१९१–मल्लिनाथस्यार्हतो यावत्सर्वदुःखप्रहीणस्य पञ्चषष्टिवर्षशतसहस्राणि चतुरशीतिवर्षसहस्राणि नव वर्षशतानि च व्यतिक्रान्तानि, दशमस्य च वर्षशतस्यायमशीतितमः संवत्सरः कालो गच्छति ॥ मल्लिनिर्वाणात्चतुःपञ्चाशल्लक्षवर्षैर्मुनिसुव्रतनिर्वाणं, ततश्चैकादशलक्ष-चतुरशीतिसहस्र-नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि, उभयमिलने च सूत्रोक्तं मानं भवति ॥ १९ ॥

१९२–अरनाथस्यार्हतो यावत्सर्वदुःखप्रहीणस्य एकं वर्षकोटिसहस्रं व्यतिक्रान्तं, शेषं यथा मल्लिनाथस्य तथा ज्ञेयं, तद्यथा–पञ्चषष्टिलक्षाणि चतुरशीतिवर्षसहस्राणि च व्यतिक्रान्तानि, तस्मिन्समये महावीरो निर्वृतः, ततः परं नव वर्षशतानि व्यतिक्रान्तानि, दशमस्य च वर्षशतस्यायमशीतितमः संवत्सरः कालो गच्छति। एवमग्रतो यावच्छ्रेयांसस्तावद्द्रष्टव्यम् ॥ श्रीअरनिर्वाणात्सहस्रकोटिवर्षैः श्रीमल्लिनिर्वाणं, ततश्च पञ्चषष्टिलक्ष-चतुरशीतिसहस्र-नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ।

कुंथुस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स एगे चउभागपलिओवमे विइक्कंते, पंचसट्ठिं च वाससयसहस्सा० सेसं जहा मल्लिस्स।
संतिस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स एगे चउभागूणे पलिओवमे विइक्कंते, पन्नट्ठिं च० सेसं जहा मल्लिस्स ॥ १९४ ॥ १६ ॥
धम्मस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स तिण्णि सागरोवमाइं विइक्कंताइं, पन्नट्ठिं च० सेसं जहा मल्लिस्स ॥ १९५ ॥ १५ ॥
अणंतस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स सत्त सागरोवमाइं विइक्कंताइं, पन्नट्ठिं च० सेसं जहा मल्लिस्स ॥ १९६ ॥ १४ ॥

---

१९३–कुन्थुनाथस्यार्हतो यावत्सर्वदुःखप्रहीणस्यैकश्चतुर्थो भागः पल्योपमस्य व्यतिक्रान्तः, पञ्चषष्टिश्च वर्षशतसहस्राणीत्यादिशेषं यथा मल्लेस्तथा ज्ञेयं ॥ कुन्थुनाथनिर्वाणात्सहस्रकोटिवर्षोनपल्योपमचतुर्थभागेन अरनिर्वाणं, ततश्च वर्षसहस्रकोटि-पञ्चषष्टिलक्ष-चतुरशीतिसहस्र-नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥१७॥

१९४–शान्तिनाथस्यार्हतो यावत्सर्वदुःखप्रहीणस्य एकं चतुर्थभागोनं पल्योपमं व्यतिक्रान्तं, पञ्चषष्टिलक्षादिकं च शेषं यथा मल्लेः ॥ श्रीशान्तिनिर्वाणात्पल्योपमार्द्धेन श्रीकुन्थुनिर्वाणं, ततश्च पल्यचतुर्थभाग-पञ्चषष्टिलक्ष-चतुरशीतिसहस्र-नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि । उभयमिलने च सूत्रोक्तं पादोनपल्योपमं स्यात् । यच्च शेषं मल्लिनाथवत्तत्पञ्चषष्टिलक्ष-चतुरशीतिसहस्र-नवशताशीतिवर्षरूपं ज्ञेयं, एवं सर्वत्र ॥ १६ ॥

१९५–धर्मस्यार्हतो यावत्सर्वदुःखप्रहीणस्य त्रीणि सागरोपमाणि व्यतिक्रान्तानि, पञ्चषष्टिलक्षादिकं च शेषं यथा मल्लेः ॥ श्रीधर्मनिर्वाणात्पादोनपल्योपमोनैस्त्रिभिः सागरोपमैः श्रीशान्तिनिर्वाणं, ततश्च पादोनपल्योपम–पञ्चषष्टिलक्ष-चतुरशीतिसहस्र-नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ १५ ॥

१९६–अनन्तस्यार्हतो यावत्सर्वदुःखप्रहीणस्य सप्त सागरोपमाणि व्यतिक्रान्तानि, पञ्चषष्टिलक्षादिकं च शेषं

विमलस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स सोलस सागरोवमाइं विइक्कंताइं, पन्नट्ठिं च० सेसं जहा मल्लिस्स ॥ १९७ ॥ १३ ॥
वासुपुज्जस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स छायालीसं सागरोवमाइं विइक्कंताइं, पन्नट्ठिं च० सेसं जहा मल्लिस्स ॥१९८॥१२॥
सिज्जंसस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स एगे सागरोवमसए विइक्कंते, पन्नट्ठिं च० सेसं जहा मल्लिस्स ॥ १९९ ॥ ११ ॥

---

यथा मल्लेः ॥ श्रीअनन्तनिर्वाणाच्चतुर्भिः सागरैः श्रीधर्मनिर्वाणं, ततश्च सागरत्रय-पञ्चषष्टिलक्ष-चतुरशीतिसहस्र-नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ १४ ॥

१९७–विमलस्यार्हतो यावत्सर्वदुःखप्रहीणस्य षोडश सागरोपमाणि व्यतिक्रान्तानि, पञ्चषष्टिलक्षादिकं च शेषं यथा मल्लेः ॥ श्रीविमलनिर्वाणान्नवभिः सागरैः श्रीअनन्तनिर्वाणं, ततश्च सप्तसागर-पञ्चषष्टिलक्ष-चतुरशीतिसहस्र-नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ १३ ॥

१९८–वासुपूज्यस्यार्हतो यावत्सर्वदुःखप्रहीणस्य षट्चत्वारिंशत्सागरोपमाणि व्यतिक्रान्तानि, पञ्चषष्टिलक्षादिकं च शेषं यथा मल्लेः ॥ श्रीवासुपूज्यनिर्वाणात्त्रिंशता सागरैः श्रीविमलनिर्वाणं, ततश्च षोडशसागर-पञ्चषष्टिलक्ष-चतुरशीतिसहस्र-नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ १२ ॥

१९९–श्रेयांसस्यार्हतो यावत्सर्वदुःखप्रहीणस्य एकं सागरोपमशतं व्यतिक्रान्तं, पञ्चषष्टिलक्षादिकं शेषं यथा मल्लेः ॥ श्रीश्रेयांसनिर्वाणाच्चतुष्पञ्चाशता सागरैः श्रीवासुपूज्यनिर्वाणं, ततश्च षट्चत्वारिंशत्सागर-पञ्चषष्टिलक्ष-चतुरशीतिसहस्र-नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ ११ ॥

सीअलस्स णं अरहओ जाव सव्व० एगा सागरोवमकोडी तिवासअद्धनवमासाहिअबायालीसवाससहस्सेहिं ऊणिआ विइक्कंता, एयम्मि समए महावीरो निव्वुओ, तओ वि य णं परं नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ २००-१०

सुविहिस्स णं अरहओ पुप्फदंतस्स जाव सव्वदुक्खप्पहीणस्स दस सागरोवमकोडीओ विइक्कंताओ, सेसं जहा सीअलस्स, तं च इमं-तिवासअद्धनवमासाहिअबायालीसवाससहस्सेहिं ऊणिया विइक्कंता इच्चाइ ॥ २०१ ॥ ९ ॥

चंदप्पहस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स एगं सागरोवमकोडिसयं विइक्कंतं, सेसं जहा सीअलस्स, तं च इमं-तिवास-

---

२००-शीतलस्यार्हतो यावत्सर्वदुःखप्रहीणस्यैका सागरोपमकोटी त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रैरूनिका व्यतिक्रान्ता, एतस्मिन्समये महावीरो निर्वृतः, ततोऽपि च परं नव वर्षशतानि व्यतिक्रान्तानि, दशमस्य च वर्षशतस्यायमशीतितमः संवत्सरः कालो गच्छति ॥ श्रीशीतलनिर्वाणात् षट्षष्टिलक्ष-षड्विंशतिसहस्रवर्षाधिकसागरशतोनया एकया सागरकोट्या श्रीश्रेयांसनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकैर्द्विचत्वारिंशद्वर्षसहस्रैरूने सागरशतेऽतिक्रान्ते श्रीवीरो निर्वृतः, ततः परं नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ १० ॥

२०१-सुविधेरर्हतः पुष्पदन्तापराभिधानस्य यावत्सर्वदुःखप्रहीणस्य दश सागरोपमकोट्यो व्यतिक्रान्ताः, शेषं यथा शीतलस्य, तच्चेदं-त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रैरूनिका दश सागरकोट्यो व्यतिक्रान्ता इत्यादिकं ॥ श्रीसुविधिनिर्वाणान्नवभिः सागरकोटिभिः श्रीशीतलनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रोनसागरकोट्यतिक्रमे वीरनिर्वृतिः, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ ९ ॥

२०२-चन्द्रप्रभस्यार्हतो यावत्सर्वदुःखप्रहीणस्यैकं सागरोपमशतं व्यतिक्रान्तं, शेषं यथा शीतलस्य, तच्चेदं-

...वासेहिं ऊणगमिच्चाइ ॥ २०२ ॥ ८ ॥ सुपासस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स एगे सागरोवमकोडिसहस्से विइक्कंते, सेसं जहा सीअलस्स, तं च इमं-तिवासअद्धनवमासाहिअबायालीसवाससहस्सेहिं ऊणिआ इच्चाइ ॥२०३॥७॥

पउमप्पहस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स दस सागरोवमकोडिसहस्सा विइक्कंता, सेसं जहा सीअलस्स, तं च इमं-तिवासअद्धनवमासाहिअबायालीसवाससहस्सेहिं ऊणगमिच्चाइ ॥ २०४ ॥ ६ ॥

---

त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रैरूनकमित्यादि ॥ श्रीचन्द्रप्रभनिर्वाणान्नवतिसागरकोटिभिः श्रीसुविधिनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रैरूनासु दशसु सागरकोटिषु व्यतिक्रान्तासु श्रीवीरनिर्वृतिः, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ ८ ॥

२०३-सुपार्श्वस्यार्हतो यावत्सर्वदुःखप्रहीणस्यैकं सागरोपमकोटिसहस्रं व्यतिक्रान्तं, शेषं यथा शीतलस्य, तच्चेदं-त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रैरूनिका इत्यादि ॥ श्रीसुपार्श्वनिर्वाणान्नवशतकोटिसागरैः श्रीचन्द्रप्रभनिर्वाणं, ततश्च वर्षत्रयसार्द्धाष्टमासाधिकद्विचत्वारिंशद्वर्षसहस्रोनैकशतकोटिसागरैः श्रीवीरनिर्वृतिः, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ ७ ॥

२०४-पद्मप्रभस्यार्हतो यावत्सर्वदुःखप्रहीणस्य दश सागरोपमकोटिसहस्राणि व्यतिक्रान्तानि, शेषं यथा शीतलस्य, तच्चेदं-त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रैरूनकमित्यादि ॥ श्रीपद्मप्रभनिर्वाणान्नवसहस्रकोटिसागरैः सुपार्श्वनिर्वाणं, ततश्च वर्षत्रयार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रोनैककोटिसहस्रसागरैः श्रीवीरनिर्वृतिः, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ ६ ॥

सुमइस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स एगे सागरोवमकोडिसयसहस्से विइक्कंते, सेसं जहा सीअलस्स, तं च इमं-तिवासअद्धनवमासाहिअबायालीसवाससहस्सेहिं ऊणगमिच्चाइयं ॥ २०५ ॥ ५ ॥

अभिनंदणस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स दस सागरोवमकोडिसयसहस्सा विइक्कंता, सेसं जहा सीअलस्स, तं च इमं-तिवासअद्धनवमासाहिअबायालीसवाससहस्सेहिं [ऊणगं] इच्चाइयं ॥ २०६ ॥ ४ ॥

संभवस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स वीसं सागरोवमकोडिसयसहस्सा विइक्कंता, सेसं जहा सीअलस्स, तं च इमं

---

२०५-सुमतेरर्हतो यावत्सर्वदुःखप्रहीणस्यैकं सागरोपमकोटिशतसहस्रं व्यतिक्रान्तं, शेषं यथा शीतलस्य, तच्चेदं-त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रैरूनकमित्यादिकं ॥ श्रीसुमतिनिर्वाणान्नवतिसहस्रसागरोपमकोटिभिः श्रीपद्मप्रभनिर्वाणं, ततश्च वर्षत्रयार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रोनदशकोटिसहस्रसागरोपमैः श्रीवीरनिर्वृतिः, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ ५ ॥

२०६-अभिनन्दनस्यार्हतो यावत्सर्वदुःखप्रहीणस्य दश सागरोपमकोटिशतसहस्राणि व्यतिक्रान्तानि, शेषं यथा शीतलस्य, तच्चेदं-त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रैरूनकमित्यादिकं ॥ श्रीअभिनन्दननिर्वाणान्नवलक्षकोटिसागरोपमैः सुमतिनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रोनैककोटिसागरोपमैः श्रीवीरनिर्वृतिः, ततो नवशताशीतिवर्षे पुस्तकवाचनादि ॥ ४ ॥

२०७-सम्भवस्यार्हतो यावत्सर्वदुःखप्रहीणस्य विंशतिः सागरोपमकोटिशतसहस्राणि व्यतिक्रान्तानि, शेषं यथा शीतलस्य, तच्चेदं-त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रैरूनकमित्यादिकं ॥ श्रीसम्भवनिर्वाणाद्दश-

तिगामस्सनवमासाहिअयायालीसवाससहस्सेहिं [ऊणगं] इच्चाइयं ॥ २०७ ॥ ३ ॥

अजियस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स पन्नासं सागरोवमकोडिसयसहस्सा विइकंता, सेसं जहा सीअलस्स, तं च इमं-तिवासअद्धनवमासाहिअयायालीसवाससहस्सेहिं [ऊणगं] इच्चाइयं ॥ २०८ ॥ २ ॥

ते णं काले णं ते णं समए णं उसभे णं अरहा कोसलिए चउउत्तरासाढे अभीइपंचमे हुत्था, तं जहा-उत्तरासाढाहिं चुए, चइत्ता गब्भं वक्कंते, जाव अभीइणा परिनिव्वुए ॥ २०९ ॥ १ ॥

---

लक्षकोटिसागरैः श्रीअभिनन्दननिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रोनैर्दशलक्षकोटिसागरैः श्रीवीरनिर्वृतिस्ततो नवशताशीतिवर्षे पुस्तकवाचनादि ॥ ३ ॥

२०८-अजितस्यार्हतो यावत्सर्वदुःखप्रहीणस्य पञ्चाशत्सागरोपमकोटिशतसहस्राणि व्यतिक्रान्तानि, शेषं यथा शीतलस्य, तच्चेदं-त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रैरूनकमित्यादि ॥ श्रीअजितनाथनिर्वाणात्रिंशत्कोटिलक्षसागरोपमैः श्रीसम्भवनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रोनैर्विंशतिसागरोपमकोटिलक्षैः श्रीवीरनिर्वृतिस्ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि । सिद्धान्तस्य पुस्तकाधिरूढकारकत्वाद्देवर्द्धिगणिक्षमाश्रमणैस्सह तीर्थङ्कराणामन्तरकालः कथितः ॥ २ ॥

अथास्यामवसर्पिण्यां प्रथमधर्मप्रवर्त्तकत्वेन परमोपकारित्वात्किञ्चिद्विस्तरतः श्रीऋषभचरित्रं प्रस्तूयते—

२०९-तस्मिन्काले-तृतीयारकप्रान्ते तस्मिन्समये ऋषभोऽर्हन् कोशलायां-अयोध्यायां जातः कौशलिकश्चतुरुत्तराषाढोऽभिजित्पञ्चमश्चाभवत्, चत्वारि कल्याणकान्युत्तराषाढायामभवन्, पञ्चमं त्वभिजिन्नक्षत्रेऽभवत्, तद्यथा-

उत्तराषाढायां च्युतः, च्युत्वा गर्भं व्युत्क्रान्तः, यावदभिजिन्नक्षत्रे 'परिनिर्वृतः' निर्वाणं प्राप्तः।

जम्बूद्वीपप्रज्ञप्त्यावृषभचरित्रवर्णने "उसभे णं अरहा कोसलिए पंचउत्तरासाढे अभीइछट्ठे होत्था" इति पाठे सत्यपि यथाऽत्र "चउउत्तरासाढे अभीइपंचमे" इति पाठः समुपलभ्यते न तथा वीरचरित्रवर्णने काप्याचाराङ्ग-स्थानाङ्गादि-शास्त्रेषु "समणे भगवं महावीरे पंचहत्थुत्तरे होत्था" इति पाठवत् "चउहत्थुत्तरे होत्था" इत्यपि पाठ उपलभ्यते।

अन्यच्च "तदेव हि कल्याणकं यत्रासनप्रकम्पप्रयुक्तावधयः सकलसुरासुरेन्द्रा जीतमिति विधित्सवो युगपत्ससम्भ्रमा उपतिष्ठन्ते" इति शान्तिचन्द्रीयजम्बूद्वीपप्रज्ञप्तिवृत्तिगतं कल्याणकलक्षणं नात्यन्तिकं, तदेवात्यन्तिकं यत्सर्वदा सर्वत्रावन्ध्यं, भवेदात्यन्तिकमेतत्प्रागुक्तं कल्याणकलक्षणं चेत्तदा वीरस्य देवानन्दाकुक्षीगर्भाधाने जीतमिति विधित्सवो युगपत्ससम्भ्रमाः सकलसुरासुरेन्द्राः कथं नोपतस्थुः?।

ननु किं प्रमाणं? यन्नैवोपतस्थुः सुरेन्द्रास्तस्मिन् समये इति चेत्कल्पसिद्धान्त एव प्रमाणमत्रार्थे, तथा हि-"ते णं काले णं ते णं समए णं सक्के देविंदे" इत्यादितः प्रारभ्य "समणे भगवं महावीरे ××× आसोअबहुलस्स तेरसीपक्खे णं बासीइराइंदिएहिं विइक्कंतेहिं तेसीइमस्स राइंदिअस्स अंतरा वट्टमाणे हिआणुकंपएणं देवेणं हरिणेगमेसिणा ××× तिसलाए खत्तिआणीए ××× कुच्छिसि गब्भत्ताए साहरिए" इत्यादिना स्फुटतरमवगम्यते यद्व्यशीतिदिवसात्यय एव ज्ञातं शक्रेण श्रीमन्महावीरदेवस्य देवानन्दाकुक्ष्यवतरणं, नार्वाक्। ज्ञातभवनानन्तरमेव ससम्भ्रममभ्युत्थाय सप्ता-ष्टपदान्यभिमुखं गत्वा भावतः शक्रस्तवेन वन्दित्वा सिंहासने समुपविश्य विमृश्य चैतादृशे कुले तीर्थङ्करा-

श्रीनामनागमनादिकमविलम्बेनैव हरिणैगमेषिद्वारा गर्भपरिवर्त्तनस्य कारितत्वात्। नहीयद्दीर्घकालीनो द्व्यशीतिदिवसात्मकः सम्भवति सामान्यमनुजस्यापि विमर्षणकालः, कथं नाम शक्रस्य ?।

अतो नायमकल्याणकयादिनिर्वर्त्तितं कल्याणकलक्षणमात्यन्तिकमवन्ध्यमपि च, किन्तु–तदेव हि कल्याणकं यद्भुवने आश्चर्यभूतं कल्याणफलं च जगज्जीवानां भवति, एतदेव हि कल्याणकलक्षणमात्यन्तिकमवन्ध्यमपि च। न चैतदनागमिकं, यदवोचुः श्रीमद्धरिभद्रसूरिपादाः यात्रापञ्चाशके–"भुवणऽच्छेरयभूआ, कल्लाणफला य जीवाणं ॥ ३० ॥" इति, एवमेवास्य गाथापाश्चात्यार्द्धस्य व्याख्यायां श्रीमत्सुविहितश्रामण्यः खरतरगच्छगगनाङ्गणदिनमणयो नवाङ्गवृत्तिविधायकाः परमगुरवः श्रीमदभयदेवाचार्याः "भुवनाश्चर्यभूतानि–निखिलभुवनाद्भुतभूतानि, त्रिभुवनजनानन्दहेतुत्वात्, तथा कल्याणफलानि च–निःश्रेयससाधनानि, चः समुच्चये, जीवानां–प्राणिनामिति" इति। न च किमपि भुवनाश्चर्यभूतत्वं जीवानां कल्याणफलत्वं वा सङ्घटीति ऋषभराज्याभिषेके, शान्तिनाथादिचक्रित्वराज्याभिषेकस्येतोऽप्यधिकतरत्वादनेकेषां वधबन्धनादिनिबन्धनत्वाच्च।

श्रीमन्महावीरगर्भापहारे तु गर्भाधानत्वमेव प्रकारान्तरेण, कथमन्यथा समवायाङ्गोक्ता तीर्थकृद्भवात्प्राक् षष्ठं पोट्टिलभवमिति गणधरोक्तिः सत्या भवेत्?, कथं च "एए–चउद्दस महासुमिणे, सवा पासेइ तित्थयरमाया। जं रयणिं वक्कमई, कुच्छिंसि महायसो अरहा ॥ १ ॥" इत्येतत्कल्पसिद्धान्तोक्तनियमानुसारं त्रिशलया चतुर्दशमहास्वप्ना दृष्टाः?, किं कारणं? यत्सूत्रकारेणापि तेषामेव विस्तृतं वर्णनं विहितं?, कथं वा साम्प्रतमपि पर्युषणायां

ते णं काले णं ते णं समए णं उसमे णं अरहा कोसलिए जे से गिम्हाणं चउत्थे मासे सत्तमे पक्खे आसाढबहुले, तस्स णं आसाढबहुलस्स चउत्थीपक्खे णं सव्वट्ठसिद्धाओ महाविमाणाओ तित्तीसं सागरोवमट्ठियाओ अणंतरं चयं चइत्ता इहेव जंबुद्दीवे दीवे भारहे वासे इक्खागभूमीए नाभिस्स कुलगरस्स मरुदेवाए भारिआए पुव्वरत्तावरत्तकालसमयंसि आहारवक्कंतीए जाव गब्भत्ताए वक्कंते ॥२१०॥

उसमे णं अरहा कोसलिए तिन्नाणोवगए आवि हुत्था, तं जहा–चइस्सामि त्ति जाणइ०३, जाव सुमिणे पासइ, तं जहा–

---

वीरजन्मवाचनाहि घृतादिजलपनपूर्वकं तेषामेव स्वप्नानामुत्तारणाद्युत्सवो विधीयते ? समस्तसङ्घेन सर्वत्रेत्यपि विमर्षणीयं स्वस्थचित्तेनेत्यलमतिचर्चया, स्थितं च–नाकल्याणकत्वं वीरगर्भापहारे नापि च कल्याणकत्वमृषभराज्याभिषेके सिद्ध्यति कथमपीति, विशेषार्थिना विमर्षणीया वीरचरित्रेऽकल्याणकवादिचर्चा। अथ प्रकृतं—

२१०–तस्मिन्काले तस्मिन्समये ऋषभोऽर्हन् कौशलिको योऽसौ ग्रीष्मस्य चतुर्थो मासः सप्तमः पक्ष आषाढबहुलः, तस्य आषाढबहुलस्य चतुर्थीदिवसे सर्वार्थसिद्धनामकात् महाविमानात् त्रयस्त्रिंशत्सागरोपमस्थितिकात् 'अनन्तरं' अन्तररहितं "चयं" देवभवसत्कं देहं त्यक्त्वा अस्मिन्नेव जम्बूद्वीपाख्ये द्वीपे भारते वर्षे, तदानीं ग्रामाद्यभावात् इक्ष्वाकुभूम्यां नाभेः कुलकरस्य मरुदेवाया भार्यायाः, कुक्षाविति गम्यं, पूर्वरात्रापररात्रकालसमये 'आहारव्युत्क्रान्त्या' दिव्याहारत्यागेन यावद्गर्भतया 'व्युत्क्रान्तः' उत्पन्नः।

२११–ऋषभोऽर्हन् कौशलिकः त्रिज्ञानोपगतश्चाप्यभवत्, तद्यथा–च्योष्येऽहमिति इति जानाति, यावत्स्वप्नान् पश्यति मरुदेवा, तद्यथा–"गयवसहे" त्यादि गाथार्थोऽत्र वाच्यः। सर्वं तथैव प्रागुक्तवत्, नवरं–प्रथमं वृषभं

"गयवसभ" गाहा। सव्वं तहेव, नवरं–पढमं उसभं मुहेणं अइंतं पासइ, सेसाओ गयं। नाभिकुलगरस्स साहइ। सुविणपाढगा नत्थि, नाभिकुलगरो सयमेव वागरेइ॥ २११॥

ते णं काले णं ते णं समए णं उसमे णं अरहा कोसलिए जे से गिम्हाणं पढमे मासे पढमे पक्खे चित्तबहुले, तस्स णं चित्तबहुलस्स अट्ठमीपक्खे णं नवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणं राइंदियाणं, जाव आसाढाहिं नक्खत्ते णं जोगमुवागएणं आरोग्गा आरोग्गं दारयं पयाया॥ २१२॥ तं चेव सव्वं, जाव देवा देवीओ य वसुहारवासं वासिंसु, सेसं तहेव चारग-सोहण-माणुम्माणवद्धण-उस्सुक्कमाइय-ठिइवडिय-जूयवज्जं सव्वं भाणियव्वं॥ २१३॥

---

मुखे "अर्हतं" प्रविशन्तं पश्यति, शेषा जिनजनन्यो गजं पश्यन्ति, वीरमाता तु सिंहमद्राक्षीत्। नाभिकुलकराय 'साधयति' कथयति, तदानीं स्वप्नपाठका न सन्ति, नाभिकुलकरः स्वयमेव 'व्यागृणाति' कथयति स्वप्नफलम्।

२१२–तस्मिन्काले तस्मिन्समये ऋषभोऽर्हन् कौशलिको योऽसौ ग्रीष्मस्य प्रथमो मासः प्रथमः पक्षश्चैत्र-बहुलस्तस्य चैत्रबहुलस्याष्टमीदिवसे नवसु मासेषु बहुप्रतिपूर्णेषु 'अर्द्धाष्टमेषु' सार्द्धसप्तसु रात्रिन्दिवेषु व्यति-क्रान्तेषु सत्सु यावदुत्तराषाढानक्षत्रेण चन्द्रयोगमुपागते सति आरोग्या माता मरुदेवा आरोग्यं दारकं प्रजाता।

२१३–तदेव सर्वं, यावद्देवा देव्यश्च वसुधारावर्षणं चक्रुः, शेषं तथैव प्राग्वर्णितप्रकारेण चारकशोधन-मानो-न्मानवर्द्धन-उच्छुल्ककरणप्रभृतिस्थितिपतितायूपोर्द्धीकरणवर्जं सर्वं भणितव्यं। नवरं–नामकरणावसरे मरुदेवया प्रथमं वृषभस्य स्वप्ने दर्शनात्प्रभोर्जङ्घयो रोम्णां वृषभाकारलाञ्छनत्वाच्च नाभिना "ऋषभ" इति नाम दत्तम्।

अथ देवलोकाच्च्युतो भगवाननुपमरूपोऽप्रतिपातिज्ञानत्रयविराजमानोऽनेकदेवदेवीपरिवृतो बुद्ध्याद्यखिलगुणै-

रशेषमनुजेभ्यः परमोत्कृष्टः क्रमेण वर्द्धमानः सन्नाहाराभिलाषे सुरसञ्चारितामृतरसामङ्गुलिं मुखे प्रक्षिपति, एवमन्येऽपि तीर्थङ्करा बाल्येऽवगन्तव्याः, बाल्यातिक्रमे पुनरग्निपक्काहारभोजिनः, ऋषभस्तु प्रव्रज्यां यावत्सुरानीतदेवकुरूत्तरकुरुकल्पद्रुमफलरसमास्वादितवान्।

अथ च सञ्जाते किञ्चिदूनवर्षे भगवति प्रथमजिनवंशस्थापनं स्वजीतमिति विचिन्त्य शक्रः 'रिक्तपाणिः कथं प्रभुसमीपं यामि?' इति महतीं इक्षुयष्टिमादाय नाभिकुलकराङ्कस्थस्य स्वामिनोऽग्रे तस्थौ, दृष्ट्वा चेक्षुयष्टिं हृष्टवदनेन स्वामिना करे प्रसारिते 'इक्षुं भक्षयिष्यसि?' इत्युक्त्वा तां दत्वा इक्ष्वभिलाषात्प्रभोर्वंश इक्ष्वाकुः, तथा प्रभोः पूर्वजा अपि 'काश्यं' इक्षुरसं अपिबन् अतो गोत्रमप्यस्य काश्यप इति वंशस्थापनामकरोत्।

अथ किञ्चिद्युगलं सञ्जातापत्यं सदपत्ययुगलं तालवृक्षाधो विमुच्य रिरंसया क्रीडास्थानमगात्, इतः पवनेरितेन पतता तालफलेन दारको व्यापादितः, प्रथमोऽयमकालमृत्युरस्यामवसर्पिण्यां। ततः स्वर्गतयोर्मातापित्रोरेकाकिनीमेव वने विचरन्तीं सुरसुन्दरीवोत्कृष्टरूपां तां दारिकां दृष्ट्वा युगलिकनरा नाभिकुलकराय न्यवेदयन्, नाभिरपि 'शिष्टेयं सुनन्दा नाम्नी ऋषभपत्नी भविष्यति' इति लोकज्ञापनपुरस्सरं तां गृहीतवान्। ततः सुनन्दासुमङ्गलाभ्यां सह प्रवर्द्धमानो यौवनमनुप्राप्तः। इन्द्रोऽपि प्रथमजिनविवाहकरणं स्वजीतमित्यनेकदेवदेवीकोटिपरिवृतः समागत्य स्वामिनो वरकृत्यं स्वयं कृतवान् वधूकृत्यं च द्वयोरपि कन्ययोर्देव्य इति। ततस्ताभ्यां विषयमनुभवतः प्रभोः षड्लक्षपूर्वेष्वतीतेषु भरतब्राह्मीयुगलं सुमङ्गला बाहुबलिसुन्दरीयुगलं च

उसभे णं अरहा कोसलिए कासवगुत्ते णं, तस्स णं पंच नामधिज्जा एवमाहिज्जंति, तं जहा-उसभे इ वा, पढमराया इ वा, पढमभिक्खायरे इ वा, पढमजिणे इ वा, पढमतित्थयरे इ वा ॥ २१४ ॥

सुनन्दा सुषुवे, तदनु चैकोनपञ्चाशत्पुत्रयुगलानि क्रमेण सुमङ्गला प्रसूतवती ।

२१४-ऋषभोऽर्हन् कौशलिकः काश्यपगोत्रः, तस्य पञ्च नामधेयानि एवमाख्यायन्ते, तद्यथा-ऋषभ इति वा १, प्रथमराजा इति वा २, प्रथमभिक्षाचर इति वा ३, प्रथमजिन इति वा ४, प्रथमतीर्थंकर इति वा ५ ।

तत्र प्रथमराजा त्वेवं-कालानुभावात्क्रमेण प्रचुरतरकषायोदयादन्योऽन्यं विवदमानानां युगलिकानां दण्डनीतिस्तावद्विमलवाहन-चक्षुष्मत्कुलकरकालेऽल्पापराधित्वेन हकाररूपैवाभूत्, यशस्विनोऽभिचन्द्रस्य च काले त्वल्पेऽपराधे हकाररूपा महति चापराधे मकाररूपा, प्रसेनजिन्मरुदेवनाभिकुलकरकाले च जघन्यमध्यमोत्कृष्टापराधेषु क्रमेण हकारमकारधिकाररूपा दण्डनीतयोऽभूवन् । एतेषां कुलकराणां उत्पत्तिकालदेहोन्नतत्वादिवृत्तान्तस्त्वन्यटीकातोऽवसेयः । एवमपि नीत्यतिक्रमणे प्रभुं ज्ञानादिगुणाधिकं विज्ञाय युगलिकैर्विहिते निवेदने स्वाम्याह-नीत्यतिक्रमतां दण्डं सर्वं नृपः करोति, स चाभिषिक्तोऽमात्यादिपरिवृतश्च भवति' । ततस्तैरुक्तं-अस्माकमपीदृशो राजा भवतु । स्वाम्याह याचध्वमस्मज्जनकं नाभिकुलकरं, याचितस्तैर्नाभिः । ततो 'भो ! भवतां राजा ऋषभ एव' इत्युक्तवांस्ताभिः । ततस्ते राज्याभिषेकार्थमुदकानयनाय सरोवरं गताः । इतश्च शक्रः स्वजीतमिति समागत्य मुकुटकुण्डलाभरणादिपरिष्क्रियापूर्वकं प्रभुं राज्येऽभिषिञ्चति स्म । युगलिकास्तु

कमलपत्रगृहीतजलाः समागता अलङ्कृतं प्रभुमालोक्य विस्मिताः क्षणं विमृश्य प्रभोश्चरणयोर्जलं प्रक्षिप्तवन्तः। तच्च विलोक्य तुष्टः शक्रोऽचिन्तयत्–'अहो!! विनीता एते मनुजा इति द्वादशयोजनविस्तीर्णां नवयोजनविष्कम्भां विनीतानाम्नीं नगरीं निष्पादये'त्याज्ञापयद्वैश्रमणं। सोऽपि आज्ञासमनन्तरमेव रत्नकनकमयभवनपङ्क्तिप्राकारविराजितां नगरीमवासयत्। ततः स्वामिना राज्ये हस्त्यश्वगवादिसङ्ग्रहपुरस्सरं उग्रभोगराजन्यक्षत्रियलक्षणानि चत्वारि कुलानि स्थापितानि।

तदानीं च कालपरिहाण्या ऋषभस्वामिकाले कल्पवृक्षफलाभावाद्ये इक्ष्वाकवस्ते इक्षुभोजिनः, शेषास्तु प्रायः पत्रपुष्पफलभोजिनोऽग्नेरभावादपक्वशाल्याद्यौषधीभोजिनश्चाभूवन्, कालानुभावात्तदजीर्णे स्वल्पं स्वल्पतरं च भुक्तवन्तस्तस्याप्यजीर्णे भगवद्वचसा हस्ताभ्यां घृष्ट्वा त्वचमपनीय भुक्तवन्तस्तथाप्यजीर्णे प्रभूपदेशात्पत्रपुटे जलेन क्लेदयित्वा तण्डुलादीन् भुक्तवन्तः, एवमप्यजीर्णे कियन्तमपि कालं हस्ततलपुटे संस्थाप्य, तथाप्यजीर्णे कक्षासु स्वेदयित्वा, तथाप्यजीर्णे हस्ताभ्यां घृष्ट्वा पत्रपुटे क्लेदयित्वा हस्ततलसम्पुटे संस्थाप्येत्यादिबहुभिः प्रकारैरन्नभोजिनो बभूवांसः।

एवं च सत्येकदा द्रुमघर्षणान्नवोत्थितं प्रवृद्धज्वलज्ज्वालं तृणकलापं कवलयन्तं अग्निमुपलभ्याभिनवरत्नबुद्ध्या ग्रहणाय प्रसारितकरा दह्यमाना भीताः सन्तो युगलिकाः प्रभुं विज्ञपयामासुः। भगवता चाग्नेरुत्पत्तिं विज्ञाय 'भो युगलिकाः! उत्पन्नोऽग्निः, अत्र शाल्याद्यौषधीर्निधाय भुङ्ग्ध्वं, यतस्ताः सुखेन जीर्यन्ति' इत्युपाये कथिते-

उसभे णं अरहा कोसलिए दक्खे दक्खपइन्ने पडिरूवे अल्लीणे भद्दए विणीए वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसइ, वसित्ता तेवट्ठिं पुव्वसयसहस्साइं रज्जवासमज्झे वसइ, तेवट्ठिं च पुव्वसयसहस्साइं रज्जवासमज्झे वसमाणे लेहाइआओ गणियप्पहाणाओ सउणरुयपज्जवसाणाओ बावत्तरिं कलाओ, चउसट्ठिं महिलागुणे, सिप्पसयं च कम्माणं, तिन्नि वि पयाहिआए उवदिसइ। उवदिसित्ता पुत्तसयं

---

ऽध्ययनभ्यासात् सम्यगुपायमजानाना धान्यान्यग्नौ प्रक्षिप्य कल्पद्रोः फलानीव याचन्ते, अग्निना च तानि सर्वाणि दह्यमानानि दृष्ट्वा 'अहो !! अयं पापात्मा वेताल इवातृप्तः स्वयमेव सर्वं भक्षयति, नास्माकं किञ्चिदपि प्रयच्छति, अतोऽस्यापराधं स्वामिने निवेद्य शिक्षां दापयिष्यामः' इति धिया व्रजन्तः पथि करिस्कन्धाधिरूढं सम्मुखा गच्छन्तं प्रभुं वीक्ष्य यथास्थितं वृत्तान्तं न्यवेदयन्। भगवाँश्च–'कुम्भादिव्यवधानेनात्र भवद्भिर्धान्यादिप्रक्षेपो विधेयः' इत्युक्त्वा तैरेव मृत्पिण्डमानाय्य निधाय च हस्तिकुम्भे मिण्ठेन प्रथमं कुम्भकारशिल्पमदर्शयत्, उक्तवांश्च–'ईदृशानि भाण्डानि विधाय तेषु पाकं कुरुध्वं' इति। एवं भगवदुक्तमुपायं सम्यगुपलभ्य तथैव कृतवन्तस्ते, अतः प्रथमं कुम्भकारशिल्पं प्रवर्त्तितं, ततो लोहकार-चित्रकार-तन्तुवाय-नापितलक्षणानि चत्वारि शिल्पानि। पञ्चानामप्येतेषां मूलशिल्पानां प्रत्येकं विंशत्या भेदैः शिल्पशतं भवति।

२१५–ऋषभोऽर्हन् कौशलिको दक्षो दक्षप्रतिज्ञः प्रतिरूप 'आलीनः' सर्वगुणैरालिङ्गितः 'भद्रकः' सरलो विनीतो विंशतिः पूर्वशतसहस्राणि कुमारवासमध्ये वसति, उषित्वा त्रिषष्टिः पूर्वशतसहस्राणि राज्यवासमध्ये वसति, त्रिषष्टिः पूर्वशतसहस्राणि राज्यवासमध्ये वसंश्च लेखादिका 'गणितप्रधाना' गणितमध्याः 'शकुनरुत-

पर्यवसानाः' पक्षिशब्दज्ञानप्रान्ताः, एवंविधाः पुरुषस्य द्वासप्ततिकलाः ×, चतुःषष्टिः 'महिलागुणाः' स्त्रीकलाः+,

---

× "लिखितं गणितं गीतं, नृत्यं वाद्यं च पठनशिक्षे च । ज्योतिश्छन्दोऽलङ्कृति-व्याकरणनिरुक्तिकाव्यानि ॥ १ ॥ कात्यायननिघण्टु-गजतुरगारोहणं तयोः शिक्षा । शास्त्राभ्यासो रसमन्त्र-यन्त्रविषखन्यगन्धवादाश्च ॥ २ ॥ प्राकृतसंस्कृतपैशा-चिकाऽपभ्रंशाः स्मृतिः पुराणविधी । सिद्धान्ततर्कवैद्यक-वेदागमसंहिते-तिहासाश्च ॥ ३ ॥ सामुद्रिकविज्ञाना-ऽऽचार्यकविद्या रसायनं कपटम् । विद्यानुवाददर्शन-संस्कारौ धूर्त्तशम्बलकम् ॥४॥ मणिकर्मतरुचिकित्सा-खेचर्यमरी किलेन्द्रजालं च । पातालसिद्धियन्त्रक-रसवत्यः सर्वकरणी च ॥ ५ ॥ प्रासादलक्षणं पण-चित्रोपललेपचर्मकर्माणि । पत्रच्छेदनखच्छेद-पत्रपरीक्षा वशीकरणम् ॥ ६ ॥ काष्ठघटनदेशभाषा-गारुडयोगाङ्गधातुकर्माणि । केवलिविधिशकुनरुते, इति पुरुषकला द्विसप्ततिर्ज्ञेयाः ॥ ७ ॥"

+ "ज्ञेया नृत्यौचित्ये, चित्रं वादित्रमन्त्रतन्त्राश्च । घनवृष्टिफलाकृष्टी, संस्कृतजल्पः क्रियाकल्पः ॥ १ ॥ ज्ञानविज्ञानदम्भा-म्बुस्तम्भा गीततालयोर्मानम् । आकारगोपनाऽऽराम-रोपणे काव्यशक्तिवक्रोक्ती ॥ २ ॥ स्त्रीनरलक्षणे गजहय-परीक्षणे वास्तुशुद्धिलघुबुद्धी । शकुनविचारो धर्मा-चारोऽञ्जनचूर्णयोर्योगाः ॥ ३ ॥ गृहिधर्मसुप्रसादन-कर्म कनकसिद्धिवर्णिकावृद्धी । वाक्-पाटवकरलाघव-ललितचरणतैलसुरभिताकरणे ॥ ४ ॥ भृत्योपचारगेहा-चारौ व्याकरणपरनिराकरणे । वीणानादवितण्डा-वादाऽङ्कस्थितिजनाचाराः ॥ ५ ॥ कुम्भभ्रमसारिश्रम-सुरत्नमणिभेदलिपिपरिच्छेदाः । वैद्यक्रिया च कामा-ऽऽविष्करणं रन्धनं चिकुर-बन्धः ॥ ६ ॥ शालीखण्डनमुखम-ण्डने कथाकथनकुसुमसुग्रथने । वरवेषसर्वभाषा-विशेषवाणिज्यभोज्यानि ॥ ७ ॥ अभिधान-परिज्ञाना-ऽऽभरणयथास्थानविविधपरिधाने । अन्त्याक्षरिका प्रश्न-प्रहेलिका स्त्रीकलाश्चतुःषष्टिः ॥ ८ ॥"

त्तगए अभिसिंचइ। अभिसिंचित्ता पुणरवि लोअंतिएहिं जीअकप्पिएहिं देवेहिं ताहिं इट्ठाहिं जाव वग्गूहिं, सेसं तं चेव सवं भाणिअवं,

कर्मणां—कृषिवाणिज्यादीनां मध्ये कुम्भकारशिल्पादिकं प्रागुक्तं सोत्तरभेदं शिल्पशतमपि भगवतोपदिष्टं, अत एवानाचार्योपदेशजं कर्म आचार्योपदेशजं च शिल्पमिति कर्मशिल्पयोर्विशेषमामनन्ति, कर्माणि हि क्रमेण स्वयमुत्पन्नानि। त्रीण्यप्येतानि—द्वासप्ततिपुरुषकलाश्चतु.षष्टिमहिलागुणाः शिल्पशताख्यानि वस्तूनि प्रजाहिताय भगवानुपदिशति स्म। तत्र लिखनं हंसलिप्याद्यष्टादशविधं नन्दिसूत्रोक्तं, तच्च भगवता दक्षिणकरेण ब्राह्म्या उपदिष्टं। गणितं तु—

"एकं दश शतं चैव, सहस्रमयुतं तथा। लक्षं च नियुतं चैव, कोटिरर्बुदमेव च ॥ १ ॥"

"वृन्दं खर्वो निखर्वश्च, शङ्कः पद्मश्च सागरः। अन्त्यं मध्यं परार्धं च, दश सङ्ख्या यथाक्रमम् ॥ २ ॥" युग्मम् ॥

उन्मादिकं सुन्दर्या वामहस्तेन, काष्ठकर्मादिरूपं कर्म भरतस्य, पुरुषादिलक्षणं च बाहुबलिन उपदिशति स्म। उपदिश्य पुत्रशतं राज्यशतेऽभिषिञ्चति। तत्र भरतस्य विनीतायां मुख्यं राज्यं बाहुबलेश्च बहलीदेशे तक्षशिलायां राज्यं दत्त्वा शेषाणामष्टनवतिसुतानां × भिन्नभिन्नदेशान् विभज्य दत्तवान्।

---

× तेषां नामानि त्विमानि—मस्तकः ३, पुत्राङ्गारकः ४, मल्लिदेवः ५, अङ्गज्योतिः ६, मलयदेवः ७, भार्गवनाथः ८, अ(व)न्तदेवः ९, वसुदेवः १०, मगधनाथः ११, मानवर्त्तिकः १२, मानयुक्तः १३, वैदर्भदेवः १४, वनवासनाथः १५, महीपकः १६, धर्मराष्ट्रः १७, नायकदेवः १८, आश्मकः १९, दण्डकः २०, कलिङ्गः २१, ईषिकदेवः २२, पुरुषदेवः २३, अकलः २४, भोगदेवः २५, वीर्ययोगः २६, गणनाथः २७, तीर्णनाथः २८, अर्बुदपतिः २९, आयुर्वीर्यः ३०, वह्लीवसुः ३१,

नायकः ३२, काक्षिकः ३३, आनर्त्तकः ३४, सारिकः ३५, ग्रहेशः ३६, रुरुदेवः ३७, कच्छनाथः ३८, सुराष्ट्रः ३९, नर्मदः ४०, सारस्वतः ४१, तापसदेवः ४२, कुरुः ४३, जङ्गलः ४४, पञ्चालः ४५, शूरसेनः ४६, पुटपुरः ४७, कलिङ्गदेवः ४८, काशिकुमारः ४९, कौशल्यः ५०, भद्रकाशः ५१, विकाशकः ५२, त्रिगर्त्तः ५३, आवर्षः ५४, सालुः ५५, मत्स्यदेवः ५६, कुलीयकः ५७, मूषकदेवः ५८, बाह्लीकः ५९, काम्बोजः ६०, मधुनाथः ६१, सान्द्रकः ६२, आत्रेयः ६३, यवनः ६४, आभीरः ६५, वानदेवः ६६, वानसः ६७, कैकेयः ६८, सिन्धुः ६९, सौवीरः ७०, गन्धारः ७१, काष्ठदेवः ७२, तोषकः ७३, शौरकः ७४, पद्मनाभः ७५, भारद्वाजः ७६, सूरदेवः ७७, प्रस्थानः ७८, कर्णकः ७९, त्रिपुरनाथः ८०, अवन्तिनाथः ८१, देवपतिः ८२, किष्किन्धः ८३, नैषधः ८४, दशार्णनाथः ८५, कुसुमवर्णः ८६, भूपालदेवः ८७, पालनाथः ८८, कुशलः ८९, पद्मः ९०, विनिद्रः ९१, वैकेशः ९२, वैदेहः ९३, कच्छपतिः ९४, भद्रदेवः ९५, वज्रदेवः ९६, सान्द्रभद्रः ९७, सेनजः ९८, वत्सनाथः ९९, अङ्गदेवः १०० इति" कल्पलताप्रभृतिषु, सुबोधिका-किरणावल्यादौ तु शङ्खादिप्रभञ्जनावसानानि भरताष्टनवति-भ्रातृनामान्युपलभ्यन्ते, तत्र नामान्तराणि मतान्तरं वा कारणमनुमीयते । तथा—

"कीर[1]-काश्मीर[2]-काम्बोज[3]—काबेर[4]-कमल[5]ोत्कल[6]ाः । करहाट[7]-कुरु[8]-क्वाण[9]—क्रथ[10]-कैशक[11]-कोशल[12]ाः ॥ १ ॥"
"कोश[13]-कारूत[14]-कारूष[15]—कच्छ[16]-कर्णाट[17]-कीट[18]काः । [19]केकि-कोल्ल[20]गिरि-काम—रूप[21]-कुङ्कण[22]-कुन्तल[23]ाः ॥ २ ॥"
"कलिङ्ग[24]-कालकूटौ[25] च, कलकण्ठ[26]श्च केरल[27]ः । [28]खस-खर्पर[29]-खेट[30]ाश्च, गौडा[31]-ज्ञौ[32] गोप्य[33]-गाङ्गकौ[34] ॥ ३ ॥"

इत्यादीनि देशशतनामान्यप्युपलभ्यन्तेऽन्तर्वाच्यादौ, परं नेहोल्लिखितानि सर्वाणि ग्रन्थगौरवभिया ।

जाव एगं वासमणं परिभाइत्ता जे से गिम्हाणं पढमे मासे पढमे पक्खे चित्तबहुले, तस्स णं चित्तबहुलस्स अट्ठमीपक्खेणं दिवसस्स पच्छिमे भागे सुदंसणाए सीयाए सदेवमणुआसुराए परिसाए समणुगम्ममाणमग्गे, जाव विणीयं रायहाणिं मज्झंमज्झेणं णिग्गच्छइ। णिग्गच्छित्ता जेणेव सिद्धत्थवणे उज्जाणे जेणेव असोगवरपायवे, तेणेव उवागच्छइ। उवागच्छित्ता असोगवरपायवस्स अहे०, जाव सयमेव चउमुट्ठियं लोयं करेइ। करित्ता छट्ठेणं भत्तेणं अपाणएणं आसाढाहिं नक्खत्तेणं जोगमुवागएणं उग्गाणं भोगाणं राइण्णाणं खत्तियाणं च चउहिं पुरिससहस्सेहिं सद्धिं एगं देवदूसमादाय मुंडे भवित्ता अगाराओ अणगारियं पव्वइए॥ २१५॥

राज्ये चाभिषिच्य पुनरपि लोकान्तिकैर्जीतकल्पिकैर्देवैस्ताभिरिष्टाभिर्याविद्वाग्भिर्दीक्षार्थमभ्यर्थितः, शेषं तदेव वीरचरित्रोक्तं सर्वं भणितव्यं, यावत् 'दानं' धनं 'दायिकानां' गोत्रिकाणां 'परिभाज्य' दत्त्वा योऽसौ ग्रीष्मस्य प्रथमो मासः प्रथमः पक्षश्चैत्रबहुलस्तस्य चैत्रबहुलस्याष्टमीदिवसे दिवसस्य पश्चिमे भागे सुदर्शनेत्यभिधायां शिविकायां सदेवमनुजासुरया 'पर्षदा' जनसमूहेन सम्यगनुगम्यमानमार्गो यावद्विनीताया राजधान्या मध्यंमध्येन निर्गच्छति। निर्गत्य यत्रैव सिद्धार्थवनमुद्यानं यत्रैवाशोकवरपादपस्तत्रैवोपागच्छति। उपागत्याशोकवरपादपस्याधः शिविकां स्थापयति, यावत्स्वयमेव चतुर्मौष्टिकं लोचं करोति। चतसृभिर्मुष्टिभिर्लोचे कृतेऽवशिष्टां किलैकां मुष्टिं स्वर्णवर्णांशयोरुपरि लुठन्तीं कनककलशे नीलोत्पलमालेव शोभमानां वीक्ष्य मुदितेनेन्द्रेण साग्रहं विज्ञप्तो भगवान् रक्षितवान्। लोचं कृत्वा षष्ठेन भक्तेनापानकेन, उग्राणां भोगानां राजन्यानां क्षत्रियाणां च कच्छमहाकच्छादिभिश्चतुर्भिः पुरुषसहस्रैः 'यथा स्वामी करिष्यति तथा वयमपि करिष्यामः' इति कृतनिर्णयैः सार्द्धं एकं शक्रदत्तं देवदूष्यमादाय मुण्डो भूत्वाऽगारान्निष्क्रम्यानगारितां प्रव्रजितः।

उसभे णं अरहा कोसलिए एगं वाससहस्सं निच्चं वोसट्ठकाए चियत्तदेहे, जे केइ उवसग्गा० जाव अप्पाणं भावेमाणस्स इक्कं वास-

सूत्रं २१६ ऋषभसोपसर्गसहनं

२१६–ऋषभोऽर्हन् कौशलिक एकं वर्षसहस्रं यावन्नित्यं व्युत्सृष्टकायस्त्यक्तदेहः सन् ये केऽप्युपसर्गा उत्पन्नास्तान् सम्यक् सहमानो विचरति स्म।

कच्छ-महाकच्छादीनां तापसभवनं

तदानीं जनस्यातिसमृद्धत्वादर्थिनां चाभावात् 'का भिक्षा? के वा भिक्षाचरा' इति कोऽपि न जानाति, ततस्ते सह प्रव्रजिताः क्षुधादिपीडिताः प्रभुमापृच्छन्ति, प्रभुस्तु मौनावलम्बी न किमपि प्रतिवक्ति, ततस्तैः कच्छमहाकच्छौ प्रति विज्ञप्तिः कृता, तावप्यूचतुः–यदावामप्याहारादिविधिं न जानीवः, यदि प्रागेव भगवान् पृष्टोऽभविष्यत्तदा शोभनमभविष्यत्, गृहे गन्तुमप्ययुक्तं भरतलज्जया, आहारमन्तरेण च स्थातुमशक्यं, अतो वनवास एव श्रेयान्, इति विचार्य प्रभुमेव ध्यायन्तो परिणतपतितफलपत्राद्युपभोगिनोऽसंस्कृतकूर्चशिरोजा जटिलास्तापसाः सञ्जाताः।

इतश्च कच्छमहाकच्छसुतौ भगवता पुत्रत्वेन प्रतिपन्नौ नमिविनमिनामानौ देशान्तरादायातौ भरतेन दीयमानं राज्यमवगणय्य पितुर्वाक्यात्प्रभुसमीपमागत्य कायोत्सर्गस्थे भगवति कमलपत्रैर्जलमानीय सर्वतो भूमिसिञ्चनं जानुप्रमाणकुसुमोच्चयं च कृत्वा पञ्चाङ्गप्रणिपातपूर्वकं 'भगवन्! राज्यभागप्रदो भवे'ति प्रत्यहं विज्ञपयन्तौ जिनं सिषेवतुः। अन्यदा च तौ तथा वीक्ष्य वन्दनार्थमागतो धरणेन्द्रो प्रभुभक्त्या सन्तुष्टोऽवादीत्–'भो! भगवान्निस्सङ्गो, मा भगवन्तं याचेथां, प्रभुभक्त्या तुष्टोऽहमेव युवाभ्यां दास्यामी'ति भणित्वा अष्टचत्वारिंश-

॥ १४८ ॥

दसहस्रसङ्ख्याका विद्याः, गौरी-गन्धारी-रोहिणी-प्रज्ञप्तिलक्षणाश्चतस्रो महाविद्याश्च पाठसिद्धा दत्तवान्। यच्चोक्तं किरणावलीकारेण 'षट्चत्वारिंशत्सङ्ख्याका' इति तदनाघ्रातसिद्धान्तार्थगन्धत्वाभिव्यञ्जकं, हारिभद्रीयावश्यकवृत्त्यादौ अष्टचत्वारिंशत्सहस्राणामेवोक्तत्वात्। उक्तवांश्च नागेन्द्रः—'इमाभिर्विद्याधरर्द्धिप्राप्तौ सन्तौ युवां स्वजनादिकं लात्वा यातं वैताढ्यपर्वते, तत्र दक्षिणश्रेण्यां गौरेयगान्धारादीनष्टौ निकायान् रथनूपुरचक्रवालादिपञ्चाशन्नगराणि, उत्तरश्रेण्यां च पण्डकवंशालयादीनष्टौ निकायान् गगनवल्लभादीनि च षष्टिनगराणि निवास्य विहरतमिति, ततस्तौ कृतकृत्यौ स्वपित्रोर्भरतस्य च तं वृत्तं निवेद्य दक्षिणश्रेण्यां नमिः उत्तरश्रेण्यां च विनमिस्तस्थतुः।

प्रभुश्चाहारादिदानानिपुणैः समृद्धिमद्भिर्जनैर्वस्त्रादिभिर्निमन्त्र्यमाणोऽपि योग्यां भिक्षामलभमानोऽदीनचित्तो हस्तिनागपुरे गतस्तत्रावश्यकवृत्त्यनुसारेण बाहुबलिपौत्रः श्रेयांसो युवराजत्वे वर्त्तते, तस्यामेव निशायां—

"श्रेयांसः श्याममेकं स्वयममृतघटैः सिक्तमैक्षिष्ट दीप्तं, तेनैवार्कच्युतांशून् दिनकृति निहितान् श्रेष्ठिमुख्यः सुबुद्धिः। स्वप्नं शत्रूञ्जयन्तं भटमथ नृपतिस्तस्य सान्निध्यतोऽमी, प्रोचुः स्वप्नान् मिथोऽभूदवददथ च कोऽप्यस्ति लाभः कुमारे॥ १॥"

ततो विसर्जिता सभा, सर्वे स्वस्थानं गताः। श्रेयांसोऽपि स्वमन्दिरं गत्वा गवाक्षस्थो 'न किञ्चिद्गृह्णाति स्वामी'ति जनकोलाहलं श्रुत्वा प्रभुं च वीक्ष्य—'मया क्वापीदं नेपथ्यं दृष्टपूर्वं' इतीहापोहं कुर्वन् जातिस्मरणमवाप।

"विवेद चैवं यत्पूर्वं—विदेहे चक्रवर्त्त्यभूत्। भगवान् वज्रनाभोऽयं, जातोऽहं चास्य सारथिः॥ १॥"

"तस्मिन्नेव भवे भर्त्तु-र्वज्रसेनाभिधः पिता । ईदृशं तीर्थकृल्लिङ्गं, धारयन्नीक्षितो मया ॥ २ ॥"
"स्वामिनो वज्रसेनस्य, पादान्ते समुपाददे । वज्रनाभः परिव्रज्या-महमप्यस्य पृष्ठतः ॥ ३ ॥"
"अर्हतो वज्रसेनस्य, मुखादश्रौषमित्यहम् । भरते वज्रनाभोऽसौ, भावी प्रथमतीर्थकृत् ॥ ४ ॥"
"स्वयम्प्रभादींश्च भवान्, पर्यटममुना सह । अधुना वर्त्तते स्वामी, ममैष प्रपितामहः ॥ ५ ॥"

तदानीमेव तस्यैको नरः प्रधानेक्षुरसकुम्भौघप्राभृतमादायागतः, ततोऽसौ तत्कुम्भमादाय 'भगवन् ! गृहाणेमां योग्यां भिक्षा'मित्यवदत् । भगवताऽपि हस्तौ प्रसारितौ, निसृष्टश्च तेन समग्रोऽपि रसः ।

"भूयानपि रसः पाणि-पात्रे भगवतो ममौ । श्रेयांसस्य तु हृदये, ममुर्नहि मुदस्तदा ॥ १ ॥"
"स्त्यानो नु स्तम्भितोऽन्वासीद् , व्योम्नि लग्नशिखो रसः । अञ्जलौ स्वामिनोऽचिन्त्य-प्रभावाः प्रभवः खलु ॥२॥"

अत्र कविः—"स्वाम्याह दक्षिणं हस्तं, कथं भिक्षां न लासि ? भोः ! । स प्राह दातृहस्तस्या-धो भवामि ? कथं प्रभो ! ॥"
यतः—"पूजाभोजनदानशान्तिककलापाणिग्रहस्थापना-चोक्षप्रेक्षणहस्तकार्पणमुखव्यापारबद्धस्त्वहम् ।"

इत्यभिधाय स्थिते दक्षिणहस्ते— [ ॥ ४ ॥"

"वामोऽहं रणसम्मुखाङ्कगणनावामाङ्गशय्यादिकृत्, द्यूतादिव्यसनी त्वसौ स तु जगौ चोक्षोऽस्मि न त्वं शुचिः ॥
ततः—"राज्यश्रीर्भवताऽर्जितार्थिनिवहस्त्यागैः कृतार्थी कृतः, सन्तुष्टोऽपि गृहाण दानमधुना तन्वन् दयां दानिषु ।"
"इत्यद्वं प्रतिबोध्य हस्तयुगलं श्रेयांसतः कारयन्, प्रत्यग्रेक्षुरसेन पूर्णमृषभः पायात्स वः श्रीजिनः ॥५॥"

ततस्तेन रसेन भगवतः पारणकमभूत्। जातानि च दुन्दुभिनादादिपञ्चदिव्यानि।

"राधशुक्लतृतीयायां, दानमासीत्तदक्षयम्। पर्वाक्षयतृतीयेति, ततोऽद्यापि प्रवर्त्तते ॥ १ ॥"

"श्रेयांसोपज्ञमवनौ, दानधर्मः प्रवृत्तवान्। स्वाम्युपज्ञमिवाशेष–व्यवहारनयक्रमः ॥ २ ॥"

ततस्तत्र मिलितान्नागरजनान् श्रेयांसः प्रज्ञापयति–'भो जनाः! सद्गतिलिप्सया एवं शुद्धैषणीयाहार-भिक्षा देया' इति। 'त्वया कथं ज्ञातमेत'दिति लोकैः पृष्टः स्वामिना सह स्वीयमष्टभवसम्बन्धमाचष्ट–

यदा प्रभुरीशाने ललिताङ्गो ×देवस्तदाऽहं निर्नामिकेति पूर्वभवाख्या स्वयम्प्रभानाम्नी देवी १, ततः पूर्वविदेहे पुष्कलावतीविजये लोहार्गले नगरे भगवान् वज्रजङ्घस्तदानीमहं श्रीमती भार्या २, तत उत्तरकुरौ भगवान् युगलिकोऽहं च युगलिनी ३, तत आद्ये कल्पे द्वावपि मित्रदेवौ ४, ततः पश्चिमविदेहे भगवान् वैद्यपुत्रोऽहं जीर्णश्रेष्ठिपुत्रः केशवाख्यो मित्रं ५, ततोऽच्युते कल्पे देवौ ६, ततः पुण्डरीकिण्यां भगवान् वज्रनाभश्चक्री अहं च सारथिः ७, ततस्सर्वार्थसिद्धे देवौ ८, इह प्रभोः प्रपौत्र इति ९।

"एतच्छ्रुत्वा च ते सर्वे, श्रेयांसं साधुसाध्विति। भाषमाणाः प्रमुदिताः, स्थानं निजं निजं ययुः ॥ १ ॥"

---

× प्रभोः सम्यक्त्वप्राप्तितआरभ्य त्रयोदशभवेषु पञ्चमोऽयं भवः। त्रयोदशभवाश्चैते–"सार्थवाहो 'धनो' युग्म–धर्मी सौधर्मगः सुरः। 'महाबलो' महीजानि–रीशाने 'ललिताङ्गकः' ॥ १ ॥ विबुधो 'वज्रजङ्घा'ख्यो, राजा युगलधर्मवान्। सौधर्मे त्रिदशो वैद्यो–ऽच्युतकल्पगतः सुरः ॥ २ ॥ 'वज्रनाभ'श्चक्री, सुरः सर्वार्थसिद्धिगः। अर्हन्नादिजिनेशस्य, त्रयोदश भवा इति ॥ ३ ॥"

सहस्सं विइक्कंतं, तओ णं जे से हेमंताणं चउत्थे मासे सत्तमे पक्खे फग्गुणबहुले, तस्स णं फग्गुणबहुलस्स इक्कारसीपक्खे णं पुव्वण्ह-कालसमयंसि पुरिमतालस्स नगरस्स बहिआ सगडमुहंसि उज्जाणंसि नग्गोहवरपायवस्स अहे अट्ठमेणं भत्तेणं अपाणएणं आसाढाहिं नक्खत्तेणं जोगमुवागएणं झाणंतरिआए वट्टमाणस्स अणंते० जाव जाणमाणे पासमाणे विहरइ ॥ २१६ ॥

---

"कृतपारणकः स्वामी, श्रेयांससदनात्ततः । जगामान्यत्र नैकत्र, तिष्ठेच्छद्मस्थतीर्थकृत् ॥ २ ॥"

कदाचिद्विहरन्सन्ध्यायां बहलीदेशे तक्षशिलाया उद्याने गत्वा प्रतिमया स्थितः प्रभुः, वनपालकेन वर्द्धापितो बाहुबलिः सन्ध्याकालत्वात्तत्क्षणमनागत्य प्रातर्महताऽऽडम्बरेण वन्दनार्थमागतः, परं विभातायामेव विभावर्यां प्रभुर्विहृतः, अतस्तत्र प्रभुमनवलोक्योच्चैः पुचकार, चकार च प्रभुपदस्थाने चिह्नरूपं सर्वरत्नमयं धर्मचक्रं ।

एवं प्रव्रज्यादिनादारभ्य वर्षसहस्रं प्रभोश्छद्मस्थकालस्तत्र सर्वसङ्कलितोऽपि प्रमादकालोऽहोरात्रः । एवं च यावदात्मानं भावयत एकं वर्षसहस्रं व्यतिक्रान्तं । ततश्च योऽसौ 'हेमन्तस्य' शीतकालस्य चतुर्थो मासः सप्तमः पक्षः फाल्गुनबहुलस्तस्य फाल्गुनबहुलस्य एकादशीदिवसे पूर्वाह्णकालसमये पुरिमतालस्य नगरस्य—विनीतायाः शाखापुरविशेषस्य बहिस्ताच्छकटमुखाख्ये उद्याने न्यग्रोधवरपादपस्याधस्तादष्टमेन भक्तेनापानकेन उत्तराषाढानक्षत्रेण चन्द्रयोगमुपागते सति ध्यानान्तरिकायां वर्त्तमानस्य—शुक्लध्यानस्याद्यपादद्वयं ध्यायमानस्यानन्तवस्तुविषयं केवलमुत्पन्नं, यावत्सर्वभावान् जानन् पश्यंश्च विहरति ।

एवं च वर्षसहस्रे व्यतिक्रान्ते पुरिमतालाख्ये विनीताशाखापुरे स्वामिनः केवलज्ञानमुत्पन्नं, तदैव च भरतस्य

चक्ररत्नमपि, युगपद् द्वयोर्वर्द्धापनयोः समागमने विषयतृष्णाया विषमत्वेन 'प्राक्तातं पूजयामि उत चक्र'मिति क्षणं विमृश्य 'इहपरलोकहिते ताते पूजिते केवलमिहलोकसुखदं चक्रं पूजितमेवे'ति सम्यङ् निश्चित्य भरतः प्रत्यहमनुपालम्भयन्तीं मरुदेवां हस्तिस्कन्धे पुरतः कृत्वा महताऽऽडम्बरेण प्रभुं वन्दितुमगात्, प्रत्यासन्ने च समवसरणे 'मातः! पश्य स्वपुत्रर्द्धि' इति भरतेन भणिता मरुदेवा हर्षपुलकिताङ्गी प्रमोदाश्रुपूरैर्विगलितनेत्रपटला प्रमोदछत्रचामरादिप्रातिहार्यलक्ष्मीं विलोक्य चिन्तयामास–'धिग् धिङ् मोहविह्वलान् जन्तून्, स्वार्थे स्निह्यन्ति सर्वेऽपि जन्तवः, यतो मम ऋषभदुःखेन रुदत्या नेत्रेऽपि हीनतेजसी जाते, ऋषभस्तु एवं सुरासुरनरैः सेव्यमान ईदृशीं समृद्धिं भुञ्जानोऽपि मम सुखवार्त्तासन्देशमपि न प्रेषयति, ततो धिगिमं स्नेहं इत्यादि भावयन्ती साऽन्तकृत्केवलीत्वमवाप्य मुक्तिं गता। ततो 'भरतक्षेत्रे प्रथमसिद्ध' इति कृत्वा देवैस्सम्पूज्य देहं क्षीरोदधौ प्रक्षिप्तम्।

अत्र कविः–"पुत्रो युगादीशसमो न विश्वे, भ्रान्त्वा क्षितौ येन शरत्सहस्रम्।"
"यदर्जितं केवलरत्नमग्र्यं, स्नेहात्तदेवार्प्यत मातुराशु ॥ १ ॥"

"मरुदेवासमा नाम्ना, याऽगात्पूर्वं किलेक्षितुम्। मुक्तिकन्यां तनूजार्थं, शिवमार्गमपि स्फुटम् ॥ २ ॥"

भगवानपि समवसरणे धर्ममकथयत्, तत्र ऋषभसेनाद्याः पञ्च शतानि भरतस्य पुत्राः सप्तशतानि पौत्राश्च प्रव्रजितास्तेषु ऋषभसेनाद्याश्चतुरशीतिर्गणधराः स्थापिताः, ब्राह्म्यपि प्रव्रजिता, भरतश्च "भरहो सावओ" इत्याव०चू० वचनात् श्रावकत्वमग्रहीत्, स्त्रीरत्नं भावीति भरतेन निरुद्धा सुन्दर्यपि श्राविका जातेति चतुर्विधसङ्घस्थापना।

"येऽपि च तापसाः कच्छ-महाकच्छविवर्जिताः। तेऽपि प्रपेदिरे दीक्षां, समेत्य स्वामिनोऽन्तिके ॥ १ ॥"

भरतस्तु शक्रविनिवर्त्तितमरुदेवाशोकः स्वस्थानं जगाम। तत्र चाष्टाह्निकोत्सवेन चक्ररत्नं प्रपूज्य शुभेऽह्नि प्रयाणं कृत्वा भरतक्षेत्रस्य षट्खण्डानि साधयित्वा षष्टिवर्षसहस्रैः स्वगृहमागतः, परं चक्रमायुधशालायां नाविशत्। भरतेन तत्कारणे पृष्टे मन्त्रिभिरुक्तं—तवानुजा नवनवतिर्नायाता इति। ततो भरतेन बाहुबलिवर्जाष्टनवतिभ्रातृभ्यो 'भवद्भिर्मदाज्ञा मान्ये'ति दूतमुखेनावाचि। ते च सम्मिलित्वा 'किमाज्ञां मन्यामहे? उत युद्धं कुर्मः' इति प्रष्टुं प्रभुसमीपे गताः, प्रभुणाऽपि वैतालीयाध्ययनश्रावणेन सम्बोध्य दीक्षिता इति। तदनु बाहुबलिने प्रेषितो दूतः, स तु क्रोधान्धदर्पोद्धुरः सन् स्वसैन्ययुतः सम्मुखमागत्य भरतेन द्वादशाब्दीं यावद्युद्धमकरोत्, परं न कोऽपि हारितः, तदा प्रभूततरं जनसंहारं भवन्तं ज्ञात्वा शक्रेणागत्य दृष्टि-वाग्-बाहु-मुष्टि-दण्ड-लक्षणाः पञ्च युद्धा नियुक्ताः, तेष्वपि भरतस्यैव पराजयो जातः, तदा क्रोधादृध्मातो भरतो बाहुबलिन उपरि चक्रममुञ्चत्, परमेकगोत्रीयत्वान्न पराभवत्तं। तदाऽमर्षवशाद्भरतं हन्तुमना मुष्टिमुत्पाट्य धावन् बाहुबली अहो!! पितृतुल्याग्रजहननं ममानुचितमेव, उत्पाटिता मुष्टिरपि कथं मोघा भवेदिति विमृश्य तां स्वशिरसि विमुच्य लोचं विधाय सर्वं सावद्यं परित्यज्य प्रव्रजितः। ततो भरतस्तं नमस्कृत्य स्वापराधं क्षमयित्वा स्वस्थानं गतः। बाहुबली तु 'पर्यायज्येष्ठाँल्लघुबान्धवान् कथं नमामि?, अतो यदा केवलमुत्पत्स्यते तदैव स्वाम्यन्तिके यास्यामी'ति विचिन्त्य वर्षं यावत्कायोत्सर्गेणैवास्थात्। वर्षान्ते च भगवत्प्रेषिताभ्यां स्वभगिनीभ्यां 'हे भ्रातः!

उसभस्स णं अरहओ कोसलिअस्स चउरासीइं गणा चउरासीइं गणहरा हुत्था ॥ २१७ ॥

उसभस्स णं अरहओ कोसलिअस्स उसभसेणपामुक्खाणं चउरासीइओ समणसाहस्सीओ, उक्कोसिआ समणसंपया हुत्था ॥ २१८ ॥

उसभस्स णं० बंभि-सुंदरिपामुक्खाणं अज्जियाणं तिण्णि सयसाहस्सीओ, उक्कोसिया अज्जियासंपया हुत्था ॥ २१९ ॥

उसभस्स णं० सिज्जंसपामुक्खाणं समणोवासगाणं तिण्णि सयसाहस्सीओ पंचसहस्सा, उक्कोसिया समणोवासगसंपया हुत्था ॥२२०॥

उसभस्स णं अरहओ कोसलिअस्स सुभद्दापामुक्खाणं समणोवासियाणं पंचसयसाहस्सीओ चउपण्णं च सहस्सा, उक्कोसिया

---

गजादुत्तर' इत्याद्युक्त्वा प्रतियोधितः सन् यावच्चरणौ उदक्षिपत्तावत्केवलमप्रापत्। ततः प्रभुपार्श्वे गत्वा चिरं विहृत्य स्वामिना सहैव मोक्षं गतः। भरतोऽपि चिरं चक्रवर्त्तित्वमनुभवन्नन्यदाऽऽदर्शभवने मुद्रिकाशून्यामङ्गुलीं निरीक्ष्यानित्यत्वं भावयन् केवलमवाप्य दशसहस्रनृपैस्सह देवतादत्तं वेषं परिधाय चिरं विहृत्य शिवमगादिति।

२१७–ऋषभस्यार्हतः कौशलिकस्य चतुरशीतिर्गणाश्चतुरशीतिरेव च गणधरा अभवन्।

२१८–ऋषभस्यार्हतः कौशलिकस्य ऋषभसेनप्रमुखाणां चतुरशीतिश्रमणसहस्राण्युत्कृष्टा श्रमणसम्पदाऽभ०

२१९-ऋषभस्यार्हतः कौ० ब्राह्मीसुन्दरीप्रमुखाणामार्यिकाणां त्रीणि शतसहस्राण्युत्कृष्टा आर्यिकासम्पदाऽभ०

२२०–ऋषभस्यार्हतः कौशलिकस्य श्रेयांसप्रमुखाणां श्रमणोपासकानां त्रीणि शतसहस्राणि पञ्च सहस्राणि च उत्कृष्टा श्रमणोपासकसम्पदाऽभवत्।

२२१–ऋषभस्यार्हतः कौशलिकस्य सुभद्राप्रमुखाणां श्रमणोपासिकानां पञ्च शतसहस्राणि चतुष्पञ्चाशच्च सहस्राणि उत्कृष्टा श्रमणोपासिकानां सम्पदाऽभवत्।

समणोवासियाणं संपया हुत्था ॥२२१॥ उसभस्स णं अरहओ कोसलिअस्स चत्तारि सहस्सा सत्तसया पण्णासा चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं, जाव उक्कोसिया चउद्दसपुव्वीणं संपया हुत्था ॥ २२२ ॥

उसभस्स णं० नव सहस्सा ओहिनाणीणं, उक्कोसिया ओहि० ॥२२३॥ उसभस्स णं० वीससहस्सा केवलनाणीणं, उक्कोसिया केवल० उसभस्स णं० वीससहस्सा छच्च सया वेउव्वियाणं०, उक्कोसिया वेउ० ॥ २२५ ॥

उसभस्स णं० वारससहस्सा छच्च सया पण्णासा विउलमईणं अड्ढाइज्जेसु दीवसमुद्देसु सन्नीणं पंचिंदियाणं पज्जत्तगाणं मणोगए भावे जाणमाणाणं, उक्कोसिया विउलमइसंपया हुत्था ॥ २२६ ॥ उसभस्स णं० वारससहस्सा छच्च सया पण्णासा वाईणं०, उक्को०वा०२२७

---

२२२–ऋषभस्यार्हतः कौशलिकस्य चत्वारि सहस्राणि सप्तशतानि पञ्चाशदधिकानि च चतुर्दशपूर्विणां अजिनानामपि जिनसङ्काशानां यावदुत्कृष्टा चतुर्दशपूर्विणां सम्पदाऽभवत् ।

२२३–ऋषभस्यार्हतः कौशलिकस्य नव सहस्राणि अवधिज्ञानिनां, उत्कृष्टा अवधिज्ञानिसम्पदाऽभवत् ।

२२४–ऋषभस्यार्हतः कौशलिकस्य विंशतिसहस्राणि केवलज्ञानिनां उत्कृष्टा केवलज्ञानिसम्पदाऽभवत् ।

२२५–ऋषभस्यार्हतः कौशलिकस्य विंशतिसहस्राणि षट् च शतानि वैक्रियलब्धिमतां अदेवानामपि देवर्द्धिप्रासानां उत्कृष्टा वैक्रियलब्धिमत्सम्पदाऽभवत् ।

२२६–ऋषभस्यार्हतः कौशलिकस्य द्वादशसहस्राणि षट् च शतानि पञ्चाशदधिकानि विपुलमतीनामर्द्धतृतीयेषु द्वीपसमुद्रेषु संज्ञिनां पञ्चेन्द्रियाणां पर्याप्तकानां मनोगतान् भावान् जानतां उत्कृष्टा विपुलमतिसम्पदाऽभवत् ।

२२७–ऋषभस्यार्हतः कौशलिकस्य द्वादशसहस्राणि षट् च शतानि पञ्चाशदधिकानि वादिनां देवमनुजा-

उसभस्स णं० वीसं अंतेवासिसाहस्सा सिद्धा, चत्तालीसं अज्जियासाहस्सीओ सिद्धाओ ॥ २२८ ॥

उसभस्स णं० बावीससहस्सा नव सया अणुत्तरोववाइयाणं गइकल्लाणाणं जाव भद्दाणं, उक्कोसिया अणुत्तरोववाइयसंपया हुत्था २२९

उसभस्स णं अरहओ कोसलियस्स दुविहा अंतगडभूमी हुत्था, तं जहा–जुगंतगडभूमी य परियायंतगडभूमी य । जाव असंखिज्जाओ पुरिसजुगाओ जुगंतगडभूमी, अंतोमुहुत्तपरियाए अंतमकासी ॥ २३० ॥

ते णं काले णं ते णं समए णं उसभे णं अरहा कोसलिए वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसित्ता णं, तेवट्ठिं पुव्वसयसहस्साइं रज्जवासमज्झे वसित्ता णं, तेसीइं पुव्वसयसहस्साइं अगारवासमज्झे वसित्ता णं, एगं वाससहस्सं छउमत्थपरिआयं पाउणित्ता, एगं पुव्व-

सुरमहितासु पर्षत्सु अपराजितानां उत्कृष्टा वादिसम्पदाऽभवत् ।

२२८–ऋषभस्यार्हतः कौशलिकस्य विंशतिरन्तेवासिसहस्राणि सिद्धानि, चत्वारिंशदार्यिकासहस्राणि सिद्धानि।

२२९–ऋषभस्यार्हतः कौशलिकस्य द्वाविंशतिसहस्राणि नव शतानि च अनुत्तरोपपातिकानां गतिकल्याणानां यावदागमिष्यद्भद्राणां उत्कृष्टा अनुत्तरोपपातिकसम्पदाऽभवत् ।

२३०–ऋषभस्यार्हतः कौशलिकस्य द्विविधा अन्तकृद्भूमिरभवत्, तद्यथा–युगान्तकृद्भूमिः पर्यायान्तकृद्भूमिश्च। असंख्येयानि पुरुषयुगानि यावद्युगान्तकृद्भूमिः, अन्तर्मुहूर्त्तपर्याये मरुदेवाऽन्तमकार्षीत्सा पर्यायान्तकृद्भूमिः।

२३१–तस्मिन्काले तस्मिन्समये ऋषभोऽर्हन् कौशलिको विंशतिपूर्वशतसहस्राणि कुमारवासमध्ये उषित्वा त्रिषष्टिपूर्वशतसहस्राणि राज्यवासमध्ये उषित्वा, त्र्यशीतिपूर्वशतसहस्राणि अगारवासमध्ये उषित्वा, एकं वर्षसहस्रं छद्मस्थपर्यायं पालयित्वा, एकं पूर्वशतसहस्रं वर्षसहस्रोनं केवलिपर्यायं पालयित्वा, प्रतिपूर्णं पूर्वशत-

सयसहस्सं वासमहस्सूणं केवलिपरिआयं पाउणित्ता, पडिपुण्णं पुव्वसयसहस्सं सामण्णपरिआयं पाउणित्ता, चउरासीइं पुव्वसयसहस्साइं सव्वाउयं पालइत्ता, खीणे वेयणिज्जाउयनामगुत्ते, इमीसे ओसप्पिणीए सुसमदुसमाए समाए बहुविइक्कंताए तिहिं वासेहिं अद्धनवमेहि य मासेहिं सेसेहिं, जे से हेमंताणं तच्चे मासे पंचमे पक्खे, माहबहुले, तस्स णं माहबहुलस्स (ग्रं० ९००) तेरसीपक्खेणं उप्पिं अट्ठावयसेलसिहरंसि दसहिं अणगारसहस्सेहिं सद्धिं चोद्दसमेणं भत्तेणं अपाणएणं, अभीइणा नक्खत्तेणं जोगमुवागएणं पुव्वण्हकालसमयंसि संपलियंकनिसण्णे कालगए विइक्कंते जाव सव्वदुक्खप्पहीणे ॥ २३१ ॥

उसभस्स णं अरहओ कोसलियस्स कालगयस्स जाव सव्वदुक्खप्पहीणस्स तिण्णि वासा अद्धनवमा य मासा विइक्कंता, तओ वि

सहस्रं श्रामण्यपर्यायं पालयित्वा, चतुरशीतिपूर्वशतसहस्राणि सर्वायुः पालयित्वा, क्षीणेषु सत्सु वेदनीयायुर्नामगोत्रेषु चतुर्ष्वघातिकर्मसु अस्यामवसर्पिण्यां सुषमदुष्षमायां समायां–तृतीयारके बहुव्यतिक्रान्ते सति, त्रिषु वर्षेषु अर्द्धनवमेषु च मासेषु शेषेषु सत्सु, यच्च "एकोननवतिपक्षावशेषे" इत्युक्तं कल्पकि०सुबोधिकाराभ्यां तच्चिन्त्यं, एतावत्काले द्वयोरधिकमासयोरवश्यम्भावेनातीतत्वात्स्फुटमेवैकोननवतेरधिकपक्षाणामस्तित्वं । योऽसौ हेमन्तर्त्तोस्तृतीयो मासः पञ्चमः पक्षः, माघबहुलस्तस्य माघबहुलस्य त्रयोदशीदिवसे अष्टापदशैलशिखरोपरि दशभिरनगारसहस्रैः सार्द्धं चतुर्दशमेन भक्तेन–उपवासषट्केनापानकेन, अभिजिन्नक्षत्रेण सह चन्द्रयोगमुपागते पूर्वाह्णकालसमये सम्यक् पल्यङ्कासनेन निषण्णः सन् कालगतो व्यतिक्रान्तो यावत्सर्वदुःखप्रहीणो जातः। ततः प्रकम्पितासनाः सर्वेऽपि देवेन्द्राद्यास्तत्रागत्य जम्बूद्वीपप्रज्ञप्त्युक्तक्रमेणार्हतादेः संस्कारं नन्दीश्वरेऽष्टाह्निकोत्सवं च विधाय स्वस्वस्थानं गताः।

२३२–ऋषभस्यार्हतः कौशलिकस्य कालगतस्य यावत्सर्वदुःखप्रहीणस्य त्रीणि वर्षाणि अर्द्धनवमाश्च मासा

परं एगा सागरोवमकोडाकोडी तिवासअद्धनवमासाहियबायालीसाए वाससहस्सेहिं ऊणिया विइक्कंता, एयम्मि समए समणे भगवं महावीरे परिनिव्वुडे, तओ वि परं नववाससया विइक्कंता, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ २३२ ॥ २ ॥

---

व्यतिक्रान्ताः, ततोऽपि परमेका सागरोपमकोटाकोटी त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रैरूना व्यतिक्रान्ता, एतस्मिन्समये श्रमणो भगवान् महावीरः परिनिर्वृतः, ततोऽपि परं नववर्षशतानि व्यतिक्रान्तानि, दशमस्य च वर्षशतस्यायमशीतितमः संवत्सरः कालो गच्छति । इति श्रीऋषभचरित्रम् ।

इति श्रीपर्युषणाकल्पान्तर्वाच्यादिविविधव्याख्यामुपजीव्य प्रवचनप्रभावकश्रीखरतरगच्छनभोनभोमणि–क्रियोद्धारक–श्रीमन्मोहनमुनीश्वरान्तिषद्विनेयानुयोगाचार्य–श्रीमत्केशरमुनिजी–गणिवरसंगृहीतायां कल्पार्थबोधिनीनामपर्युषणाकल्पव्याख्यायां राज्याभिषेकस्य कल्याणकत्वभ्रान्तिनिरसनपूर्वकं पञ्चकल्याणकनिबन्धबन्धुरं श्रीऋषभदेवचरित्रवर्णनात्मकं सप्तमं व्याख्यानं समाप्तं तत्समाप्तौ च समाप्तोऽयं जिनचरित्रात्मकः प्रथमोऽधिकारः ।

ग्रं० २४०–०–५ मूलं, ७३१–३–२ वृत्तिः, ६५–०–७ टि०, सर्वाग्रेण १०३७–०–७, व्याख्यानसप्तकस्य ५५३९–०–१



नाम्ना 'मोहनलाले'ति, विख्याता ह्यवनीतले । खरतरगणोत्तंसा, जैनशासनभूषणाः ॥ १ ॥

## ॥ इति कल्पार्थबोधिन्याः सप्तमं व्याख्यानम् ॥

तेषां प्रशिष्यपंन्यास-गणि'केशर'सन्मुनेः । शिष्यं बुद्ध्यब्धिनामानं, भद्रं तन्वन्तु तेऽन्वहम् ॥ २ ॥ युग्मम् ।

# अथाष्टमं व्याख्यानम्–

ते णं काले णं ते णं समए णं समणस्स भगवओ महावीरस्स नव गणा इक्कारस गणहरा हुत्था ॥ १ ॥

से केणट्ठेणं भंते ! एवं वुच्चइ ? समणस्स भगवओ महावीरस्स नव गणा इक्कारस गणहरा हुत्था ॥ २ ॥

समणस्स भगवओ महावीरस्स जिट्ठे इंदभूई अणगारे गोयमसगुत्ते णं पंच समणसयाइं वाएइ, मज्झिमए अग्गिभूई अणगारे गोयमसगुत्ते णं पंच समणसयाइं वाएइ, कणीअसे अणगारे वाउभूईनामे णं गोयमसगुत्ते णं पंच समणसयाइं वाएइ, थेरे अज्जवियत्ते भारद्दाए गुत्तेणं

---

अथ स्थविरावलीरूपे द्वितीयेऽधिकारे किञ्चिद्विव्रियते—

१–तस्मिन् काले तस्मिन् समये श्रमणस्य भगवतो महावीरस्य नव गणा एकादश गणधराश्चाभूवन् ।

२–शिष्यः पृच्छति–अथ केन 'अर्थेन' हेतुना भदन्त ! एवमुच्यते ? यत् श्रमणस्य भगवतो महावीरस्य नव गणा एकादश च गणधरा अभूवन्, यतो "जावइआ जस्स गणा, तावइआ गणहरा तस्स" इति वचनाद् गणधरसङ्ख्याका एव गणाः सर्वेषामपि जिनानां, ततो वीरस्य किमर्थममूना गणसङ्ख्या ? ।

३–अत्राचार्य आह–श्रमणस्य भगवतो महावीरस्य ज्येष्ठ इन्द्रभूतिरनगारो गौतमगोत्रः पञ्च श्रमणशतानि वाचयति, मध्यमोऽग्निभूतिरनगारो गौतमगोत्रः पञ्च श्रमणशतानि वाचयति, 'कनिष्ठो' लघुरनगारो वायुभूतिनामा गौतमगोत्रः पञ्च श्रमणशतानि वाचयति, स्थविर आर्यव्यक्तो भारद्वाजो गोत्रेण पञ्च श्रमणशतानि वाचयति,

पंच समणसयाइं वाएइ, थेरे अज्जसुहम्मे अग्गिवेसायणे गुत्तेणं पंच समणसयाइं वाएइ, थेरे मंडियपुत्ते वासिट्ठे गुत्तेणं अद्धुट्ठाइं समणसयाइं वाएइ, थेरे मोरियपुत्ते कासवे गुत्तेणं अद्धुट्ठाइं समणसयाइं वाएइ, थेरे अकंपिए गोयमसगुत्ते णं-थेरे अयलभाया हारिआयणे गुत्तेणं, पत्तेयं एते दुण्णि वि थेरा तिण्णि तिण्णि समणसयाइं वाएंति, थेरे अज्जमेअज्जे-थेरे अज्जप्पभासे-एए दुण्णि वि थेरा कोडिन्ना गुत्तेणं तिण्णि तिण्णि समणसयाइं वाएंति । से तेण अट्ठेणं अज्जो ! एवं वुच्चइ-समणस्स भगवओ महावीरस्स नव गणा इक्कारस गणहरा हुत्था ॥ ३ ॥

सव्वे वि णं एते समणस्स भगवओ महावीरस्स एक्कारस वि गणहरा दुवालसंगिणो चउद्दसपुव्विणो समत्तगणिपिडगधारगा राय-

स्थविर आर्यसुधर्माऽग्निवैश्यायनो गोत्रेण पञ्च श्रमणशतानि वाचयति, स्थविरो मण्डितपुत्रो वाशिष्ठो गोत्रेण 'अध्युष्टानि' सार्धत्रीणि श्रमणशतानि वाचयति, स्थविरो मौर्यपुत्रः काश्यपो गोत्रेणाध्युष्टानि श्रमणशतानि वाचयति, स्थविरोऽकम्पितो गौतमगोत्रः, स्थविरोऽचलभ्राता हारितायनो गोत्रेण, एतौ द्वावपि स्थविरौ प्रत्येकं त्रीणि त्रीणि श्रमणशतानि वाचयतः, स्थविर आर्यमेतार्यः स्थविर आर्यप्रभासः, एतौ द्वावपि स्थविरौ कौडिन्यौ गोत्रेण त्रीणि त्रीणि श्रमणशतानि वाचयतः। अर्थादकम्पिताचलभ्रात्रोरेकरूपैव वाचना, एवं मेतार्य-प्रभासयोरपि। अथ तेनार्थेन 'आर्य' शिष्य! एवमुच्यते, यदुत-श्रमणस्य भगवतो महावीरस्य नव गणा एकादश च गणधरा अभूवन्, यत एकवाचनाचारो यतिसमुदायो हि गण इति। अत्र मण्डित-मौर्यपुत्रयोरेकमातृत्वेन भ्रात्रोरपि भिन्नगोत्राभिधानं भिन्नजनकापेक्षया, तत्र मण्डितपुत्रस्य पिता मण्डितेत्यपराभिधानो धनदेवः, मौर्यपुत्रस्य च मौर्यः, माता तु द्वयोरप्येका विजयादेवी, यतोऽनिन्दितं तत्र देशे ज्ञातौ चैकस्मिन् पत्यौ मृतेऽन्यपतिवरणमिति वृद्धाः।

४-सर्वेऽप्येते इन्द्रभूत्यादयः श्रमणस्य भगवतो महावीरस्य एकादशापि गणधरा 'द्वादशाङ्गिनः' आचाराङ्ग-

गिहे नगरे मासिएणं भत्तेणं अपाणएणं कालगया, जाव सव्वदुक्खप्पहीणा । थेरे इंदभूई, थेरे अज्जसुहम्मे य सिद्धिं गए महावीरे पच्छा दुण्णि वि थेरा परिनिव्वुया । जे इमे अज्जत्ताए समणा निग्गंथा विहरंति, एए णं सव्वे अज्जसुहम्मस्स अणगारस्स आवच्चिज्जा, अवसेसा गणहरा निरवच्चा वुच्छिन्ना ॥ ४ ॥

---

दृष्टिवादान्तश्रुतवन्तः, स्वयं रचितत्वात्, पुनः 'चतुर्दशपूर्विणः' चतुर्दशपूर्ववेत्तारः, चतुर्दशपूर्वाणामङ्गान्तर्गतत्वेऽपि पूर्वं प्रणयनादनेकविद्यामन्त्राद्यर्थमयत्वान्महाप्रमाणत्वाच्च प्राधान्यख्यापनार्थं पृथगुपादानं । सूत्रमात्रेऽपि द्वादशाङ्गित्वं चतुर्दशपूर्वित्वं च स्यादतस्तदपोहार्थमाह–समस्तगणिपिटकधारकाः, 'समस्तं' सर्वाक्षरसन्निपातित्वात्सूत्रतोऽर्थतश्चापि, न तु स्थूलभद्रस्येव देशतः, गणोऽस्यास्तीति 'गणी' भावाचार्यस्तस्य पिटकमिव–रत्नकरण्डकमिव 'गणिपिटकं' द्वादशाङ्गं, तद्धारयन्ति ये ते तथा, एवं विधास्ते सर्वे गणधरा राजगृहे नगरे मासिकेन भक्तेनापानकेन पादपोपगमनानशनं विधाय कालगता यावत्सर्वदुःखप्रहीणाः । यदुक्तं–× "मासं पाओवगया, सव्वे वि य सव्वलद्धिसंपन्ना । वज्जरिसहसंघयणा, समचउरंसा य संठाणा ॥ १ ॥" स्थविर इन्द्रभूतिः स्थविर आर्यसुधर्मा च, एतौ द्वावपि स्थविरौ सिद्धिं गते महावीरे पश्चात् परिनिर्वृतौ। अर्थान्नव गणधरा भगवति जीवत्येव सिद्धाः, इन्द्रभूतिसुधर्माणौ तु भगवति सिद्धे सिद्धाः । ये इमे आर्यतया अद्यत्वे वा–अद्यतने काले श्रमणा निर्ग्रन्था विहरन्ति, एते सर्वे आर्यसुधर्मणोऽनगारस्य 'अपत्यीयाः' पुत्रस्थानीयाः–शिष्यसन्तानजाः, अवशेषा गणधरा 'निरपत्याः' शिष्यसन्तानरहिताः, स्वस्यावसानसमये स्वगणान् सुधर्मस्वामिनि निसृज्य सिद्धाः, अतो व्यवच्छिन्ना तच्छिष्यसन्ततिः ।

---

× मासं पादपोपगताः, सर्वेऽपि च सर्वलब्धिसम्पन्नाः । वज्रर्षभ (नाराच) संहननाः, समचतुरस्राश्च संस्थानाः ॥ १ ॥

समणे भगवं महावीरे कासवगुत्ते णं। समणस्स णं भगवओ महावीरस्स कासवगुत्तस्स अज्जसुहम्मे थेरे अंतेवासी अग्गिवेसायणसगुत्ते १। थेरस्स णं अज्जसुहम्मस्स अग्गिवेसायणसगुत्तस्स अज्जजंबुनामे थेरे अंतेवासी कासवगुत्ते णं २। थेरस्स णं अज्जजंबुणामस्स

---

अथ भगवतः पट्टपरम्परामाह—

५–श्रमणो भगवान् महावीरः काश्यपगोत्रः। श्रमणस्य भगवतो महावीरस्य काश्यपगोत्रस्य आर्यसुधर्मा स्थविरोऽन्तेवासी अग्निवैश्यायनगोत्रः। स च–कुल्लागसन्निवेशवासिधम्मिलद्विजभार्याभद्दिलापुत्रश्चतुर्दशविद्यापारगः पञ्चाशद्वर्षान्ते प्रव्रजितस्त्रिंशद्वर्षाणि वीरसेवा, वीरनिर्वाणाद् द्वादशवर्षान्ते जन्मतो द्विनवतिवर्षान्ते च केवलमवाप्तवान्, ततोऽष्टौ वर्षाणि केवलित्वे विहृत्य परिपूर्णशतवर्षायुर्जम्बूस्वामिनं स्वपदे संस्थाप्य सिद्धः (१)।

स्थविरस्यार्यसुधर्मणोऽग्निवैश्यायनगोत्रस्य आर्यजम्बूनामा स्थविरोऽन्तेवासी काश्यपगोत्रस्तत्सम्बन्धश्चैवं–राजगृहे ऋषभदत्तव्यवहारीप्रियाधारिणीपुत्रः पञ्चमकल्पाच्युतो जम्बूकुमारः श्रीसुधर्मस्वाम्यन्तिके धर्मं श्रुत्वा गृहीतशीलसम्यक्त्वोऽपि पित्रोरत्याग्रहादष्टौ कन्याः परिणीतः, परं न तासां स्नेहवाग्भिर्व्यामोहितः।
यतः–"सम्यक्त्वशीलतुम्बाभ्यां, भवाब्धिस्तीर्यते सुखम्। ते दधानो मुनिर्जम्बूः, स्त्रीनदीषु कथं ब्रुडेत्? ॥ १ ॥"

ततो निशायां ताः प्रतिबोधयंश्चौर्यार्थमायातं नवनवत्यधिकचतुश्शतचौरपरिवृतं प्रभवाख्यं चौरमप्यनेकैर्हेतुयुक्त्याद्यैः प्राबोधयत्। प्रातः पञ्चशतचौरप्रियाऽष्टकतज्जनकजननीस्वजनकजननीभिः सह स्वयं पञ्चशतसप्तविंशतितमो नवनवतिकनककोटीः परित्यज्य प्रव्रजितः, क्रमशः केवलीभूय वर्षाणां षोडशं गृहस्थत्वे, विंशति-

रायगुत्तस्स अज्जप्पभवे थेरे अंतेवासी कच्चायणसगुत्ते (३)। थेरस्स णं अज्जप्पभवस्स कच्चायणसगुत्तस्स अज्जसिज्जंभवे थेरे अंतेवासी

दशाब्दानि, चतुश्चत्वारिंशतं केवलित्वे, एवमशीतिवर्षाणि सर्वायुः प्रपाल्य प्रभवस्वामिनं स्वपदे न्यस्य शिवं गतः। यत्र यतिः—"जम्बूसमस्तत्कालश्चो, न भूतो न भविष्यति। शिवाध्ववाहकान् साधून्, चौरानपि चकार यः ॥ १॥"

"प्रभवोऽपि प्रभुर्जीया-चौर्येण हरता धनम्। लेभेऽनर्घ्यां चौर्यहरं, रत्नत्रितयमद्भुतम् ॥ २॥" तत्र—

×"बारसवरिसेहिं गोअमु, सिद्धो वीराओ वीसहिं सुहम्मो। चउसट्ठीए जंबू, वुच्छिन्ना तत्थ दस ठाणा ॥१॥

"मणपरमोहि पुलाए, आहारगखवगउवसमे कप्पे। संजमतिअकेवलसि-ज्झणा य जंबूम्मि वुच्छिन्ना ॥२॥"

"मण"त्ति मनःपर्यायज्ञानं, "परमोहि"त्ति परमावधिः, यस्मिन्नुत्पन्नेऽन्तर्मुहूर्त्तान्तः केवलावाप्तिः, "पुलाए"त्ति पुलाकलब्धिः, यया चक्रवर्त्तिसैन्यमपि चूर्णीकर्त्तुं समर्थः स्यात्, "आहारग"त्ति आहारकशरीरकरणलब्धिः, "खवग"त्ति क्षपकश्रेणिः "उवसम"त्ति उपशमश्रेणिः "कप्प"त्ति जिनकल्पः "संजमतिअ"त्ति संयमत्रिकं, परिहारविशुद्धिसूक्ष्मसम्परायययाख्यातचारित्ररूपं, "केवल"त्ति केवलज्ञानं, सिद्धिगमनं चेति। कविरुत्प्रेक्षते—"लोकोत्तरं हि सौभाग्यं, जम्बूस्वामिमहामुनेः। अद्यापि यं पतिं प्राप्य, शिवश्रीर्नान्यमिच्छति ॥ १॥" (२)।

स्थविरस्य आर्यजम्बूनामकस्य काश्यपगोत्रस्य आर्यप्रभवः स्थविरोऽन्तेवासी कात्यायनगोत्रोऽभूत्। स्थविरस्यार्यप्रभवस्य कात्यायनगोत्रस्यार्यशय्यम्भवः स्थविरोऽन्तेवासी मनकपिता वत्सगोत्रस्तद्वृत्तो यथा—

× द्वादशवर्षैर्गौतमः, सिद्धो वीराद्विंशत्या सुधर्मा। चतुःषष्ट्या जम्बू-र्व्युच्छिन्नानि तत्र दश स्थानानि ॥ १॥

मणगपिया वच्छसगुत्ते(४)। थेरस्स णं अज्जसिज्जंभवस्स मणगपिउणो वच्छसगुत्तस्स अज्जजसभद्दे थेरे अंतेवासी तुंगियायणसगुत्ते (५)॥५॥

संखित्तवायणाए अज्जजसभद्दाओ अग्गओ एवं थेरावली भणिया, तं जहा-थेरस्स णं अज्जजसभद्दस्स तुंगियायणसगुत्तस्स अंते-

---

प्रभवस्वामिना कदाचित्स्वपदाऽर्हस्य गवेषणार्थं गणे सङ्घे चोपयोगो दत्तस्तत्र तथाविधयोग्यादर्शने परतीर्थिपूपयोगो दत्तस्तदा राजगृहे यज्ञं कुर्वन् शय्यम्भवभट्टो दृष्टः, ततस्तत्र श्रमणयुगं सम्प्रेष्य "अहो कष्टमहो कष्टं, तत्त्वं न ज्ञायते खलु" इति श्लोकार्द्धः श्रावितः, ततः खड्गभापितस्वगुरुब्राह्मणदर्शितयज्ञस्तम्भाधःस्थश्रीशान्तिजिनविम्वदर्शनात्प्रतिबुद्धः प्रव्रजितः । ततः श्रीप्रभवः शय्यम्भवं स्वपदे न्यस्य स्वर्गमगात् (३)।

शय्यम्भवोऽपि साधानां प्रियां परित्यज्य प्रव्रजितस्तस्या मनकनाम पुत्रोऽभूत्, स च जननीमुखात्स्वजनकदीक्षास्वरूपमवगम्य श्रीशय्यम्भवसूर्यन्तिके समागतः, धर्मदेशनया संसारासारतामवबुध्य व्रतं प्रतिपन्नवान्। ततो गुरुः श्रुतोपयोगात्षण्मासावशिष्टं तस्यायुषं विज्ञाय तदनुग्रहाय श्रीदशवैकालिकं रचितवान्, क्रमेण श्रीयशोभद्रं स्वपदे संस्थाप्य वीरादष्टनवत्या (९८) वर्षैः स्वर्गं गतः (४)।

स्थविरस्यार्यशय्यम्भवस्य मनकपितुर्वत्सगोत्रस्यार्ययशोभद्रः स्थविरोऽन्तेवासी तुङ्गिकायनगोत्रोऽभूत् (५)।

६-सङ्क्षिप्तवाचनया आर्ययशोभद्रादग्रत एवं स्थविरावली भणिता, तद्यथा-स्थविरस्य आर्ययशोभद्रस्य तुङ्गिकायनगोत्रस्य अन्तेवासिनौ द्वौ स्थविरौ-स्थविर आर्यसम्भूतविजयो माढरगोत्रः, स्थविर आर्यभद्रबाहुः प्राचीनगोत्रः।श्रीयशोभद्रसूरिपट्टे श्रीसम्भूतविजयभद्रबाहुनामानौ द्वौ पट्टधरावभूतां, तत्र भद्रबाहुसम्बन्धो यथा—

गामी दुवे थेरा-थेरे अज्जसंभूअविजए माढरसगुत्ते, थेरे अज्जभद्दबाहू पाईणसगुत्ते (६)। थेरस्स णं अज्जसंभूअविजयस्स माढरसगुत्तस्स

प्रतिष्ठानपुरवासिनौ वराहमिहिर-भद्रबाहुनामानौ सहोदरौ द्विजौ श्रीयशोभद्रसूरिपार्श्वे धर्मं श्रुत्वा प्रव्रजितौ, क्रमेण चतुर्दशपूर्वधरौ जातौ, विनयादिगुणैर्योग्यत्वाद् भद्रबाहोराचार्यपदप्रदाने रुष्टो वराहमिहिरो द्विजवेषमादृत्य वाराहीसंहिताख्यं ज्योतिर्ग्रन्थं विधाय निमित्तैर्जीवति भणति च–क्वाप्यरण्ये शिलायां सिंहलग्नं लिखितं मया, गृहागतेन शयनावसरे तदभञ्जनं स्मृतं, ततो लग्नभक्त्या तत्र गतेन लग्नोपरि स्थितं सिंहं दृष्ट्वाऽपि तस्याधो हस्तं निक्षिप्य लग्ने भग्ने सन्तुष्टः सिंहलग्नाधिपः सूर्यः प्रत्यक्षीभूय मां स्वमण्डले नीत्वा सर्वं ग्रहचारमदर्शयदिति। अन्यदा वराहेण नृपाग्रे कुण्डालकमालिख्य प्रोक्तं–इतः पञ्चमेऽह्नि पूर्वतो मेघः समेष्यति, तृतीयप्रहरान्तेऽस्य कुण्डालकस्य मध्यभागे द्विपञ्चाशत्पलमितो मत्स्यः पतिष्यतीति। तदा तन्नगरागतैः श्रीभद्रबाहुस्वामिभिरुक्तं–किञ्चित्सत्यं किञ्चिचासत्यमत्र, यतो मेघः पूर्वतो न, किन्तु ईशानतः, समेष्यति, मत्स्यस्तृतीयप्रहरान्ते न, किन्तु षड्घटिकाऽवशिष्टे दिवसे, कुण्डालकस्य मध्ये न, किन्तु प्रान्ते, द्विपञ्चाशत्पलमानो न, किन्तु मार्गेऽर्धपलशोषात्सार्धैकपञ्चाशत्पलमानो पतिष्यतीति, तच्च मिलितं। पुनरन्यदा राज्ञः पुत्रो जातः, वराहेण तस्य शतवर्षायुर्वर्त्तनेन जन्मपत्रिका लिखिता, तत 'एते श्रमणा न व्यवहारज्ञा, यतो राजसुनस्य विलोकनार्थमपि नागताः' इत्येवं जैननिन्दायां क्रियमाणायां गुरुभिरष्टमे दिने रात्रौ विडालिकातो मृतिरुक्ता नृपनन्दनस्य, राज्ञा च पुरात्सर्वविडालिकाकर्षणेऽप्यष्टमे दिने स्तन्यं पिबतो बालस्योपरि विडालिका-

अंतेवासी थेरे अज्जथूलभद्दे गोयमसगुत्ते (७)। थेरस्स णं अज्जथूलभद्दस्स गोयमसगुत्तस्स अंतेवासी दुवे थेरा-थेरे अज्जमहागिरी एलाव-

कारवक्त्रार्गलापातेन मरणे निष्पन्ने गुरोः प्रशंसा तस्य च निन्दा सञ्जाता, ततः क्रोधान्मृत्वा व्यन्तरो जातोऽशिवोत्पादादिना सङ्घमुपसर्गयन् उपसर्गहरं स्तोत्रं कृत्वा गुरुभिर्निवारितः। उक्तं च—

×"उवसग्गहरं थुत्तं, काऊणं जेण संघकल्लाणं। करुणापरेण विहियं, स भद्दबाहू गुरू जयउ ॥ १ ॥"

आवश्यकादिदशसूत्राणां निर्युक्तयो दशाश्रुतस्कन्धव्यवहारादयश्चानेके ग्रन्था निर्मिताः श्रीभद्रबाहुस्वामिभिः, वीरात्सप्तत्यधिके वर्षशते (१७०) स्वर्गं गताः (६)।

स्थविरस्यार्यसम्भूतविजयस्य माढरगोत्रस्यान्तेवासी स्थविर आर्यस्थूलभद्रो गौतमगोत्रोऽभूत्तद्वृत्तस्त्वेवं—

पाटलिपुरे नवमनन्दामात्यशकटालपुत्रः स्थूलभद्रो द्वादशाब्दं यावत्कोशागणिकागृहे स्थितः, वररुचिद्विजप्रयोगात् पितरि मृते नृपेणाकार्यं मन्त्रिमुद्रादानायाभ्यर्थितः पितुर्मृत्युं विभावयन्स्वयमेव दीक्षां जग्राह, पश्चाच्च सम्भूतविजयान्तिके विधिना व्रतान्यादाय गीतार्थो जातः। ततोऽन्यदा गुर्वादेशात्कोशागृहे चतुर्मासीमस्थात्। तत्र कामोत्पादका अनेके हावभावादयो विलासा विहिताः कोशया, परं स महात्मा मनागपि न क्षुब्धः, नैतावन्मात्रं, किन्तु सरसवैराग्योपदेशेन तां प्रतिबोध्य सम्यक्त्वमूलानि द्वादशव्रतानि ग्राहितानि। ततो निष्कलङ्कव्रतश्चतुर्मासकं समाप्य यदा गुरुसमीपमागतस्तदा गुरुभिरपि समग्रतयोत्थाय 'स्वागतं भो

× उपसर्गहरं स्तोत्रं, कृत्वा येन सङ्घकल्याणं। करुणापरेण विहितं, स भद्रबाहुर्गुरुर्जयतु ॥ १ ॥

दुष्करदुष्करकारक !' इत्युक्तं । तद्वचसा च प्रागायाताः सिंहगुहा-सर्पबिल-कूपकाष्ठवासिनस्त्रयो मुनयः, येषामागमने गुरुभिर्गीषदुत्थाय 'स्वागतं भो दुष्करकारकाः !' इत्युक्तं, ते दूनाः, तेषु सिंहगुहास्थायी मुनिर्गुरुभिर्वार्यमाणोऽपि द्वितीयचतुर्मास्यां कोशागृहे गतः, दृष्ट्वैव च तां दिव्यरूपां चलचित्तोऽजनि । ततस्तया नेपालदेशादानायितं रत्नकम्बलं खाले निक्षिप्य प्रतिबोधितो गुर्वन्तिके समागतः स्वदुश्चीर्णमालोच्य चोक्तवान्—

"स्थूलभद्रः स्थूलभद्रः, स एकोऽखिलसाधुषु । युक्तं दुष्करदुष्कर-कारको गुरुणा जगे ॥ १ ॥"

यतः—×"पुप्फफलाणं च रसं, सुराण मंसाण महिलियाणं च । जाणंता जे विरया, ते दुक्करकारए वंदे ॥ १ ॥"

अन्यो—"राज्ञा प्रदत्ता कोशाऽपि, तुष्टेन रथिनेऽन्यदा । राजायत्तेति शिश्राय, विना रागेण सा तु तम् ॥ १ ॥"

"स्थूलभद्रं विना नान्यः, पुमान्कोऽपीत्यहर्निशम् । सा तस्य रथिनोऽभ्यर्णे, वर्णयामास वर्णिनी ॥ २ ॥"

ततः पुष्पाग्निबाणैर्दूरस्थाम्रलुम्ब्यानयनगर्वितस्य रथिनोऽग्रे सर्षपराशिकृतस्तया, ततः—

"सूचीं क्षिप्त्वा तत्र राशौ, पुष्पपत्रैः पिधाय ताम् । सा ननर्त्त च नो सूच्या, विद्धा राशिश्च न क्षतः ॥ १ ॥
ततः स ऊचे तुष्टोऽस्मि, दुष्करेणामुना तव । याचस्व यन्ममायत्तं, ददामि तदहं ध्रुवम् ॥ २ ॥ सोवाच किं मयाऽकारि?, दुष्करं येन रञ्जितः । इदमप्यधिकं नास्मात्, किमभ्यासेन दुष्करम् ? ॥ ३ ॥ किञ्चाम्रलुम्बीछेदोऽयं, नृणां नेदं न दुष्करम् । अशिक्षितं स्थूलभद्रो, यच्चक्रे तत्तु दुष्करम् ॥ ४ ॥ अभुक्त द्वादशाब्दानि, भोगान्यत्र

× पुष्पफलानां च रसं, सुराणां मांसानां महिलानां च । जानन्तो ये विरता—स्तान् दुष्करकारकान्वन्दे ॥ १ ॥

समं मया। तत्रैव चित्रशालाया-मस्थात्सोऽखण्डितव्रतः ॥ ५ ॥ दुग्धं नकुलसञ्चारा-दिव स्त्रीणां प्रचारतः। योगिनां दूष्यते चेतः, स्थूलभद्रमुनिं विना ॥ ६ ॥ दिनमेकमपि स्थातुं, कोऽलं स्त्रीसन्निधौ तथा। चतुर्मासीं यथाऽतिष्ठत्, स्थूलभद्रोऽक्षतव्रतः ॥ ७ ॥" इत्याद्युपदेशेन प्रतिबोधितः—

"कल्याणमस्तु ते भद्रे !, पालय स्वमभिग्रहम्। उक्त्वैवं सद्गुरोः पार्श्वे, गत्वा दीक्षां स आददे ॥ १ ॥"

कवयोऽप्यूचुः—"गिरौ गुहायां विजने वनान्तरे, वासं श्रयन्तो वशिनः सहस्रशः।"

"हर्म्येऽतिरम्ये युवतीजनान्तिके, वशी स एकः शकटालनन्दनः ॥ १ ॥"

"योऽग्नौ प्रविष्टोऽपि हि नैव दग्ध-श्छिन्नो न खड्गाग्रकृतप्रचारः।"

"कृष्णाहिरन्ध्रेऽप्युषितो न दष्टो, नाक्तोऽञ्जनागारनिवास्यहो !! यः ॥ २ ॥"

"वेश्या रागवती सदा तदनुगा षड्भी रसैर्भोजनं, शुभ्रं धाम मनोहरं वपुरहो !! नव्यो वयस्सङ्गमः।"

"कालोऽयं जलदाविलस्तदपि यः कामं जिगायादरात्, तं वन्दे युवतीप्रबोधकुशलं श्रीस्थूलभद्रं मुनिम् ॥ ३ ॥"

"श्रीनेमितोऽपि शकटालसुतं विचार्य, मन्यामहे वयममुं भटमेकमेव।"

"देवोऽद्रिदुर्गमधिरुह्य जिगाय मोहं, यन्मोहनालयमयं तु वशी प्रविश्य ॥ ४ ॥"

अथान्यदा द्वादशवर्षीयदुर्भिक्षान्ते श्रीभद्रबाहुस्वामिभिः साधुपञ्चशत्याः प्रत्यहं वाचनासप्तकेन दृष्टिवादे पाठ्यमाने ससप्तवाचनाभिरुद्विग्नेष्वन्येषु साधुषु श्रीस्थूलभद्रो वस्तुद्वयोनानि दशपूर्वाण्यधीतवान्। अथैकदा

मित्रगृहे दृष्टिपानादीङ्गितान्निधानदर्शनेन यक्षार्याप्रभृतीनां वन्दनार्थमागतानां स्वभगिनीनां सिंहरूपदर्शनेन च दूना: श्रीभद्रबाहुस्वामिनो 'वाचनायामयोग्यस्त्वं' इति स्थूलभद्रमुक्तवन्तः, ततः सङ्घाग्रहात् 'अथान्यस्मै वाचना न देया' इत्युक्त्वा केवलं सूत्रतो वाचनां ददुः। अतोऽयं चरमः श्रुतकेवली, यदुक्तम्—

"केवली चरमो जम्बू-स्वाम्यथ प्रभवः प्रभुः। शय्यम्भवो यशोभद्रः, सम्भूतविजयस्तथा ॥ १ ॥"

"भद्रबाहुः स्थूलभद्रः, श्रुतकेवलिनो हि षट्। महागिरिसुहस्त्याद्या, वज्रान्ता दशपूर्विणः ॥ २ ॥" (७)।

स्थविरस्य आर्यस्थूलभद्रस्य गौतमगोत्रस्यान्तेवासिनौ द्वौ स्थविरौ—स्थविर आर्यमहागिरिः एलापत्यगोत्रः, स्थविर आर्यसुहस्तिर्वाशिष्ठगोत्रः। तत्र आर्यमहागिरिणा व्युच्छिन्नेऽपि जिनकल्पे तत्तुलनारूपं परिकर्म कृतं, तथा श्रेष्ठिगृहे स्थितः सुहस्तिसूरिर्यस्य महागिरेः संस्तवनमकार्षीत्, यदुक्तम्—

+"जिणकप्पपरीकम्मं, जोऽकासी जस्स संथवमकासी। सिट्ठिघरम्मि सुहत्थी, तं अज्जमहागिरिं वंदे ॥ १ ॥"

स च गजेन्द्रपदे तीर्थेऽनशनेन स्वर्गं गतः।

आर्यसुहस्तिभिरन्यदा दुर्भिक्षे साधुभ्यो भिक्षां याचमानो द्रमको दीक्षितः, स च—

"सम्यादं स्वादुमाहारं, तथा ह्याकण्ठमात्तवान्। पन्थाः श्वासानिलस्यापि, यथा दुस्सञ्चरोऽभवत् ॥ १ ॥"

अनस्तद्दिनस्यैव निशायां रुद्धश्वासो मृतः श्रेणिकसुतकोणिकसुतोदायिपट्टोदितनवनन्दपट्टप्रभाकरचन्द्रगुप्त-

---

+ जिनकल्पपरिकर्मं, योऽकार्षीद् यस्य संस्तवमकार्षीत्। श्रेष्ठिगृहे सुहस्ती, तमार्यमहागिरिं वन्दे ॥ १ ॥

चसगुत्ते, थेरे अज्जसुहत्थी वासिट्ठसगुत्ते(८)। थेरस्स णं अज्जसुहत्थिस्स वासिट्ठसगुत्तस्स अंतेवासी दुवे थेरा सुट्ठियसुपडिबुद्धा कोडिय-

सुतविन्दुसारसुताशोकश्रीसुतकुणालपुत्रः सम्प्रतिनामा सञ्जातः, तत्र जातमात्र एव पितामहदत्तराज्य उज्ज-यिन्यां रथयात्राप्रवृत्तश्रीआर्यसुहस्तिसूरिदर्शनाज्जातजातिस्मृतिः शुद्धश्रावको भूत्वा—

"आवैताढ्यं प्रतापाढ्यः, स चकाराविकारधीः। त्रिखण्डं भरतक्षेत्रं, जिनायतनमण्डितम् ॥ १ ॥"

श्रूयते–सपादलक्षजिनालय-सपादकोटिनूतनबिम्ब-षट्त्रिंशत्सहस्रजीर्णोद्धार-पञ्चनवतिसहस्रसर्वधातुमय-प्रतिमाऽनेकशतसहस्रसत्रशालादिभिर्विभूषितां त्रिखण्डामप्यवनीमकरोदिति।

अनार्यदेशानपि प्राक्साधुवेषभृन्नरप्रेषणादिना साधुविहारयोग्यान् स्वाज्ञावर्त्तिनृपाञ्जैनधर्मरताँश्चाकरोत्, ततश्च–"वस्त्रपात्रान्नदध्यादि–प्रासुकद्रव्यविक्रयम्। ये कुर्वन्त्यथ तानुर्वी–पतिः सम्प्रतिरूचिवान् ॥ १ ॥"

"साधुभ्यः सञ्चरद्भ्योऽग्रे, ढौकनीयं स्ववस्तु भोः!। ते यदाददते पूज्या–स्तेभ्यो दातव्यमेव तत् ॥ २ ॥"

"अस्मत्कोशाधिकारी च, छन्नं दास्यति याचितम्। मूल्यमभ्युल्लसल्लाभं, समस्तं तस्य वस्तुनः ॥ ३ ॥"

"अथ ते पृथिवीभर्त्तु–राज्ञया तद्व्यधुर्मुदा। अशुद्धमपि तच्छुद्ध–बुद्ध्या त्वादायि साधुभिः ॥ ४ ॥"

एवं विविधप्रकारेण धर्मप्रभावनां विधायान्ते समाधिना कालं कृत्वा देवत्वं प्राप्तो नृपः क्रमेण सिद्धिं यास्यति। भगवानार्यसुहस्त्यपि समये विहितानशनः सुरलोकातिथित्वं प्रपेदे (८)।

स्थविरस्य आर्यसुहस्तिनो वाशिष्ठगोत्रस्य अन्तेवासिनौ द्वौ स्थविरावभूतां, सुस्थित-सुप्रतिबुद्धौ कौटिक-का-

काकंदगा वग्घावच्चसगुत्ता (९)। थेराणं सुट्ठियसुपडिबुद्धाणं कोडियकाकंदगाणं वग्घावच्चसगुत्ताणं अंतेवासी थेरे अज्जइंददिन्ने कोसियगुत्ते (१०)। थेरस्स णं अज्जइंददिन्नस्स कोसिअगुत्तस्स अंतेवासी थेरे अज्जदिन्ने गोयमसगुत्ते (११)। थेरस्स णं अज्जदिन्नस्स गोयमसगुत्तस्स अंतेवासी थेरे अज्जसीहगिरी जाइस्सरे कोसियगुत्ते (१२)। थेरस्स णं अज्जसीहगिरिस्स जाइस्सरस्स कोसियगुत्तस्स अंतेवासी थेरे

---

कन्दिकौ व्याघ्रापत्यगोत्रौ, तत्र 'सुस्थितौ' सुविहितक्रियानिष्ठौ 'सुप्रतिबुद्धौ' सुज्ञाततत्त्वौ कौटिककाकन्दिकाविति नाम, अन्ये त्वाहुः—सुस्थित-सुप्रतिबुद्धाविति नामनी, कोटिवारं सूरिमन्त्रजापात्कौटिकौ काकन्द्यां नगर्यां जातत्वात्त काकन्दिकाविति विरुदप्राये विशेषणे (९)।

स्थविरयोः सुस्थित-सुप्रतिबुद्धयोः कौटिक-काकन्दिकयोर्व्याघ्रापत्यगोत्रयोरन्तेवासी स्थविर आर्य इन्द्रदिन्नः कौशिकगोत्रोऽभूत् (१०)। स्थविरस्य आर्यइन्द्रदिन्नस्य कौशिकगोत्रस्य अन्तेवासी स्थविर आर्यदिन्नो गौतमगोत्रोऽभूत् (११)। स्थविरस्यार्यदिन्नस्य गौतमगोत्रस्यान्तेवासी स्थविर आर्यसिंहगिरिर्जातिस्मरण(ज्ञान)वान् कौशिकगोत्रोऽभूत् (१२)। स्थविरस्य आर्यसिंहगिरेर्जातिस्मरणवतः कौशिकगोत्रस्यान्तेवासी स्थविर आर्यवज्रो गौतमगोत्रो जातः, तत्सम्बन्धो यथा—

तुम्बवनग्रामे सुनन्दाऽभिधां भार्यां साधानां परित्यज्य धनगिरिः प्रव्रजितोऽभूत्। सुनन्दासुतस्तु स्वजन्मकाले एव पितुर्दीक्षां श्रुत्वा सञ्जातजातिस्मृतिर्मातुरुद्वेगाय नित्यं रुदन्नेवास्ते। ततो मात्रा षण्मासवया एव विहारक्रमेणागतस्य धनगिरेरर्पितः, तेन च जनसाक्षिपूर्वकं गृहीत्वाऽऽगत्य गुरोः करे समर्पितो महाभारत्वाद्व-

वज्रनामा साध्व्युपाश्रये शय्यातरश्राविकाभिः पाल्यमानः पालनस्थ एवार्थिकाभिः पठ्यमानान्येकादशाङ्गानि श्रुत्वा श्रुत्वा अध्यगीष्ट। ततस्त्रिवार्षिकः सन् मात्रा राजसमक्षं प्रारब्धे विवादेऽनेकसुखभक्षिकादिभिर्लोभ्यमानोऽपि धनगिरिणाऽर्पितं रजोहरणं गृहीत्वाऽतीवहर्षेण ननर्त्त। ततोऽष्टवर्षान्ते दीक्षितो गुरुणा, माताऽपि प्रव्रजिता।

अन्यदा च बहिर्भूमितः समायातैरुपाश्रयद्वारस्थैर्गुरुभिरन्तःस्थस्यैकाकिनो वज्रस्य साधूपकरणानां पुरो वाचनादानादिविलासदर्शनाज्ज्ञातविस्मयैर्ग्रामान्तरगमनमिषात्साधूनां तन्महत्त्वज्ञापनपूर्वकं गुरुमुखेन विधिना पुनः शास्त्रवाचनां ग्राहयित्वा वाचनाचार्यपदं प्रदत्तं। कदाचित्तस्य प्रागभवमित्रैर्जृम्भकदेवैरुज्जयिनीमार्गे वृष्टौ निवृत्तायां कूष्माण्डभिक्षायां दीयमानायां अनिमिषत्वादिना देवपिण्डोऽयमकल्प्य इत्यग्रहणे तुष्टैर्वैक्रियलब्धिर्दत्ता। तथैवान्यदा ग्रीष्मे घृतपूरैः परीक्ष्य नभोगामिनी विद्या दत्ता। यो गुर्वाज्ञया दशपुरादुज्जयिन्यां गत्वा श्रीभद्रगुप्ताचार्यान्तिके दशपूर्वाण्यधीतवाँस्ततो गुरुभिराचार्यपदे स्थापितः। अत्र कविघटना—

"यः पालनस्थः श्रुतमध्यगीष्ट, षाण्मासिको यश्चरिताभिलाषी।"
"त्रिवार्षिकः सङ्घममानयद्यः, स वज्रनेता न कथं नमस्यः? ॥ १ ॥"

यश्च पाटलीपुरे साध्वीभ्यो गुणानाकर्ण्य 'वज्रस्वामिनमेव वृणोमी'ति कृतप्रतिज्ञां पित्राऽपि बहुधनकोटिभिस्सह दीयमानां धनश्रेष्ठिसुतां रुक्मिणीनामकन्यां प्रतिबोध्य प्राव्राजयत्। कविरुत्प्रेक्षते—

"मोहाब्धिश्चुलुकीचक्रे, येन बालेन लीलया। स्त्रीनदीस्नेहपूरस्तं, वज्रर्षिं प्लावयेत्कथम्? ॥ १ ॥"

मज्जवइरे गोयमसगुत्ते (१३)। थेरस्स णं अज्जवइरस्स गोयमसगुत्तस्स अंतेवासी थेरे अज्जवइरसेणे उक्कोसियगुत्ते (१४)। थेरस्स णं अज्जवइर-

यश्चैकदा दुर्भिक्षे सङ्घं पटे संस्थाप्य व्रजन् पश्चादागतं 'लोचकरणेन साधर्मिकोऽहं भवता'मिति वदन्तं दत्तनामानं शय्यातरमपि गृहीत्वा ससुभिक्षां महानसी(पुरिका)पुरीं नीतवान्। तत्र पर्युषणायां बौद्धेन राज्ञा जिनचैत्येषु पुष्पदाने निषिद्धे श्राद्धैर्विज्ञप्तो भगवान् वज्रस्वामी नभोगामिविद्यया माहेश्वरीपुर्यां गत्वा हुताशनदेववने पितृमित्रमारामिकं तडितनामानं पुष्पप्रगुणीकरणायादिश्य स्वयं हिमवद्गिरौ श्रीदेवीभवने गतस्ततः श्रीदेव्यर्पितं लक्षदलं महापद्मं हुताशनवनाच्च विंशतिपुष्पलक्षाणि लात्वा जृम्भकदेवविकुर्वितविमानस्थः समहोत्सवमागत्य जिनशासनं प्रभावयन् राजानमपि श्रावकं चकार।

अन्यदा श्लेष्मणि सञ्जाते भोजनानन्तरभक्षणाय कर्णसंस्थापितशुण्ठ्या आवश्यककाले प्रपाते प्रमादेनासन्नं स्वावसानं विचिन्त्य द्वादशाब्दीयदुर्भिक्षप्रवेशे स्वशिष्यं श्रीवज्रसेनसूरिं—

"लक्षमूल्यौदनाद्भिक्षां, यत्राह्नि त्वमाप्नुयाः। सुभिक्षमवबुद्ध्येथा-स्तदुत्तरे दिनोषसि ॥ १ ॥"

इत्युक्त्वाऽन्यत्र व्याहरयत्। स्वयं च समीपस्थैः श्रमणैस्सह रथावर्त्तगिरौ गृहीतानशनो दिवं ययौ। तत्र च दशमं पूर्वं संहननचतुष्कं तुर्यं वाऽर्धनाराचाख्यं संहननं च व्यवच्छिन्नं (१३)।

ततः स्थविरस्य आर्यवज्रस्य गौतमगोत्रस्य अन्तेवासी स्थविर आर्यवज्रसेन उत्कौशिकगोत्रोऽभूत्। स च गुर्वाज्ञया विहरन् सोपारके गतस्तत्र जिनदत्तश्रेष्ठिगृहे तद्भार्यया ईश्वर्या लक्षमूल्यमन्नं पक्त्वा क्षिप्यमाणं विषं

सेणस्स उक्कोसियगुत्तस्स अंतेवासी चत्तारि थेरा-थेरे अज्जनाइले १, थेरे अज्जपोमिले २, थेरे अज्जजयंते ३, थेरे अज्जतावसे ४। थेराओ अज्जनाइलाओ अज्जनाइला साहा निग्गया १, थेराओ अज्जपोमिलाओ अज्जपोमिला साहा निग्गया २, थेराओ अज्जजयंताओ अज्जजयंती साहा निग्गया ३, थेराओ अज्जतावसाओ अज्जतावसी साहा निग्गया ४ (१५) इति ॥ ६ ॥

वित्थरवायणाए पुण अज्जजसभद्दाओ पुरओ थेरावली एवं पलोइज्जइ। तं जहा-थेरस्स णं अज्जजसभद्दस्स तुंगियायणसगुत्तस्स

---

गुरुवचः प्रोच्य न्यवारयत्। प्रातः पोतैः प्रचुरधान्यागमनात्सुभिक्षे जाते सभार्यो जिनदत्तो नागेन्द्रचन्द्र-निर्वृतिविद्याधराख्यैश्चतुर्भिस्सुतैस्सह प्रव्रजितोऽभूत्। ते(पुत्रे)भ्यश्च स्वस्वनाम्ना चत्वारि कुलानि प्रवृत्तानि (१४)।

स्थविरस्यार्यवज्रसेनस्य उत्कौशिकगोत्रस्यान्तेवासिनश्चत्वारः स्थविरा अभूवन्-स्थविर आर्यनागिलः, स्थविर आर्यपद्मिलः, स्थविर आर्यजयन्तः, स्थविर आर्यतापसः। स्थविरादार्यनागिलादार्यनागिला, स्थविरादार्यपद्मि-लादार्यपद्मिला, स्थविरादार्यजयन्तादार्यजयन्ती, स्थविरादार्यतापसादार्यतापसी, शाखा निर्गता इति (१५)।

७-विस्तरवाचनया पुनरार्ययशोभद्रात्पुरतः स्थविरावली एवं प्रलोक्यते। तत्रास्यां किल वाचनायां भूरिशो भेदा लेखकदोषहेतुका अवसेयाः, तत्तत्स्थविराणां शाखाः कुलानि च प्रायः सम्प्रति न ज्ञायन्ते, नामान्तरितानि तिरोहितानि वा भविष्यन्तीति पाठभेदस्य निर्णयं कर्त्तुमशक्यत्वादत्र तद्विदः प्रमाणं। तत्र कुलं-एकाचार्य-सन्ततिर्गणस्तु-एकवाचनाचारमुनिसमुदायः। शाखास्तु एकाचार्यसन्ततावेव पुरुषविशेषाणां पृथक्पृथगन्वयाः। यद्वा विवक्षिताद्यपुरुषसन्ततिः शाखा, यथाऽस्मदीया वैरस्वामिनाम्ना वैरीशाखा, कुलानि तु तत्तच्छिष्याणां

इमे दो थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा-थेरे अज्जभद्दबाहू पाईणसगुत्ते, थेरे अज्जसंभूअविजए माढरसगुत्ते (६)।

थेरस्स णं अज्जभद्दबाहुस्स पाईणसगुत्तस्स इमे चत्तारि थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा-थेरे गोदासे, थेरे अग्गिदत्ते, थेरे जण्णदत्ते, थेरे सोमदत्ते, कासवगुत्ते णं। थेरेहिंतो गोदासेहिंतो कासवगुत्तेहिंतो इत्थ णं गोदासगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ एवमाहिज्जंति, तं जहा-तामलित्तिया, कोडिवरिसिया, पंडुवद्धणिया, दासीखब्बडिया। थेरस्स णं अज्जसंभूअविजयस्स माढरसगुत्तस्स इमे दुवालस थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा-नंदणभद्दुवनंदण-भद्दे तह तीसभद्दजस-

---

पृथक् पृथगन्वयाः, यथा चान्द्रकुलं नागेन्द्रकुलमित्यादि।

तद्यथा-स्थविरस्य आर्ययशोभद्रस्य तुङ्गिकायनगोत्रस्य इमौ द्वौ स्थविरावन्तेवासिनौ न पतन्ति येन जातेन कुलं अलङ्क्रियते वा पूर्वजानामुपलक्षिति 'यथापत्यौ' पुत्रसदृशौ सुशिष्यौ 'अभिज्ञातौ' प्रसिद्धावभूतां, तद्यथा-स्थविर आर्यभद्रबाहुः प्राचीनगोत्रः, स्थविर आर्यसम्भूतविजयो माढरगोत्रः (७)। स्थविरस्य आर्यभद्रबाहोः प्राचीनगोत्रस्य इमे चत्वारः स्थविरा अन्तेवासिनो यथापत्या अभिज्ञाता अभूवन्, तद्यथा-स्थविरो गोदासः स्थविरोऽग्निदत्तः स्थविरो यज्ञदत्तः स्थविरः सोमदत्तः, काश्यपगोत्रा एते। स्थविराद् गोदासात् काश्यपगोत्रादत्र गोदासगण इति नाम गणो निर्गतस्तस्येमाश्चतस्रः शाखा एवमाख्यायन्ते, तद्यथा-ताम्रलिप्तिका कोटिवर्षिका पाण्ड्रवर्द्धनिका दासीखर्बटिका। स्थविरस्य आर्यसम्भूतविजयस्य माढरगोत्रस्येमे द्वादश स्थविरा अन्तेवासिनो यथापत्या अभिज्ञाता अभूवन्, तद्यथा-स्थविरो नन्दनभद्र उपनन्दनभद्रस्तथा तिष्यभद्रो यशोभद्रः सुमनोभद्रो मणिभद्रः पूर्णभद्रश्च। स्थविरः स्थूलभद्रः ऋजुमतिर्जम्बूनामधेयश्च स्थविरो दीर्घभद्रस्तथा स्थविरः पाण्डुभद्रः।

भद्दे। थेरे य सुमणभद्दे, मणिभद्दे पुण्णभद्दे य॥१॥ थेरे अ थूलभद्दे, उज्जुमई जंबुनामधिज्जे य। थेरे अ दीहभद्दे, थेरे तह पंडुभद्दे य॥२॥ (७)।

थेरस्स णं अज्जसंभूअविजयस्स माढरसगुत्तस्स इमाओ सत्त अंतेवासिणीओ अहावच्चाओ अभिण्णायाओ हुत्था, तं जहा-जक्खा य जक्खदिण्णा, भूआ तह चेव भूयदिण्णा य। सेणा वेणा रेणा, भइणीओ थूलभद्दस्स॥१॥ थेरस्स णं अज्जथूलभद्दस्स गोयमसगुत्तस्स इमे दो थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा-थेरे अज्जमहागिरी एलावच्चसगुत्ते, थेरे अज्जसुहत्थी वासिट्ठसगुत्ते (८)।

थेरस्स णं अज्जमहागिरिस्स एलावच्चसगुत्तस्स इमे अट्ठ थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा-थेरे उत्तरे, थेरे बलिस्सहे, थेरे धणड्ढे, थेरे सिरि(भद्दे)ड्ढे, थेरे कोडिन्ने, थेरे नागे, थेरे नागमित्ते, थेरे छडुलूए रोहगुत्ते कोसियगुत्ते णं (९)।

---

स्थविरस्यार्यसम्भूतविजयस्य माढरगोत्रस्येमाः सप्त अन्तेवासिन्यो 'यथापत्याः' सुशिष्या 'अभिज्ञाताः' प्रसिद्धा अभूवन्, तद्यथा-यक्षा यक्षदिन्ना भूता भूतदिन्ना सेणा वेणा रेणा, सप्ताप्येताः स्थूलभद्रस्य भगिन्यः (७)।

स्थविरस्य आर्यस्थूलभद्रस्य गौतमगोत्रस्येमौ द्वौ स्थविरावन्तेवासिनौ यथापत्यौ अभिज्ञातावभूतां, तद्यथा-स्थविर आर्यमहागिरिः एलापत्यगोत्रः, स्थविर आर्यसुहस्ती वाशिष्ठगोत्रः (८)।

स्थविरस्य आर्यमहागिरेः एलापत्यगोत्रस्येमेऽष्टौ स्थविरा अन्तेवासिनो यथापत्या अभिज्ञाता अभवन्, तद्यथा-स्थविर उत्तरः, स्थविरो बलिस्सहः, स्थविरो धनाढ्यः, स्थविरः श्री(भद्रः)आढ्यः, स्थविरः कौडिन्यः, स्थविरो नागः, स्थविरो नागमित्रः, स्थविरः षडुलूको रोहगुप्तः कौशिकगोत्रः।

अत्र विप्रतिपत्त्यवस्थायां द्रव्यगुण-कर्म-सामान्य-विशेष-समवायाख्यानां षट्पदार्थानां प्ररूपकत्वाद् गोत्रेणोलूकत्वाच्च षडुलूकः, अत एव सूत्रे "कोसियगुत्ते" इत्युक्तं, नार्थभेदः उलूककौशिकयोरिति (९)।

सूत्रं ७
स्थविराव-
लीविस्तृत-
वाचनायां
सम्भूत-
विजयस्थूल-
भद्रयोः
परिवारः

थेरेहिंतो णं छलूएहिंतो रोहगुत्तेहिंतो कोसियगुत्तेहिंतो त(ए)त्थ णं नेरासिया निग्गया। थेरेहिंतो णं उत्तर-बलिस्सहेहिंतो त(ए)त्थ

स्थविरात्षडुलूकाद्रोहगुप्तात्कौशिकगोत्रादत्र त्रैराशिकाः—जीवाजीवनोजीवाख्यराशित्रयप्ररूपिणो निर्गताः।

तदुत्पत्तिस्त्वेवं—पञ्चशतचतुश्चत्वारिंशे वीराब्दे अन्तरीजिकापुर्यां बलश्रीराज्ञः सभायां विद्ययोदरं स्फुटतीति लोहमयपट्टबद्धोदरेण जम्बूद्वीपे न कोऽपि मम जेताऽस्तीति करगृहीतजम्बूवृक्षशाखेन वृश्चिक-सर्प-मूषक-मृगी-वराही-काकी-शकुनिकारूपसप्तविद्याकुशलेन पोट्टशालपरिव्राजकेन सह विवादं कर्तुकामो रोहगुप्तः परिव्राजकविद्योपघातिका मयूरी-नकुली-बिडाली-व्याघ्री-सिंही-उलूकी-श्येनीरूपाः सप्तविद्या अशेषोपद्रवहारकं रजोहरणं च गुप्ताचार्यगुरुभ्योऽवाप्य गतो राजसभायां। तत्र च वादिना जीवाजीवसुखदुःखादिरूपे राशिद्वये स्थापिते—

"देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरा-स्त्रैलोक्यं त्रिपदी त्रिपुष्करमथ त्रिब्रह्म वर्णास्त्रयः।"
"त्रैगुण्यं पुरुषत्रयी त्रयमथो(मङ्गलं)सन्ध्यादिकालत्रयं, सन्ध्यानां त्रितयं वचस्त्रयमथाप्यर्थास्त्रयः संस्मृताः ॥१॥"

इत्यादिवचोयुक्त्या जीवाजीवनोजीवेति राशित्रयं व्यवस्थापितवान्। ततो वादिना विद्याः प्रयुक्तास्तत्र वृश्चिकादिसप्तविद्यास्तु गुरुप्रदत्तमयूर्यादिविद्याभिरष्टमीं च रासभीविद्यां रजोहरणेन प्रतिहत्य समहोत्सवं गुर्वन्तिके समागत्य विज्ञप्तः स्ववृत्तान्तः। गुरुभिश्च 'वत्स! साधुकृतं, परं राशित्रयमुत्सूत्रमतो ददस्व मिथ्यादुष्कृतं सभाया'मिति प्रोक्तोऽप्यवलेपादप्रतिपद्यमानो राजसभायां षण्मासीं यावद्वादमासूत्र्य कुत्रिकापणादप्यप्राप्ते नोजीवे चतुश्चत्वारिंशदधिकपृच्छाशतेन निर्लोठितः, कथमप्याग्रहममुञ्चन् गुरुणा कोपात् खेलमात्रकभस्मक्षेपणपूर्वकं

णं उत्तरवलिस्सहे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ एवमाहिज्जंति, तं जहा-कोसंबिया, सुत्तिवत्तिया, कोडंवाणी, चंदनागरी। थेरस्स णं अज्जसुहत्थिस्स वासिट्ठसगुत्तस्स इमे दुवालस थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा-थेरे अ अज्ज-रोहणे, जसभद्दे मेहगणी य कामिड्ढी। सुट्ठिय-सुप्पडिबुद्धे, रक्खिय तह रोहगुत्ते अ ॥ १ ॥ इसिगुत्ते सिरिगुत्ते, गणी अ बंभे गणी अ तह सोमे। दस दो अ गणहरा खलु, एए सीसा सुहत्थिस्स ॥ २ ॥

थेरेहिंतो णं अज्जरोहणेहिंतो णं कासवगुत्तेहिंतो णं त(ए)त्थ णं उद्देहगणे नामं गणे निग्गए, तस्सिमाओ चत्तारि साहाओ निग्गयाओ,

---

शिरो मुण्डयित्वा सङ्घान्निष्काशितः। ततः षष्ठो निह्नवस्त्रैराशिकः क्रमेण वैशेषिकदर्शनं प्रकटितवान्।

अत्र त्रैराशिकमतोत्पादको रोहगुप्त आर्यमहागिरिशिष्य उक्तः, स्थानाङ्गवृत्त्यादौ तु गुप्ताचार्यशिष्यस्तत्र तत्त्वं बहुश्रुतवेद्यम्।

स्थविराभ्यां उत्तर-बलिस्सहाभ्यामत्र उत्तरबलिस्सहनामको गणो निर्गतस्तस्येमाश्चतस्रः शाखा एवमाख्यायन्ते, तद्यथा—कौशाम्बिका सूक्तिप्रत्यया कौटुम्बानि चन्द्रनागरीति।

स्थविरस्य आर्यसुहस्तिनो वाशिष्ठगोत्रस्येमे द्वादश स्थविरा अन्तेवासिनो यथापत्या अभिज्ञाता अभवन्, तद्यथा—स्थविर आर्यरोहणो यशोभद्रो मेघगणिः कामर्द्धिः सुस्थितः सुप्रतिबुद्धो रक्षितस्तथा रोहगुप्तश्च। विभिन्नोऽयं त्रैराशिकाद्रोहगुप्तात्, तस्य आर्यमहागिरिशिष्यत्वादस्य तु सुहस्तिशिष्यत्वात्। ऋषिगुप्तः, श्रीगुप्तो गणिः, ब्रह्मगणिः, सोमः, एते द्वादश 'गणधराः' आचार्याः खल्विति निश्चयेन सुहस्तिनः शिष्याः।

स्थविरादार्यरोहणात्काश्यपगोत्रादत्र उद्देहगण इति नामको गणो निर्गतस्तस्येमाश्चतस्रः शाखाः निर्गताः,

छच कुलाइं एवमाहिज्जंति। से किं तं साहाओ?, साहाओ एवमाहिज्जंति, तं जहा-उदुंबरिज्जिया मासपूरिया मइपत्तिया पुण्णपत्तिया, से तं साहाओ। से किं तं कुलाइं?, कुलाइं एवमाहिज्जंति, तं जहा-पढमं च नागभूयं, बिइयं पुण सोमभूइयं होइ। अह उल्लगच्छ तइयं, चउत्थयं हत्थलिज्जं तु ॥ १ ॥ पंचमगं नंदिज्जं, छट्ठं पुण पारिहासयं होइ। उद्देहगणस्सेए, छच्च कुला हुंति नायव्वा ॥ २ ॥

थेरेहिंतो णं सिरिगुत्तेहिंतो हारियसगुत्तेहिंतो इत्थ णं चारणगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ सत्त य कुलाइं एवमाहिज्जंति। से किं तं साहाओ?, साहाओ एवमाहिज्जंति, तं जहा-हारियमालागारी संकासीया गवेधुया वज्जनागरी, से तं साहाओ। से किं तं कुलाइं?, कुलाइं एवमाहिज्जंति, तं जहा-पढमित्थ वत्थलिज्जं, बियं पुण पीइधम्मियं होइ। तइअं पुण हालिज्जं, चउत्थयं पूसमित्तिज्जं ॥ १ ॥ पंचमगं मालिज्जं, छट्ठं पुण अज्जवेडयं होइ। सत्तमयं कण्हसहं, सत्त कुला चारणगणस्स ॥ २ ॥

---

षट्च कुलान्येवमाख्यायन्ते। अथ कास्ताः शाखाः?, शाखा एवमाख्यायन्ते, तद्यथा-उदुम्बरीया मासपूरिका मतिपत्रिका पूर्णपत्रिका, एताः शाखाः। अथ कानि तानि कुलानि?, कुलान्येवमाख्यायन्ते, तद्यथा-प्रथमं नागभूतं द्वितीयं पुनः सोमभूतिकं भवति, अथ आर्द्रगच्छं तृतीयं, चतुर्थं हस्तलीयं तु। पञ्चमकं नन्दीयं षष्ठं पुनः पारिहासकं भवति, उद्देहगणस्यैतानि षट्कुलानि ज्ञातव्यानि भवन्ति।

स्थविरात् श्रीगुप्तात् हारितगोत्रादत्र चारणगण इति नामको गणो निर्गतस्तस्येमाश्चतस्रः शाखाः सप्त च कुलान्येवमाख्यायन्ते, अथ कास्ताः शाखाः?, शाखा एवमाख्यायन्ते, तद्यथा-हारितमालाकारी सङ्काशिका गवेधुका वज्रनागरी, एताः शाखाः। अथ कानि तानि कुलानि?, कुलानि एवमाख्यायन्ते, तद्यथा-प्रथममत्र वस्त्रलीयं द्वितीयं पुनः प्रीतिधार्मिकं भवति, तृतीयं पुनर्हालीयं, चतुर्थकं पुष्यमित्रीयं। पञ्चमकं मालीयं षष्ठं

थेरेहिंतो णं भद्दजसेहिंतो भारद्दायसगुत्तेहिंतो इत्थ णं उडुवाडियगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ तिण्णि कुलाइं एवमाहिज्जंति। से किं तं साहाओ ?, साहाओ एवमाहिज्जंति, तं जहा-चंपिज्जिया भद्दिज्जिया काकंदिया मेहलिज्जिया, से तं साहाओ। से किं तं कुलाइं ?, कुलाइं एवमाहिज्जंति, तं जहा-भद्दजसियं तह भद्दगुत्तियं तइयं च होइ जसभद्दं। एयाइं उडुवाडिय-गणस्स तिण्णेव य कुलाइं ॥१॥ थेरेहिंतो णं कामिड्ढीहिंतो कोडालसगुत्तेहिंतो इत्थ णं वेसवाडियगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ चत्तारि कुलाइं एवमाहिज्जंति। से किं तं साहाओ ?, साहाओ एवमाहिज्जंति, तं जहा-सावत्थिया रज्जपालिया अंतरिज्जिया खेमलिज्जिया, से तं साहाओ। से किं तं कुलाइं ?, कुलाइं एवमाहिज्जंति, तं जहा-गणियं मेहियं कामि-ड्ढिअं च तह होइ इंदपूरगं च। एयाइं वेसवाडिय-

---

पुनरार्यवेटकं भवति, सप्तमं कृष्णसहमिति सप्त कुलानि चारणगणस्य। स्थविरादार्यभद्रयशसो भारद्वाज-गोत्रादत्र उडुवाटिकगण इति नामको गणो निर्गतस्तस्येमाश्चतस्रः शाखाः त्रीणि कुलान्येवमाख्यायन्ते। अथ कास्ताः शाखाः ?, शाखा एवमाख्यायन्ते, तद्यथा-चम्पीया भद्रीया काकन्दिका मेखलीया, तदेताः शाखाः। अथ कानि तानि कुलानि ?, कुलान्येवमाख्यायन्ते, तद्यथा-भद्रयशस्कं तथा भद्रगुप्तिकं तृतीयं च यशोभद्र-मित्येतानि उडुवाटिकगणस्य त्रीण्येव कुलानि भवन्ति। स्थविरात्कामर्द्धेः कोडालगोत्रादत्र वेशवाटिकगण इति नामको गणो निर्गतः, तस्येमाश्चतस्रः शाखाश्चत्वारि कुलान्येवमाख्यायन्ते। अथ कास्ताः शाखाः ?, शाखा एवमाख्यायन्ते, तद्यथा-श्रावस्तिका राज्यपालिका अन्तरीया क्षेमलीया, तदेताः शाखाः। अथ कानि तानि कुलानि ?, कुलान्येवमाख्यायन्ते, तद्यथा-गणिकं मेघिकं कामर्द्धिकं तथा इन्द्रपूरकं चैतानि वेशवाटिकगणस्य चत्वारि कुलानि भवन्ति। स्थविरादृषिगुप्तात्, काकन्दकमिति बिरुदप्रायमस्येति काकन्दकाद्वाशिष्ठगोत्रादत्र मानव-

गणस्स चत्तारि उ कुलाइं ॥१॥ थेरेहिंतो णं इसिगुत्तेहिंतो काकंदएहिंतो वासिट्ठसगुत्तेहिंतो इत्थ णं माणवगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ तिण्णि य कुलाइं एवमाहिज्जंति। से किं तं साहाओ ?, साहाओ एवमाहिज्जंति, तं जहा-कासवज्जिया गोयमज्जिया वासिट्ठिया सोरट्ठिया, से तं साहाओ। से किं तं कुलाइं ?, कुलाइं एवमाहिज्जंति, तं जहा-इसिगुत्ति इत्थ पढमं, बीयं इसिदत्तियं मुणेयव्वं। तइयं च अभिजयंतं, तिण्णि कुला माणवगणस्स ॥१॥ थेरेहिंतो सुट्ठिय-सुप्पडिबुद्धेहिंतो कोडिय-काकंदएहिंतो वग्घावच्चसगुत्तेहिंतो इत्थ णं कोडियगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ चत्तारि कुलाइं च एवमाहिज्जंति। से किं तं साहाओ ?, साहाओ एवमाहिज्जंति, तं जहा-उच्चनागरी विज्जाहरी य वयरी य मज्झिमिल्ला य। कोडियगणस्स एया, हवंति चत्तारि साहाओ ॥१॥ से तं साहाओ। से किं तं कुलाइं ?, कुलाइं एवमाहिज्जंति, तं जहा-पढमित्थ बंभलिज्जं, बिइयं नामेण वत्थलीयं तु। तइयं पुण वाणिज्जं, चउत्थयं पण्हवाहणयं ॥१॥

---

गण इति नामको गणो निर्गतस्तस्येमाश्चतस्रः शाखास्त्रीणि च कुलान्येवमाख्यायन्ते। अथ कास्ताः शाखाः ?, शाखा एवमाख्यायन्ते, तद्यथा-काश्यपार्यिका गौतमार्यिका वाशिष्ठिका सौराष्ट्रिका। तदेताः शाखाः। अथ कानि तानि कुलानि ?, कुलान्येवमाख्यायन्ते, तद्यथा-ऋषिगुप्तीयमत्र प्रथमं द्वितीयं ऋषिदत्तिकं, तृतीयं चाभिजयन्तमिति त्रीणि कुलानि मानवगणस्य ज्ञातव्यानि। स्थविराभ्यां सुस्थित-सुप्रतिबुद्धाभ्यां कौटिक-काकन्दकाभ्यां व्याघ्रापत्यगोत्राभ्यामत्र कौटिकगण इति नामको गणो निर्गतस्तस्येमाश्चतस्रः शाखाश्चत्वारि च कुलान्येवमाख्यायन्ते। अथ कास्ताः शाखाः ?, शाखा एवमाख्यायन्ते, तद्यथा-उच्चैर्नागरी विद्याधरी वज्री माध्यमिका चैताः कौटिकगणस्य चतस्रः शाखा भवन्ति, तदेताः शाखाः। अथ कानि तानि कुलानि ?, कुलान्येवमाख्यायन्ते, तद्यथा-प्रथममत्र ब्रह्मलीयं द्वितीयं नामेन वस्त्रलीयं तृतीयं पुनर्वाणिज्यं चतुर्थकं प्रश्नवाहनकं (१०)।

थेराणं सुट्ठिय-सुप्पडिबुद्धाणं कोडिय-काकंदगाणं वग्घावच्चसगुत्ताणं इमे पंच थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा–थेरे अज्जइंददिन्ने थेरे पियगंथे थेरे विज्जाहरगोवाले कासवगुत्ते णं थेरे इसिदिन्ने थेरे अरिहदत्ते। थेरेहिंतो णं पियगंथेहिंतो एत्थ णं

स्थविरयोः सुस्थित-सुप्रतिबुद्धयोः कौटिक-काकन्दकयोर्व्याघ्रापत्यगोत्रयोरिमे पञ्च स्थविरा अन्तेवासिनो यथापत्या अभिज्ञाता अभवन्, तद्यथा–स्थविर आर्यइन्द्रदिन्नः स्थविरः प्रियग्रन्थः स्थविरो विद्याधरगोपालः काश्यपगोत्रः स्थविर ऋषिदत्तः स्थविरोऽर्हद्दत्तः। स्थविरात् प्रियग्रन्थादत्र मध्यमा शाखा निर्गता, तद्वृत्तस्त्वेवम्—

कदाचित्त्रिशतजिनालय-चतुःशतलौकिकप्रासादा-ष्टादशशतविप्रगृह-षट्त्रिंशच्छतवणिग्गेह-नवशतारामादिविराजितेऽजमेर्वासन्नस्थे सुभटपालनृपसत्के हर्षपुरे श्रीप्रियग्रन्थसूरयोऽभ्येयुः, इतश्च द्विजैर्यागे छागो हन्तुमारेभे, सूरिभिः श्राद्धकरार्पितवासक्षेपे अम्बिकाऽधिष्ठितश्छागो नभसि भूत्वाऽवदत्—

“हनिष्यथ ? नु मां हुत्यै, बध्नीताऽऽयात मा हत। युष्मद्वन्निर्दयः स्यां चे–त्तदा हन्मि क्षणेन वः ॥१॥ यत्कृतं रक्षसां द्रङ्गे, कुपितेन हनूमता। तत्करोम्येव वः स्वस्थः, कृपा चेन्नान्तरा भवेत् ॥ २ ॥ किञ्च–यावन्ति रोमकूपाणि, पशुगात्रेषु भारत !। तावद्वर्षसहस्राणि, पच्यन्ते पशुघातकाः ॥ ३ ॥” इत्यादि जल्पिते “कस्त्वं ? प्रकाशयात्मानं, तेनोक्तं पावकोऽस्म्यहं। ममैनं वाहनं कस्मा–ज्जिघांसथ ? पशुं वृथा ॥ ४ ॥ इहास्ति श्रीप्रियग्रन्थः, सूरीन्द्रः समुपागतः। तं पृच्छत शुचिं धर्मं, समाचरत शुद्धितः ॥ ५ ॥”

ततस्तैस्तथा कृतेऽनेके जीवाः प्रतिबुद्धाः प्रव्रजिताश्चातो मध्यमा शाखा निर्गता।

मज्झिमा साहा निग्गया, थेरेहिंतो णं विज्जाहरगोवालेहिंतो कासवगुत्तेहिंतो एत्थ णं विज्जाहरी साहा निग्गया (११)।

थेरस्स णं अज्जइंददिन्नस्स कासवगुत्तस्स अज्जदिन्ने थेरे अंतेवासी गोयमसगुत्ते (१२)। थेरस्स णं अज्जदिन्नस्स गोयमसगुत्तस्स इमे दो थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा-थेरे अज्जसंतिसेणिए माढरसगुत्ते, थेरे अज्जसीहगिरी जाइस्सरे कोसियगुत्ते। थेरेहिंतो णं अज्जसंतिसेणिएहिंतो माढरसगुत्तेहिंतो एत्थ णं उच्चानागरी साहा निग्गया (१३)। थेरस्स णं अज्जसंतिसेणियस्स माढरसगुत्तस्स इमे चत्तारि थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा-(ग्रं० २०००) थेरे अज्जसेणिए, थेरे अज्जतावसे, थेरे अज्जकुबेरे, थेरे अज्जइसिपालिए। थेरेहिंतो णं अज्जसेणिएहिंतो एत्थ णं अज्जसेणिया साहा निग्गया, थेरेहिंतो णं अज्जतावसेहिंतो एत्थ णं अज्जतावसी साहा निग्गया, थेरेहिंतो णं अज्जकुबेरेहिंतो एत्थ णं अज्जकुबेरा साहा निग्गया, थेरेहिंतो णं अज्जइसिपालिएहिंतो एत्थ णं

---

स्थविराद्विद्याधरगोपालात्काश्यपगोत्रादत्र विद्याधरी शाखा निर्गता (११)। स्थविरस्य आर्येन्द्रदिन्नस्य काश्यपगोत्रस्य आर्यदिन्नः स्थविरोऽन्तेवासी गौतमगोत्रः (१२)। स्थविरस्य आर्यदिन्नस्य गौतमगोत्रस्येमौ द्वौ स्थविरावन्तेवासिनौ यथापत्यावभिज्ञातावभवतां,तद्यथा–स्थविर आर्यशान्तिश्रेणिको माढरगोत्रः,स्थविर आर्यसिंहगिरिर्जातिस्मरः कौशिकगोत्रः। स्थविरादार्यशान्तिश्रेणिकान्माढरगोत्रादत्र उच्चैर्नागरी शाखा निर्गता (१३)। स्थविरस्य आर्यशान्तिश्रेणिकस्येमे चत्वारः स्थविरा अन्तेवासिनो यथापत्या अभिज्ञाता अभवन्, तद्यथा–स्थविर आर्यश्रेणिकः, स्थविर आर्यतापसः, स्थविर आर्यकुबेरः, स्थविर आर्यऋषिपालितः। स्थविरादार्यश्रेणिकादत्र आर्यश्रेणिका शाखा निर्गता। स्थविरादार्यतापसादत्र आर्यतापसी शाखा निर्गता, स्थविरादार्यकुबेरादत्र आर्यकुबेरा शाखा निर्गता, स्थविरादार्यऋषिपालितादत्र आर्यऋषिपालिता शाखा निर्गता।

अज्जइसिपालिया साहा निग्गया।

थेरस्स णं अज्जसीहगिरिस्स जाइस्सरस्स कोसियगुत्तस्स इमे चत्तारि थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा-थेरे धणगिरी, थेरे अज्जवइरे, थेरे अज्जसमिए, थेरे अरिहदिन्ने। थेरेहिंतो णं अज्जसमिएहिंतो गोयमसगुत्तेहिंतो इत्थ णं बंभदीविया साहा निग्गया, थेरेहिंतो णं अज्जवइरेहिंतो गोयमसगुत्तेहिंतो एत्थ णं अज्जवइरी साहा निग्गया (१४)। थेरस्स णं अज्जवइरस्स गोयमस-

---

स्थविरस्य आर्यसिंहगिरेर्जातिस्मरस्य कौशिकगोत्रस्येमे चत्वारः स्थविरा अन्तेवासिनो यथापत्या अभिज्ञाता अभवन्, तद्यथा-स्थविरो धनगिरिः, स्थविर आर्यवज्रः, स्थविर आर्यसमितः, स्थविरः अर्हद्दत्तः। स्थविरादार्यसमिताद्गौतमगोत्रादत्र ब्रह्मद्वीपिका शाखा निर्गता, तद्वृत्तस्त्वेवं—

ते हि सूरयो आभीरदेशाचलपुरासन्ननद्यां योगचूर्णं निक्षिप्य पादप्रलेपमात्रेण जलोपरि गमनविस्मापितजनस्य पाखण्डिनो दर्पखण्डनं विधाय प्रवचनप्रभावनया सरिन्मध्यस्थब्रह्मद्वीपवासिनस्तापसान् प्रत्यबूबुधन् प्रव्राजयंश्च, ततो ब्रह्मद्वीपिका शाखाऽभवत्।

स्थविरादार्यवज्राद्गौतमगोत्रादत्रार्यवज्री शाखा निर्गता। श्रीवज्रस्वामिपर्यवसानमेव दशपूर्वज्ञानं, यदुक्तम्—

"महागिरिः[1] सुहस्ती[2] च, सूरिः श्रीगुणसुन्दरः[3]। श्यामार्यः[4] स्कन्दिलाचार्यो[5], रेवतीमित्रसूरिराट्[6] ॥ १ ॥"

"श्रीधर्मो[7] भद्रगुप्तश्च[8], श्रीगुप्तो[9] वज्रसूरिराट्[10]। युगप्रधानप्रवरा, दशैते दशपूर्विणः ॥ २ ॥" (१४)

स्थविरस्य आर्यवज्रस्य गौतमगोत्रस्येमे त्रयः स्थविरा अन्तेवासिनो यथापत्या अभिज्ञाता अभवन्, तद्यथा-

गुत्तस्स इमे तिण्णि थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा–थेरे अज्जवइरसेणे, थेरे अज्जपउमे, थेरे अज्जरहे। थेरेहिंतो णं अज्जवइरसेणेहिंतो इत्थ णं अज्जनाइली साहा निग्गया, थेरेहिंतो णं अज्जपउमेहिंतो इत्थ णं अज्जपउमा साहा निग्गया, थेरेहिंतो णं अज्जरहेहिंतो इत्थ णं अज्जजयंती साहा निग्गया (१५)। थेरस्स णं अज्जरहस्स वच्छसगुत्तस्स अज्जपूसगिरी थेरे अंतेवासी कोसियगुत्ते (१६)। थेरस्स णं अज्जपूसगिरिस्स कोसियगुत्तस्स अज्जफग्गुमित्ते थेरे अंतेवासी गोयमसगुत्ते (१७)। थेरस्स णं अज्जफग्गुमित्तस्स गोयमसगुत्तस्स अज्जधणगिरी थेरे अंतेवासी वासिट्ठसगुत्ते (१८)। थेरस्स णं अज्जधणगिरिस्स वासिट्ठसगुत्तस्स अज्जसिवभूई थेरे अंतेवासी कुच्छसगुत्ते (१९)। थेरस्स णं अज्जसिवभूइस्स कुच्छसगुत्तस्स अज्जभद्दे थेरे अंतेवासी कासवगुत्ते (२०)। थेरस्स णं अज्जभद्दस्स

---

स्थविर आर्यवज्रसेनः, स्थविर आर्यपद्मः, स्थविर आर्यरथः। स्थविरादार्यवज्रसेनादत्र आर्यनागिला शाखा निर्गता×, स्थविरादार्यपद्मादत्र आर्यपद्मा शाखा निर्गता। स्थविरादार्यरथादत्र आर्यजयन्ती शाखा निर्गता (१५)।

स्थविरस्य आर्यरथस्य वत्सगोत्रस्य आर्यपुष्यगिरिः स्थविरोऽन्तेवासी कौशिकगोत्रः (१६)। स्थविरस्य आर्यपुष्यगिरेः कौशिकगोत्रस्य आर्यफल्गुमित्रः स्थविरोऽन्तेवासी गौतमगोत्रः (१७)। स्थविरस्य आर्यफल्गुमित्रस्य गौतमगोत्रस्य आर्यधनगिरिः स्थविरोऽन्तेवासी वाशिष्ठगोत्रः (१८)। स्थविरस्य आर्यधनगिरेर्वाशिष्ठगोत्रस्य आर्यशिवभूतिः स्थविरोऽन्तेवासी कुत्सगोत्रः (१९)। स्थविरस्य आर्यशिवभूतेः कुत्सगोत्रस्य आर्यभद्रः स्थविरोऽन्तेवासी काश्यपगोत्रः (२०)। स्थविरस्य आर्यभद्रस्य काश्यपगोत्रस्य आर्यनक्षत्रः स्थविरोऽन्तेवासी

---

× यद्यप्यत्र "थेराओ अज्जनाइलाओ अज्जनाइला साहा निग्गया" इत्यनेन सङ्क्षिप्तवाचनापठितसूत्रांशेन वज्रसेनशिष्यादार्यनागिलाच्छाखा निर्गतेत्युक्तं, परं गुरुशिष्ययोरभेदोपचारेण गुरोरेव प्राधान्यख्यापनायात्रेत्थमुक्तमिति सम्भाव्यते, तत्त्वं तु बहुश्रुतवेद्यम्।

कासवगुत्तस्स अज्जनक्खत्ते थेरे अंतेवासी कासवगुत्ते (२१)। थेरस्स णं अज्जनक्खत्तस्स कासवगुत्तस्स अज्जरक्खे थेरे अंतेवासी कासवगुत्ते (२२)। थेरस्स णं अज्जरक्खस्स कासवगुत्तस्स अज्जनागे थेरे अंतेवासी गोअमसगुत्ते (२३)। थेरस्स णं अज्जनागस्स गोअमसगुत्तस्स अज्जजेहिले थेरे अंतेवासी वासिट्ठसगुत्ते (२४)। थेरस्स णं अज्जजेहिलस्स वासिट्ठसगुत्तस्स अज्जविण्हू थेरे अंतेवासी माढरसगुत्ते (२५)। थेरस्स णं अज्जविण्हुस्स माढरसगुत्तस्स अज्जकालए थेरे अंतेवासी गोयमसगुत्ते (२६)। थेरस्स णं अज्जकालयस्स गोयमसगुत्तस्स इमे दो थेरा अंतेवासी गोयमसगुत्ता-थेरे अज्जसंपलिए, थेरे अज्जभद्दे (२७)। एएसि णं दुण्ह वि थेराणं गोयमसगुत्ताणं अज्जवुड्ढे थेरे अंतेवासी गोयमसगुत्ते (२८)। थेरस्स णं अज्जवुड्ढस्स गोयमसगुत्तस्स अज्जसंघपालिए थेरे अंतेवासी गोयमसगुत्ते (२९)।

काश्यपगोत्रः (२१)। स्थविरस्य आर्यनक्षत्रस्य काश्यपगोत्रस्य आर्यरक्षः × स्थविरोऽन्तेवासी काश्यपगोत्रः (२२)। स्थविरस्य आर्यरक्षस्य काश्यपगोत्रस्य आर्यनागः स्थविरोऽन्तेवासी गौतमगोत्रः (२३)। स्थविरस्य आर्यनागस्य गौतमगोत्रस्य आर्यजेहिलः स्थविरोऽन्तेवासी वाशिष्ठगोत्रः (२४)। स्थविरस्य आर्यजेहिलस्य वाशिष्ठगोत्रस्य आर्यविष्णुः स्थविरोऽन्तेवासी माढरगोत्रः (२५)। स्थविरस्य आर्यविष्णोर्माढरगोत्रस्य आर्यकालकः स्थविरोऽन्तेवासी गौतमगोत्रः। यथाऽवसरमत्र कालकाचार्यकथा वक्तव्या (२६)। स्थविरस्य आर्यकालकस्य गौतमगोत्रस्येमौ द्वौ स्थविरावन्तेवासिनौ गौतमगोत्रावभूतां—स्थविर आर्यसम्पलितः, स्थविर आर्यभद्रः (२७)। एतयोर्द्वयोरपि स्थविरयोर्गौतमगोत्रयोरार्यवृद्धः स्थविरोऽन्तेवासी गौतमगोत्रः। विक्रमादित्यनृपप्रतिबोधाद्यनेकधा जैनशासनप्रभावक-श्रीसिद्धसेनदिवाकरसूरिगुरवो ये वृद्धवादिसूरयस्तेभ्यो भिन्ना एते आर्यवृद्धाः, अर्वाकालीनत्वात् (२८)। स्थविरस्य आर्यवृद्धस्य गौतमगोत्रस्य आर्य-

× आर्यरक्ष-रक्षितयोः स्फुटेऽपि भेदे स्वाज्ञत्वप्रकटनाय येनात्रार्यरक्षितवृत्तो लिखितस्तत्किरणावलीकारस्य वचसि कीदृशो विश्वास इति तु स्वयमूह्यस्तत्त्वविवेचकैः।

थेरस्स णं अज्जसंघपालियस्स गोयमसगुत्तस्स अज्जहत्थी थेरे अंतेवासी कासवगुत्ते (३०)। थेरस्स णं अज्जहत्थिस्स कासवगुत्तस्स अज्जधम्मे थेरे अंतेवासी सुव्वयगुत्ते + (३१)। थेरस्स णं अज्जधम्मस्स सुव्वयगुत्तस्स अज्जसीहे थेरे अंतेवासी कासवगुत्ते (३२)। थेरस्स णं अज्जसीहस्स कासवगुत्तस्स अज्जधम्मे थेरे अंतेवासी कासवगुत्ते (३३)। थेरस्स णं अज्जधम्मस्स कासवगुत्तस्स अज्जसंडिल्ले थेरे अंतेवासी (३४)।

वंदामि फग्गुमित्तं, च गोयमं धणगिरिं च वासिट्ठं। कुच्छं सिवभूइं पि य, कोसिय दुज्जंत कण्हे अ ॥ १ ॥ ते वंदिऊण सिरसा, भद्दं वंदामि कासवगुत्तं। नक्खं कासवगुत्तं, रक्खं पि य कासवं वंदे ॥ २ ॥ वंदामि अज्जनागं, च गोयमं जेहिलं च वासिट्ठं। विण्हुं

महापालितः स्थविरोऽन्तेवासी गौतमगोत्रः (२९)। स्थविरस्य आर्यसङ्घपालितस्य गौतमगोत्रस्य आर्यहस्ती स्थविरोऽन्तेवासी काश्यपगोत्रः (३०)। स्थविरस्य आर्यहस्तिनः काश्यपगोत्रस्य आर्यधर्मः स्थविरोऽन्तेवासी सुव्रतगोत्रः (३१)। स्थविरस्य आर्यधर्मस्य सुव्रतगोत्रस्य आर्यसिंहः स्थविरोऽन्तेवासी काश्यपगोत्रः (३२)। स्थविरस्य आर्यसिंहस्य काश्यपगोत्रस्य आर्यधर्मः स्थविरोऽन्तेवासी काश्यपगोत्रः (३३)। स्थविरस्य आर्यधर्मस्य काश्यपगोत्रस्य आर्यशाण्डिल्यः स्थविरोऽन्तेवासी जातः (३४)। अथ प्रायो भणितार्थसङ्ग्रहरूपगाथाकदम्बके-नार्यफल्गुमित्रात्परतो देवर्द्धिगणिक्षमाश्रमणान्तेभ्यो निर्दिष्टानिर्दिष्टस्थविरेभ्यो वन्दनमाह—

गौतमगोत्रं फल्गुमित्रं वाशिष्ठगोत्रं धनगिरिं कुत्सगोत्रं शिवभूतिमपि च, कौशिकगोत्रं दुर्यन्तं तथा कृष्ण-नामानं च स्थविरमहं वन्दे ॥ १ ॥ तान्–कृष्णपर्यन्तान् स्थविरान् 'शिरसा' मस्तकेन वन्दित्वा, भद्रं नक्षत्रं रक्षमपि च, एतान् काश्यपगोत्रान् स्थविरान् वन्दे ॥ २ ॥ ततश्च गौतमगोत्रं आर्यनागं वाशिष्ठगोत्रं चार्यजेहिलं

+ इदं तु बहुष्वादर्शेषु "सावयगुत्ते" इति पाठ, परमर्थसङ्गततास्मै गुणः प्रतिभाति, यत "सावये"ति शब्दस्यार्थः "श्वापद–श्रावक" इति वा विधेयः।

माढरगुत्तं, कालगमवि गोयमं वंदे ॥ ३ ॥ गोयमगुत्तकुमारं, संपलियं तह य भद्दयं वंदे । थेरं च अज्जवुड्ढं, गोयमगुत्तं नमंसामि ॥ ४ ॥ तं वंदिऊण सिरसा, थिरसत्तचरित्तनाणसंपन्नं । थेरं च संघवालिय, गोयमगुत्तं पणिवयामि ॥ ५ ॥ वंदामि अज्जहत्थिं, च कासवं खंतिसागरं धीरं । गिम्हाण पढममासे, कालगयं चेव सुद्धस्स ॥ ६ ॥ वंदामि अज्जधम्मं, च सुव्वयं सीललद्धिसंपन्नं । जस्स निक्खमणे देवो, छत्तं वरमुत्तमं वहइ ॥ ७ ॥ हत्थिं कासवगुत्तं, धम्मं सिवसाहगं पणिवयामि । सीहं कासवगुत्तं, धम्मं पि य कासवं वंदे ॥ ८ ॥ तं वंदिऊण सिरसा, थिरसत्तचरित्तनाणसंपन्नं । थेरं च अज्जजंवुं, गोयमगुत्तं नमंसामि ॥ ९ ॥ मिउमद्दवसंपन्नं, उवउत्तं नाणदंसणचरित्ते ।

---

माढरगोत्रं विष्णुं कालकमपि च गौतमगोत्रं वन्दे ॥ ३ ॥ ततो गौतमगोत्रं कुमारश्रमणं सम्पलितं तथा भद्रकं वन्दे । स्थविरं चार्यवृद्धं गौतमगोत्रं नमस्कुर्वे ॥ ४ ॥ 'तं' आर्यवृद्धं शिरसा वन्दित्वा स्थिरैः सत्त्वचारित्रज्ञानैः 'सम्पन्नं' युक्तं गौतमगोत्रं च सङ्घपालितं स्थविरं प्रणिपतामि ॥ ५ ॥ क्षान्त्याः सागरं 'धीरं' धैर्यगुणसमन्वितं, तथा 'शुद्धस्य' शुक्लपक्षान्वितस्य ग्रीष्मस्य प्रथममासे, चैत्रशुक्ले इत्यर्थः, कालगतं, आर्यहस्तिनं काश्यपगोत्रं वन्दे ॥ ६ ॥ पुनः सुव्रतगोत्रं 'शीललब्धिसम्पन्नं' आर्यधर्मं वन्दामि, यस्य निष्क्रमणे' दीक्षोत्सवे 'देवः' कोऽपि प्राग्भवसङ्गतिको 'वरा' प्रधाना 'मा' लक्ष्मीस्तया उत्तमं छत्रं वहति–धारयति ॥ ७ ॥ आर्यहस्तिनं काश्यपगोत्रं तथाऽऽर्यधर्मं शिवसाधकं प्रणिपतामि, ततः सिंहं काश्यपगोत्रं धर्ममपि च काश्यपं वन्दे ॥ ८ ॥ 'तं' चार्यधर्मं शिरसा वन्दित्वा स्थिरसत्त्वचारित्रज्ञानसम्पन्नं स्थविरमार्यजम्बूं गौतमगोत्रं नमस्करोमि ॥ ९ ॥ 'मृदुः' सुकुमालं य'न्मार्दवं' मानराहित्यं, तेन सम्पन्नं, ज्ञानदर्शनचारित्रात्मके च मोक्षमार्गे उपयुक्तं स्थविरं

स्थविरावलीपद्यचतुर्दशके कालकाचार्यादि स्थविर-वन्दनम्

गोत्तं च नंदियं पि य, कासवगुत्तं पणिवयामि ॥ १० ॥ तत्तो य थिरचरित्तं, उत्तमसंमत्तसत्तसंजुत्तं । देसिगणिखमासमणं, माढरगुत्तं नमंसामि ॥ ११ ॥ तत्तो अणुओगधरं, धीरं मइसागरं महासत्तं । थिरगुत्तखमासमणं, वच्छसगुत्तं पणिवयामि ॥ १२ ॥ तत्तो य नाणदंसण-चरित्ततवसुट्ठियं गुणमहंतं । थेरं कुमारधम्मं, वंदामि गणिगुणोववेयं ॥ १३ ॥ सुत्तत्थरयणभरिए, खमदममद्दवगुणेहिं संपन्ने । देविड्ढिखमासमणे, कासवगुत्ते पणिवयामि ॥ १४ ॥

---

नन्दिगमपि काश्यपगोत्रं प्रणिपतामि ॥ १० ॥ ततश्च स्थिरचारित्रवन्तं उत्तमसम्यक्त्वसत्त्वाभ्यां संयुक्तं देशिगणिक्षमाश्रमणं माढरगोत्रं नमस्करोमि ॥ ११ ॥ ततोऽनुयोगधरं धैर्यसमन्वितं मत्याः सागरं महासत्त्ववन्तं वत्सगोत्रं स्थिरगुप्तक्षमाश्रमणं प्रणिपतामि ॥ १२ ॥ ततश्च ज्ञानदर्शनचारित्रतपस्सु सुस्थितं धैर्यादिगुणैर्महान्तं गणेर्ये गुणाः प्रतिरूपत्वादयस्तैरुपपेतं-समन्वितं स्थविरं कुमारधर्मं वन्दे ॥ १३ ॥ सूत्रार्थरूपे ये रत्ने, ताभ्यां 'भृतान्' परिपूर्णान्, पुनः 'क्षमा' क्षान्तिः 'दमः' इन्द्रियादिजयः 'मार्दवं' अभिमानराहित्यं, इत्यादिकैर्गुणैः 'सम्पन्नान्' युक्तान् देवर्द्धिगणिक्षमाश्रमणान् काश्यपगोत्रान् प्रणिपतामि ॥ १४ ॥

एतद्व्यतिरिक्ता अन्येऽप्यनेके स्थविरा आचार्याः सञ्जाता यैर्नानाप्रकारैः शासनमुद्योतितं, यथा—आर्यरक्षितसूरयः, ये सम्मिलितं द्रव्याद्यनुयोगचतुष्कं पृथक् पृथक् संस्थापितवन्तोऽखिलमपि च स्वकुटुम्बं दीक्षितवन्तः । मल्लवादिसूरयः यैर्भृगुकच्छे बुद्धानन्दं बौद्धवादिनं निर्जित्य विहिता शासनप्रभावना । सिद्धसेनदिवाकराः, यैरवन्त्यां महाकालमतिकृतेरगः स्वमयेन्तिपार्श्वबिम्बं प्रकटीकृत्य प्रतिबोध्य च विक्रमादित्यं नरेशं विहिता जैनशासनस्य

महती प्रभावना। जिनभद्रगणिक्षमाश्रमणाः, यैर्विहिता विशेषावश्यकभाष्यादयोऽनेके सिद्धान्ताकरग्रन्थाः। जिनदासगणिमहत्तराः, यैरावश्यकादिचूर्णयः सन्दर्भिताः। हरिभद्रसूरयः, यैर्याकिनीमहत्तरातः प्रतिबोधमवाप्य प्रव्रज्य चानेकधा द्योतितं वीरशासनं। तथैव सिद्धवटाधश्चतुरशीतिश्रमणानाचार्यत्वे संस्थाप्य चतुरशीतिगच्छसंस्थापकाः श्रीमानुद्योतनसूरयः, तच्छिष्या वर्द्धमानसूरयः, यैः षाण्मासिकाचाम्लतपसा समाकृष्टधरणेन्द्रसाहाय्यतः सूरिमन्त्रस्य संशोधनमकारि अर्बुदाद्रौ च विहिता विमलवसहिचैत्यस्य प्रतिष्ठा। तच्छिष्यौ जिनेश्वर-बुद्धिसागरसूरी, तयोर्मध्याज्जिनेश्वरसूरिभिरशीत्यधिके सहस्रे वैक्रमेऽणहिल्लपत्तने राजसदसि सूराचार्यादिचैत्यवासीन् साध्वाचारवादे निर्जित्य ×श्रीमदुर्लभराजादवाप्तमन्वर्थाभिधानं + खरतरेति विरुदं, सन्दर्भिताश्च हारिभद्रीयाष्टकवृत्ति-

× नाशङ्क्यं यद्दुर्लभराजस्य राज्यमेवाष्टसप्तत्यधिकं सहस्रं यावदेवाभूत्ततः कथं 'अशीत्यधिके सहस्रे दुर्लभेन राज्ञा जिनेश्वरसूरये खरतरविरुदं प्रदत्तमिति घटामियर्त्तीति, यतोऽष्टसप्तत्यधिके सहस्र एवावसानमभूत्तस्येति विश्वास्येतिहासे नोपलभ्यते कुत्रापि, तथा च पूर्णत्वेन राज्यकालस्यान्यं राज्यकार्यमकुर्वताऽपि धार्मिकत्वादस्मिन् श्रमणाचारवादे तेन स्वस्यास्तित्वं रक्षितं भवेदत एव हि प्रायः समस्तास्वपि पट्टावल्यादिषु तस्य प्राधान्यख्यापनाय 'दुर्लभराजादवाप्तं 'खरतर'विरुदं जिनेश्वरसूरिभि'रित्युल्लिखितं, ततस्तत्र किमासमञ्जस्यं ?।

+ अतिशयेन 'खरा' अनर्मच्छद्मधर्मपटवो ये ते खरतराः १। अतिशयेन 'खराः' सत्यप्रतिज्ञा ये ते खरतराः २। अतिशयेन 'खराः' सत्या ये ते खरतराः ३। अतिशयेन भक्तजनानां 'खं' स्वर्गं 'रान्ति' ददन्ते ये ते खरतराः ४। 'खः' सूर्यस्तद्वद्राजन्ते-शोभन्ते निष्प्रतिमप्रतिभाप्राग्भारप्रभाभिः प्रतिवादिविद्वज्जनसंसदि ये ते खराः, अत एव तरन्ति भवाब्धिमिति तराः, खराश्च ते तराश्च खरतराः ५। 'खानि' इन्द्रियाणि 'रः' कामः, तौ 'तस्यन्ति' वशं नयन्ति ये ते 'खरताः' साधुजनाः, तेषां मध्ये 'राजन्ते' शोभन्ते ये ते खरतराः ६।

शीलावतीकथा-कथाकोश-पञ्चलिङ्गी-षट्स्थानप्रकरणाद्यनेके ग्रन्थाः, बुद्धिसागरसूरिभिरपि निर्मिता बुद्धिसागर-व्याकरणादयो ग्रन्थाः। तयोः शिष्यौ जिनचन्द्रा-भयदेवसूरी, तत्र जिनचन्द्रसूरिभिर्महतियाणगोत्रः प्रतिबोधितः संवेगरङ्गशालाख्यं प्रकरणं च विरचितं, श्रीमदभयदेवसूरिभिः "जय तिहुअणे" त्यादिस्तुतिद्वात्रिंशिकाकरणेन स्तम्भनपार्श्वजिनं प्रकटीकृत्य स्वकुष्ठमपगमितं स्थानाङ्गादिनवाङ्गानां पञ्चाशकादिप्रकरणानां च वृत्तिप्रभृतयोऽनेके ग्रन्थाः सन्दर्भिताः, अतस्तेभ्यः प्रतिष्ठामापन्नः खरतरगच्छः,

यदुक्तं—"पुरा श्रीपत्तने राज्यं, कुर्वाणे भीमभूपतौ ×। अभूवन् भूतले ख्याताः, श्रीजिनेश्वरसूरयः ॥ १ ॥"
"सूरयोऽभयदेवाख्या-स्तेषां पट्टे दिदीपिरे। येभ्यः प्रतिष्ठामापन्नो, गच्छः खरतराभिधः ॥ २ ॥"

इत्यादि तपासोमसुन्दरसूरिप्रशिष्यसोमधर्मगणिभिः स्वोपज्ञोपदेशसप्ततिकायाम्।

---

'खं' सुखं भाग्यसमाधिलक्षणं, तस्य 'रो' रक्षणं, त'त्तरन्ति' कुर्वन्ति ये ते खरतराः ७। खादीनां-(नगरादीनां, निवासिन इति गम्यं,) खे नगरादीनां 'रो' भयं, तत् (तस्यति)-निध्वंसयति यः स खरतः, तादृग्विधो 'रो' ध्वनिः-सिद्ध-शुद्ध-प्रसिद्ध-विशुद्धसिद्धान्तवचननिर्वचनलक्षणो येषां ते खरतराः ८। 'खं' संवित्तत्र 'रताः' तत्पराः खरताः-मुनिजनाः, तान् 'रान्ति' सम्यग्ज्ञानादि ददन्ते ये ते खरतराः ९। 'खः' खड्गः, तद्वत् 'खाः' तीक्ष्णाः कुमतिमतिविदारणे ये ते खराः, 'तानां' तस्कराणां जिनमतप्रक्षेपिकुवादिजनानां 'रा इव' वज्रा इव ये ते तराः, खराश्च ते तराश्च खरतराः १०। × उक्तिस्त्वेषा सुचिरं राज्यशासनकालापेक्षिकैव, न तु वादकालापेक्षिका, न ह्यनेनाम्निग्रामावमपि न तिष्ठति तस्मिन्समये दुर्लभराजस्य, अनिर्णीतत्वादवसानकालस्य तस्येतिहासविद्भिः।

तेषामेव श्रीमदभयदेवसूरीणामुपसम्पदं गृहीत्वा × तान्सद्गुरुत्वेन स्वीकर्त्तारः * श्रीजिनवल्लभसूरयः, यैश्चित्रकूटे चण्डिकां प्रतिबोध्याऽहिंसाधर्मानुरागिणी कृता चैत्यवासिप्रथितानामकल्याणकवादादि भगवत्सिद्धान्तोत्तीर्ण-मन्तव्यानां चागमयुक्त्या समूलमुन्मूलनं विहितं । तत्पट्टपूर्वाचलभास्करा अम्बिकाप्रदत्तयुगप्रधानपदविभूषितास्त्रिंशत्सहस्राधिकलक्षनूतनश्राद्धप्रतिबोधकाश्चतुष्षष्टियोगिनी-द्विपञ्चाशद्वीर-पञ्चनद्यधिष्ठायकाद्यनेकदेव-देवीसंसेवितपादपद्माः श्रीमज्जिनदत्तसूरयः । तत्पट्टप्रकाशनसहस्रकिरणाः खोडियाक्षेत्रपालसंसेवितचरणाः नरमणिमण्डितभालस्थलाः श्रीजिनचन्द्रसूरयः । लक्षार्द्धनूतनश्राद्धविधायकाश्चैत्यवन्दनकुलकवृत्त्याद्यनेकग्रन्थ-निर्मातारः श्रीजिनकुशलसूरयः । संवन्नन्दवेदरसशशधर(१६४९)मितेऽब्दे यवनसम्राडकब्बरमुपदिश्याषाढीयाष्टा-

× "लोकार्च्यकूर्चपुरगच्छमहाघनोत्थ-मुक्ताफलोज्वलजिनेश्वरसूरिशिष्यः ।"
"प्राप्तः प्रथां भुवि गणिर्जिनवल्लभोऽत्र, तस्योपसम्पदमवाप्य ततः श्रुतं च ॥१॥" } इति चित्रकूटीयमहावीरप्रशस्तिरित्य-पराभिधानायामष्टसप्ततिकायाम् ।

* "के वा सद्गुरवोऽत्र चारुचरणाः श्रीसुश्रुता विश्रुताः?" इत्येतत्प्रश्नस्योत्तरे "श्रीमदभयदेवाचार्याः" इति जैनश्रेयस्करमण्डलमहेशानाद्वारा-मुद्रिते सटीकस्तोत्ररत्नाकरद्वितीयविभागस्थे प्रश्नोत्तरैकषष्टिशतके। यच्चोक्तं तत्रैव "ब्रूहि श्रीजिनवल्लभ! स्तुतिपदं कीदृग्विधाः! के सताम्?" इति प्रश्न-स्योत्तरे "मद्गुरवो जिनेश्वरसूरयः" इति, तथा अष्टसप्ततिकायां "जिनेश्वरसूरिशिष्यः" इति च, तत्तु स्वं गार्हस्थ्यात्समुद्धृत्य धर्मबोधं ज्ञानादिगुणोत्कर्षं च सम्प्रापकत्वादुपकारं संस्मरद्भिश्चैत्यवासित्वगुरुत्वमधिकृत्यैवोक्तं तेभ्यः सतां स्तुतिपदत्वं, न ह्युपसम्पन्नोपसम्पदत्वेऽपि सद्गुरुत्वं, तच्च युक्तमेव, यतो नाभूवँस्तेऽद्य-कालीनमनुजा इव कृतोपकारिण उपकारस्यासत्त्वारः कृतघ्नाः, किन्तु कृतज्ञाः शिष्टाश्च, यदवोचुः श्रीमन्मलयगिरयः स्वयं षडशीतिवृत्तिप्रारम्भे "न चायमाचार्यो न शिष्यः" इति, तथा "शिष्यश्चायमप्याचार्यः" इति तस्यैवान्यवृत्तौ हरिभद्रसूरयः। शिष्टानां त्वेषैव प्रणालिका—यत्कल्पान्तेऽप्यविस्मरणं कृतोपकारस्मरणस्येति।

इत्यादयः स्वगच्छे, पर-
ह्रिकाऽमारिघोषणाकारकाः समग्रजैनतीर्थसंरक्षणाज्ञापत्रसम्प्रापकाः श्रीजिनचन्द्रसूरयः। इत्यादयः स्वगच्छे, पर-
गच्छेऽपि च कुमारपालभूपालं प्रतिबोध्याष्टादशदेशेष्वमारिप्रवर्त्तापकाः न्यायव्याकरणकाव्यकोशादिविविध-
विषय [...]सार्द्धत्रिकोटिप्रमितग्रन्थनिर्मापकाः कलिकालसर्वज्ञेति विरुदधारकाः श्रीमद्धेमचन्द्रसूरयः। कुमुदचन्द्र-
दिगम्बरविजेतारः स्याद्वादरत्नाकराद्यतुच्छकर्कशतर्कग्रन्थनिर्मातारो वादिदेवसूरयः। चैत्यवन्दनादिभाष्यत्रय-
श्राद्धदिनकृत्यवृत्तिधर्मरत्नप्रकरणवृत्त्याद्यनल्पग्रन्थसौधसूत्रणसूत्रधाराश्चैत्रावालकगच्छनभोऽङ्गणनभोमणयः
श्रीमद्देवेन्द्रसूरयः×। इत्यादयोऽनेके स्थविराः स्वपरगच्छेषु प्रवचनप्रभावकास्सञ्जातास्तेभ्यो नमो नमः॥

इति श्रीपर्युषणाकल्पावचूर्यन्तर्वाच्यादिविविधव्याख्यामुपजीव्य श्रीखरतरगच्छनभोनभोमणि–परमशासनप्रभावक–श्रीमन्मोहन-
मुनीश्वरविनेयविनेयानुयोगाचार्य–श्रीमत्केशरमुनिजी–गणिवरसंगृहीतायां कल्पार्थबोधिनीनामपर्युषणाकल्प-
व्याख्यायामष्टमं व्याख्यानं समाप्तं, तत्समाप्तौ च समाप्तोऽयं स्थविरावलीनाम द्वितीयोऽधिकारः।

ग्रं० ११८–२–१ मूलं, ४२४–१–२ वृत्तिः, ८१–१–२ टि० नं० १, ०–३–६ टि० नं० २, सर्वाग्रेण ६४५–०–४, व्याख्यानाष्टकस्य ६१८४–०–५

× [...] इति [...] मन्यन्ते, ततः कथमत्र तेषां चैत्रावालकगच्छे सञ्जातत्वमुल्लिखितमिति चेदुच्यते– न कुत्रापि [...], परमां [...]कृतिप्रशस्तिश्लोकाः—

"[...] 'चित्रा-वालक'गच्छो बभूव भुवि विदितः। 'श्रीभुवनचन्द्रसूरि'–स्तत्राभूद्भव्यपद्मरविः॥ ६॥ तच्छिष्यरत्नमभव[द्]नं-
[...][न्]सो–[...]श्रुतपारमा[प्तः]प्ताः। गाम्भीर्यमुख्यगुणरत्नमहासमु[द्रः]द्राः, 'श्रीदेवभद्र'गणिमिश्रसुनामधे[यः]याः
॥ ७॥ [...], [...] वपुष्यपि। अभूवन् भूरिभावाढ्याः, श्रीजगच्चन्द्रसूरयः॥ ८॥ देवेन्द्रसूरिसंज्ञ–स्तेषामाद्यो बभूव

१ [...], "तच्छिष्यरत्न"मितानेन [...]।

शिष्यलवः। श्रीविजयचन्द्रसूरिं-स्तथा द्वितीयो गुणैस्त्वाद्यः ॥ ९ ॥ चक्रे भव्यावबोधाय, सम्प्रदायात्तथाऽऽगमात्। सच्छ्राद्धदिनकृत्यस्य, वृत्तिर्देवेन्द्रसूरिभिः ॥ १० ॥" इति श्राद्धदिनकृत्यवृत्तौ।

"क्रमश'श्चैत्रावालक'-गच्छे कविराजराजिनभसीव। 'श्रीभुवनचन्द्रसूरि'-र्गुरुरुदियाय प्रवरतेजाः ॥ ४ ॥ तस्य विनेयः प्रशमै-कमन्दिरं 'देवभद्र'गणिपूज्यः। शुचिसमयकनकनिकषो, बभूव भुवि विदितभूरिगुणः ॥ ५ ॥ तत्पादपद्मभृङ्गा, निस्सङ्गाश्चङ्गतुङ्गसंवेगाः। सञ्जनितशुद्धबोधा, जगति 'जगच्चन्द्रसूरि'वराः ॥ ६ ॥ तेषामुभौ विनेयौ, श्रीमान् 'देवेन्द्रसूरि'रित्याद्यः। 'श्रीविजयचन्द्रसूरि'-र्द्वितीयकोऽद्वैतकीर्त्तिभरः ॥ ७ ॥ स्वान्ययोरुपकाराय, श्रीम'द्देवेन्द्रसूरि'णा। धर्मरत्नस्य टीकेयं, सुखबोधा विनिर्ममे ॥ ८ ॥" इति धर्मरत्नप्रकरणवृत्तौ।

"चित्तावालयगच्छि-कमंड[णं]लं (?) जयइ 'भुवणचंद' गुरू। तस्स विणेओ जाओ, गुणभवणं 'देवभद्द'मुणी ॥ ७ ॥ तप्पयभत्ता 'जगचंद-सूरि'णो तेसि दुण्णि सीसा। सिरि 'देविंद'मुणिंदो, तह्वा 'विजयचंद'सूरिवरो ॥ ८ ॥ इय 'सुदरिसणा'इ, कहा णाणतवचरण-कारणं परमं। मूलकहाओ फुडऽत्था, लिहिया 'देविंद'सूरिहिं ॥ ९ ॥" इति सुदंसणाचरिये।

न चात्र गन्धोऽपि देवेन्द्रसूरीणां तपागच्छे सञ्जातत्वस्य तथा जगच्चन्द्रसूरिर्यावज्जीवमाचाम्लतपःकरणादमुकस्मिन् काले नगरादौ च 'तपे'ति बिरुदमासवान् मणिरत्नसूरेश्च शिष्योऽभूदित्यादिवार्त्तायाश्चापि, केवलं स्वगौरवत्वख्यापनाय कल्पितमेतत्सर्वमालजालं पाश्चात्यैः सागरकल्पैः।

ननु "क्रमात्प्राप्ततपाचार्ये-त्यभिख्या भिक्षुनायकाः। समभूवन् कुले चान्द्रे, श्रीजगच्चन्द्रसूरयः ॥ ४ ॥" इत्यनेन कर्मग्रन्थवृत्तिप्रशस्तिपद्येन स्फुटमेव तेषां तपागच्छे सञ्जातत्वमिति चेन्न, यतः प्राङ्निर्दिष्टासु वह्वीष्वपि तत्कृतीषु तथाऽदर्शनान्न प्रमाणार्होऽयं पाठः, पाश्चात्यैः कल्पित इत्यपि माननं नायुक्तम्।

न च श्राद्धदिनकृत्यवृत्त्यादिकरणानन्तरं तपेति विरुदस्य प्राप्तत्वात्तत्रानुल्लेखः कर्मग्रन्थवृत्तौ च विहितस्तदुल्लेख इति वाच्यं, यतो देवेन्द्रसूरितः पश्चात्कालभाविक्षेमकीर्त्तिसूरिभिरपि द्वात्रिंशदधिके त्रयोदशशते वैक्रमे निर्मितायां बृहत्कल्पटीकायामपि तथैव चैत्रावालकगच्छत्वं देवभद्रोपाध्यायविनेयत्वमपि च स्फुटमुल्लिखितं जगच्चन्द्रसूरेः। किञ्च—"देवभद्रगणीन्द्रोऽपि, संविग्नः सपरिच्छदः। गणेन्द्रं श्रीजगच्चन्द्र-मेव भेजे गुरुं तदा ॥ १ ॥"

इति मुनिसुन्दरसूरीयगुर्वावल्युदन्तमपि स्वसुहृद एव प्रत्ययिष्यन्ति। यत आस्तां दृष्टिपथे, श्रुतिपथेऽपि नावतीर्णमेतत्कस्यापि, यच्छुद्धचारित्रोऽपि सपरिच्छदः स्वयं स्वनिश्रया क्रियोद्धारकं गुरुत्वेन भजेत्कोऽपीत्यलमसत्योत्सूत्रप्रलापकैः सागरकल्पैरतिचसूर्या।

# अथ नवमं व्याख्यानम् ।



जे णं काले णं जे णं समए णं समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ ॥१॥ से केणऽट्ठेणं भंते ! एवं वुच्चइ 'समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ ?। जओ णं पाएणं अगारीणं अगाराइं कडियाइं उक्कंपियाइं छन्नाइं लित्ताइं गुत्ताइं घट्ठाइं मट्ठाइं संपधूमियाइं खाओदगाइं खायनिद्धमणाइं अप्पणो अट्ठाए कडाइं परिभुत्ताइं

अथ सामाचारीलक्षणं तृतीयमधिकारं नवमं वा व्याख्यानं विवरीतुं प्रथमं पर्युषणा कदा विधेया ? इत्याह—

१-तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीर आषाढचातुर्मासिकदिनादारभ्य 'वर्षायाः' वर्षाकालस्य 'सविंशतिरात्रे' विंशतिदिवसान्विते मासे, पञ्चाशत्सु दिनेष्वित्यर्थः, व्यतिक्रान्ते सति वर्षावासं पर्युषति-वर्षाकालस्य पर्युषणामकार्षीदित्यर्थः ।

२-शिष्यः प्रश्नयति-अथ केन 'अर्थेन' कारणेन 'भदन्त !' पूज्य ! एवमुच्यते ? यच्छ्रमणो भगवान् महावीरो 'वर्षायाः' वर्षाकालस्य सविंशतिरात्रे मासे-पञ्चाशद्दिवसे व्यतिक्रान्ते वर्षावासं पर्युषति ?। गुरुः प्रत्युत्तरयति-यत इयत्कालं यावत् प्रायेण 'अगारिणां' गृहस्थानां 'अगाराणि' गृहाणि 'कटितानि' कटयुक्तानि-भित्त्यादि-रक्षणाय तृणासन("चटाइ" इति लोके)दानयुक्तानीत्यर्थः, "उक्कंपियाइं"ति धवलितानि 'छन्नानि' तृणादिभिराच्छादि-तानि, लिप्तानि गोमयादिभिः, गुप्तानि वृत्तिकरणादिभिः, घृष्टानि विषमभूभञ्जनाय, मृष्टानि-पाषाणखण्डेन

परिणामियाइं भवंति, से तेणऽट्ठेणं एवं वुच्चइ–'समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ, ॥ २ ॥

जहा णं समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ, तहा णं गणहरा वि वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसविंति ॥३॥ जहा णं गणहरा वासाणं सवीसइराए० जाव पज्जोसविंति, तहा णं गणहरसीसा वि वासाणं० जाव पज्जोसविंति ॥ ४ ॥ जहा णं गणहरसीसा वासाणं० जाव पज्जोसविंति, तहा णं थेरा वि वासावासं पज्जोसविंति ॥ ५ ॥ जहा णं थेरा वासाणं० जाव पज्जोसविंति, तहा णं जे इमे अज्जत्ताए समणा निग्गंथा विहरंति, ते वि अ णं वासाणं० जाव पज्जोसविंति ॥६॥ जहा

---

श्लक्ष्णीकृतानि, 'सम्प्रधूमितानि' सौगन्ध्यापादनाय धूपैर्वासितानि 'खातोदकानि' कृतप्रणालिकारूपजलनिर्गममार्गाणि 'खातनिर्धमनानि' कृताखिलगृहजलनिर्गमनमार्गाणि, एवंविधानि आत्मनोऽर्थाय,न साधुनिमित्तं,गृहस्थैः कृतानि 'परिभुक्तानि' व्यापृतानि 'परिणामितानि' अचित्तीकृतानि भवन्ति, तेन 'अर्थेन' हेतुना एवमुच्यते–श्रमणो भगवान् महावीरो वर्षाकालस्य सविंशतिरात्रे मासे–पञ्चाशद्दिवसे व्यतिक्रान्ते वर्षावासं पर्युषति।

३–यथा श्रमणो भगवान् महावीरो वर्षायाः सविंशतिरात्रे मासे व्यतिक्रान्ते वर्षावासं पर्युषति, तथा गणधरा अपि वर्षायाः सविंशतिरात्रे मासे व्यतिक्रान्ते वर्षावासं पर्युषन्ति। ४–यथा गणधरा वर्षायाः सविंशतिरात्रे मासे व्यतिक्रान्ते यावत्पर्युषन्ति, तथा गणधरशिष्या जम्बूस्वामिप्रभृतयोऽपि वर्षाया यावत्पर्युषन्ति। ५–यथा गणधरशिष्या वर्षाया यावत्पर्युषन्ति, तथा 'स्थविराः–जम्बूस्वामिपश्चात्कालभाविन आर्यप्रभवादयोऽपि वर्षावासं पर्युषन्ति। ६–यथा स्थविरा वर्षाया यावत्पर्युषन्ति, तथा ये इमे "अज्जत्ताए"त्ति अद्यतनत्वेन आर्यतया

णं जे इमे अज्जत्ताए समणा निग्गंथा० वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसविंति, तहा णं अम्हं पि आयरिया उवज्झाया वासाणं० जाव पज्जोसविंति ॥ ७ ॥ जहा णं अम्हं आयरिया उवज्झाया वासाणं० जाव पज्जोसविंति, तहा णं अम्हे वि वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेमो। अंतरा वि य से कप्पइ, नो से कप्पइ तं रयणिं उवाइणावित्तए ॥ ८ ॥

---

था-अद्यतनस्थविरत्वेन श्रमणा निर्ग्रन्था विहरन्ति, तेऽपि च वर्षायां यावत्पर्युषन्ति। ७-यथा ये इमे अद्यतनत्वेन श्रमणा निर्ग्रन्था विहरन्ति, ते वर्षायाः सविंशतिरात्रे मासे व्यतिक्रान्ते वर्षावासं पर्युषन्ति, तथा अस्माकमप्याचार्या उपाध्याया वर्षाया यावत्पर्युषन्ति। ८-यथा अस्माकं आचार्या उपाध्याया वर्षाया यावत्पर्युषन्ति, तथा वयमपि वर्षायाः सविंशतिरात्रे मासे व्यतिक्रान्ते वर्षावासं पर्युषामः-पर्युषणां कुर्मः। कदाचित् कारणवशात्पञ्चाशत्तमे दिने यदि न शक्यते पर्युषणापर्व कर्तुं तदा किं कार्यं? इत्याह-'अन्तराऽपि च' पञ्चाशत्तमराज्याः प्रागपि च तत्पर्युषणापर्व कर्तुं कल्पते, परं न कल्पते 'तां' पञ्चाशत्तमीं रात्रिमतिक्रमयितुं।

एतामेव भगवदाज्ञामुपजीव्य युगप्रधानाः श्रीकालकाचार्याः शालिवाहनेन राज्ञाऽभ्यर्थिता अप्येकपञ्चाशद्दिनरूपायां पञ्चमीमकृत्वैकोनपञ्चाशद्दिनरूपायां चतुर्थ्यां पर्युषणामकार्षुः। यदुक्तं निशीथचूर्णौ दशमोद्देशके-"सालिवाहणेण रण्णा पविट्ठो कालगज्जो, पविट्ठेहि अ भणियं-भद्दवयसुद्धपंचमीए पज्जोसविज्जइ। समणसंघेण पडिवन्नं। ताहे रण्णा भणिअं-तद्दिवसं मम लोगाणुवत्तीए इंदो अणुजाणेअव्वो होहि त्ति साहू चेइए अ ण पज्जुवासेस्सं, ततो छट्ठीए पज्जोसवणा किज्जउ। आयरिएहिं भणिअं-न वट्टति अतिक्कमितुं। ताहे रण्णा भणितं-ता अणागयचउत्थीए पज्जोसविज्ज[उ]ति। आयरिएहिं भणिअं-एवं भवउ" इति।

अथ कोऽर्थः पर्युषणेति शब्दस्य ? इति चेदुच्यते–'परि'सामस्त्येन 'उषणं' वसनं पर्युषणा। सा हि द्विविधा–गृह्यज्ञाता गृहिज्ञाता च। तत्र गृह्यज्ञाता सा–यस्यां वर्षायोग्यपीठफलकाद्यवाप्तौ कल्पोक्ता द्रव्यक्षेत्रकालभावरूपा स्थापना क्रियते। सा चोत्सर्गत आषाढपूर्णिमायामेव, अपवादतस्तु योग्यक्षेत्राद्यभावे पञ्चपञ्चदिनवृद्ध्या श्रावणकृष्णपञ्चमीदशम्यादिदशपर्वतिथिक्रमेण यावद्भाद्रपदकृष्णामावास्यायामवश्यं विधेया। तथा चोक्तं–"आसाढपुण्णिमाए पज्जोसविंति, एस उस्सग्गो, सेसकालं पज्जोसविंताणं सव्वो अववाओ" इति निशीथचूर्णिदशमोद्देशके। गृहिज्ञाता तु सांवत्सरिकप्रतिक्रमणादिकृत्यविशिष्टैव भवति। सा च "अभिवड्ढियम्मि वीसा, इयरेसु सवीसइमासो" इति कल्पनिर्युक्तिवाक्यात्तथैव–"अभिवड्ढियवरिसे वीसतिराते गते गिहिणातं करेंति, तिसु चंदवरिसेसु सवीसतिराते मासे गते गिहिणातं करेंति" इति निशीथचूर्णिवाक्याच्चाभिवर्द्धिते वर्षे विंशत्या दिनैः श्रावणशुक्लपञ्चम्यां, चान्द्रे च वर्षे पञ्चाशता दिनैर्भाद्रपदशुक्लपञ्चम्यां विधेयेति प्रवृत्तिः प्राग्जैनटिप्पनकसमयेऽभूत्, साम्प्रतं तु जैनटिप्पनकस्य सम्यग्ज्ञानाभावाल्लौकिकटिप्पनकेषु यः कोऽपि मासो वर्द्धतां, परमाषाढचातुर्मासिकदिनात्परतः पञ्चाशतैरेव दिनैः सांवत्सरिकप्रतिक्रमणादिकृत्यविशिष्टा गृहिज्ञातपर्युषणा विधेयेति वृद्धाचार्यसम्मतं। यदुक्तं तपागच्छीयैरेव श्रीकुलमण्डनसूरिभिः स्वकृतायां कल्पावचूर्यां–"गृहिज्ञाता तु सा–यस्यां सांवत्सरिकातिचारालोचनं १, लुञ्चनं २, पर्युषणायां कल्पसूत्रकथनं ३, चैत्यपरिपाटी ४, अष्टमं तपः ५, सांवत्सरिकं प्रतिक्रमणं ६, च क्रियते" इति।

न वक्तव्यं "अभिवड्ढियम्मि वीसा" इत्यादीनि शास्त्रवाक्यानि गृहिज्ञातमात्रापेक्षिकाणीति, यतो न काप्यागमे

गृहिज्ञाताज्ञाताभ्यामन्यस्तृतीयो भेदः समुपलभ्यते पर्युषणायाः, स्वानुयायिनो दृष्टिरागिणश्च जल्पन्तु किञ्चित्, परं सर्वमान्यशास्त्रप्रमाणशून्यत्वान्न तत्प्रमाणमर्हति ।

ननु निशीथचूर्ण्यादिषु शास्त्रेषु यत्र क्वापि पर्युषणानिरूपणं तत्र भाद्रपदविशेषितमेव, न पुनः क्वाप्यभिवर्द्धितवर्षे श्रावणविशेषितमिति चेत्? अहो ते वैदग्ध्यं !!, कुतः शिक्षितमेतत् यन्निशीथचूर्ण्यादिष्वभिवर्द्धितवर्षाश्रितं पर्युषणापर्वनिरूपणं, न चन्द्रवर्षाश्रितं, यत्र चाब्दे एकेन वर्षेणार्वाग्विहिता पर्युषणा कालकाचार्यैः, स न चन्द्रवर्षो नाभूदित्यपि च कथं ज्ञातं ?, चेच्चन्द्रवर्ष एव स भवेत्तदा किमयुक्तं भाद्रपदविशेषितं पर्युषणापर्वनिरूपणं ?, यतस्तत्र त्वेकमुख्या एव सर्वेऽपि शास्त्रकाराः पञ्चाशता दिनैः सांवत्सरिकप्रतिक्रमणादिकृत्यविशिष्टपर्युषणापर्वनिरूपणे, पञ्चाशद्दिने तु चान्द्रे वर्षे भाद्रपद एवायाति, ततश्च कथं चूर्णिकारास्तत्र श्रावणविशेषितं निरूपयेयुः? इति नेत्रे निमील्य विमृश । अपि च निशीथचूर्ण्यादिषु यन्निरूपणं तच्चरितानुवादेन, न तु विधिवादेन, तत्रचरितानुवादं पुरस्कृत्य विधिवादस्य तिरस्करणं चक्रुः पृथुस्थूलबुद्धेरेवानुमापकम् ।

किञ्च—चरितानुवादेन वाहुल्येन वा यत्र कुत्र निरूपितं भाद्रपदविशेषितमेव सांवत्सरिकप्रतिक्रमणादिकृत्यविशिष्टं पर्युषणापर्व स्वीक्रियते चेत्तदा शैलकज्ञातोक्तेन—"तते णं से पंथए कत्तियचाउम्मासियंसि कयकाउस्सग्गे देवसियं पडिक्कमणं पडिक्कंते चाउम्मासियं पडिक्कमिउं कामे सेलगं रायरिसिं खामणट्ठयाए सीसेणं पाएसु संघट्टेइ" इत्यनेन पाठेन ज्ञाविंशतिजिनसाधूनामपि पाक्षिकादीनि प्रतिक्रमणानि कर्त्तव्यतया स्वीकार्याणि स्युस्तत्तु भाद्रविकैरपि नेष्यते,

तत्पूर्वजैरेव—"मज्झिमगाणं तु दो पढमा" इत्यादिना सप्ततिशतस्थानकादौ निषिद्धत्वात् । यदि च सर्वेष्वपि वर्षेषु भाद्रपदविशेषितैव सांवत्सरिकप्रतिक्रमणादिकृत्यविशिष्टा पर्युषणाऽभीप्सिता स्याच्छास्त्रकाराणां तदा "सवीसइराए मासे" इत्याद्यालजालमनुक्त्वा "सवेसु वि वरिसेसु भद्दवयसुद्धपंचमीए चेव संवच्छरियं पडिक्कमियवं" इत्येवमेव स्पष्टतया किं नोक्तं ? तैः, कुत्राप्यागमे एवमुक्तं भवेदिति न केनापि दृष्टं श्रुतं वा । ततः सिद्धं—पर्युषणापर्व तत्तन्मासप्रतिबद्धदीपालिकाऽक्षयतृतीयाकल्याणकादिवन्न भाद्रपदमासप्रतिबद्धं, किन्तु पञ्चाशद्दिनप्रतिबद्धं, अतोऽयुक्ता श्रावणभाद्रपदान्यतरवृद्धावशीत्या दिनैः + संवत्सरप्रतिक्रान्तिरित्यलमतिप्रसङ्गेन, इति प्रथमा सामाचारी ॥

---

+ अत्र कश्चिदुन्मुद्रनयनो भाद्रविकः शङ्कते—ननु भोः ! श्रावणभाद्रपदान्यतरवृद्धौ भाद्रपदे द्वितीये वा भाद्रपद एव पर्युषणापर्वाराधनं युक्तं, न तु द्वितीये श्रावणे प्रथमे वा भाद्रपदे, पाश्चात्यानां कार्त्तिकचातुर्मासिकदिनानां शतापत्त्या "समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते, सत्तरिएहिं राइंदिएहिं सेसेहिं वासावासं पज्जोसवेइ" इति समवायाङ्गप्रवचनबाधा स्यादिति चेत् ?, आहोस्विदेवानुप्रिय ! आश्विनवृद्धौ द्वितीय आश्विन एव चातुर्मासिकं प्रतिक्रान्तव्यं स्यात्, कार्त्तिके दिनानां शतापत्त्या प्रागुक्तस्यैव समवायाङ्गप्रवचनस्य बाधा स्यादित्यपि वक्तव्ये ते वाचाटस्य किमयुक्तं स्यात् ?, न्यायस्योभयत्रापि समानत्वात् ।

ननु भवेदेवं यदि चातुर्मासकान्याषाढादिमासप्रतिबद्धानि न स्युः, तस्मादाश्विनवृद्धावपि कार्त्तिकचातुर्मासकं तु कार्त्तिकसितचतुर्दश्यामेव युक्तं, दिनगणनायां त्वधिकमासः कालचूलेत्यविवक्षणाद्दिनानां सप्ततिरेवेति कुतः प्रवचनबाधेति चेत् ?, अहो सुहृद् ! केन शिक्षितं तव कालचूलारूपाधिकमासाविवक्षणं ?, चेत्कालचूलात्वेनैव न गण्यतेऽधिकमासो गणनायां ?, तर्हि सुदुर्निवारः सर्वासामपि द्रव्यादिचूलानामगणनाप्रसङ्गः ।

ननु भवतोऽयमेवेति चेत्तर्हि कथं द्विपदसचित्तद्रव्यचूलारूपतीर्थङ्करशिरस्थं द्वादशाङ्गुलप्रमितमुष्णीषं सम्मील्य विंशत्यधिकशताङ्गुलोच्चत्वं प्रतिपाद्यते ?, कथं वा मेरुचूलामिव सप्तरज्ज्वात्मकस्योर्द्धलोकक्षेत्रस्य चूलारूपां लोकाग्रवर्त्तिनीमीषत्प्राग्भारां पृथिवीमूर्द्धलोकाद्बहिर्न मन्यन्ते ? कथं वा मेरुचूलां लक्षयोजनाद्बहिर्मन्यन्ते ? भवद्भिः, कथं च दशवैकालिकस्य भावचूलारूपं चूलिकाऽध्ययनद्वयं गणनायां गणयित्वा पञ्चदशदिनात्मकं योगोद्वहनं क्रियते कार्यते च ?, भवन्मतेन तु त्रयोदशदिनात्मकमेव कर्त्तव्यं स्यात्, तथा आचाराङ्गद्वितीयश्रुतस्कन्धस्य तु योगोद्वहनं सप्तविंशाऽहर्मितमेव स्यात्, सर्वत्रापि तत्र चूलात्वस्य विद्यमानत्वात्। सत्यपि चूलात्वे सर्वत्र यदि न प्रतिपाद्यते द्वादशाङ्गुलप्रमाणमुष्णीषमगणयित्वाऽष्टाधिकशताङ्गुलोच्चत्वं तीर्थकृतां, न मन्यते ऊर्द्धलोकाद्बहिर्वर्त्तित्वमीषत्प्राग्भारायाः लक्षयोजनान्तर्गतत्वमेव वा मेरुचूलायाः, न मन्यते च चूलिकाऽध्ययनानां योगोद्वहनं, तदा किमपराद्धं कालचूलिकयैवैकया भवतां ?, येन तां गणनाया बहिष्क्रियते, कश्चायं 'अर्द्धजरतीयो' न्यायः ?, यस्मात्सर्वेषामपि चूलात्वेन समत्वे सत्यप्येकत्र गणनायां गणनमन्यत्र नेति, युक्त्या विचार्यमाणे नायं सङ्गतिमङ्गति। न च सिद्धान्तोक्त्याऽपि युक्तं समायातीति, यतो "गोयमा ! अभिवड्ढियसंवच्छरस्स छव्वीसाइं पव्वाइं" इत्यादिसूर्यप्रज्ञप्तिप्रभृतिशास्त्रप्रमाणैः स्फुटं प्रतीयते यत्तीर्थङ्करगणधरपूर्वधरादिसर्वमान्यप्राचीनपुरुषेषु न केनाप्यधिकमासो गणनाबहिष्कृतः, नैतावन्मात्रमेव, किन्तु पर्युषणादिनगणनायामपि "सीसो पुच्छति–कम्हा अभिवड्ढियवरिसे वीसदिणा ?, उच्यते–जम्हा गिम्हे चेव सो मासो अतिक्कंतो, तम्हा वीसदिणा" इति निशीथचूर्णिवाक्यात्तथा "ज[इ]ति अधिमासगो पडितो तो वीसतिरायं गिहिणातं ण कज्जति, किं कारणं ?, एत्थ अधिमासगो चेव मासो गणिज्जति, सो वीसाए समं सवीसतिरातो मासो भण्णति चेव" इति बृहत्कल्पचूर्णिवाक्याच्च परिस्फुटं ज्ञायते यन्नेष्टोऽपूर्वाचार्याणामधिकमासस्य गणनाबहिष्कारः, कथमन्यथा ग्रीष्मकालातीतमधिकमासं सम्मील्य पञ्चाशद्दिनगणनां परिपूरयेयुः ? ।

अपि च "**चतुर्मासप्रमाणस्य वर्षाकालस्य**" इति समवायाङ्गवृत्तिवाक्यात्स्पष्टं प्रतीयते यत्समवायाङ्गपाठश्चतुर्मासप्रमाणवर्षाकालाश्रित एव, न तु पञ्चमासिकवर्षाकालाश्रितः। तथा च पञ्चमासिके वर्षाकाले तत्पाठस्य पुरस्करणं न कथमपि युक्तियुक्तं। यत्तु कश्चिद भिवर्द्धिते वर्षे विंशत्या दिनैः सांवत्सरिकप्रतिक्रमणादिकृत्यविशिष्टाया गृहिज्ञातपर्युषणायाः करणे पर्वणोऽनैयत्यं प्रलपन् "**तत्थ णं बहवे भवणवइ–वाणमंतर-जोइसिअ-वेमाणिआ देवा चाउम्मासिअपाडिवएसु संवच्छरेसु अ अण्णेसु अ बहुसु जिणजम्मण-निक्खमण-नाणुप्पत्ति-परिनिवाणमाइएसु अ देवकज्जेसु० ×× अट्ठाहियरूवाओ महामहिमाओ करेमाणा पालेमाणा विहरंति**" इति जीवाभिगमोक्ता-मष्टाहिकां देवादयः क कुर्युरिति धार्ष्ट्यमवलम्बते तदतीवासङ्गतं, यतो न ते देवादय एवंविधा अविबुधाः, ये कस्मिन् वर्षे कतिभिर्दिनै-रष्टाहिका विधेयेतिमात्रस्यापि ज्ञातारो न भवेयुः, यदि चैवमपि ते देवादयः सन्दिग्धा भवेयुस्तदा द्वादशत्रयोदशमासात्मकेष्वब्देषु त्वशक्यैवासन्दिग्धता तेषां, ततोऽयुक्तेयमाशङ्का, ते तु संविज्ञाः सन्तः स्वत एव यथायोग्यमवसरे विदधति।

न चात्र "**जइ फुल्ला कणियारया, चूअग! अहिमासयम्मि घुट्ठम्मि। तुह न खमं फुलेउं, जइ पच्चंता करिंति डमराइं ॥ १ ॥**" इत्यावश्यकनिर्युक्तिगाथायाः पुरस्करणं युक्तियुक्तं, यतोऽयं दृष्टान्त औपदेशिकतया विन्यस्तो निर्युक्तिकारैः, न पुनः सैद्धान्तिक-मन्तव्यतया। चेदेष दृष्टान्तः सैद्धान्तिकमन्तव्यतयैव विन्यस्त इति स्वीक्रियते तर्हि "**दीहरफणिंदनाले, महिहरकेसरदिसामहद-लिले। ओपियइ कालभमरो, जणमयरंदं पुहवीपउमे ॥ १ ॥**" इत्येतद्वैराग्यशतकगाथाप्रामाण्यात्सहस्रनागशीर्षप्रतिष्ठितत्वं पृथिव्याः स्वीकार्यं स्यात्तव। किञ्च–भो भाद्रविक! त्वयाऽन्यैश्चापि त्वत्सुहृदैः किं न भक्षितानि कदाऽपि प्रथमेषु चैत्र–वैशाखादिषु पक्वान्यपक्वानि वाऽऽम्रफलानि ?, येनैवं स्वग्रहिलत्वं प्रकटयन्नुपहास्यास्पदं भवसि, अस्तु।

ननु स्थविरकल्पिकानां साधूनां नवकल्प एव विहारः सर्वत्रागमे प्रोक्तः, न कुत्राप्यधिकमासं गणयित्वा दशकल्पः, यद्यधिकमासो गणनीय एव स्यात्तदा कथमभिवर्द्धिते वर्षे दशकल्पो नोक्तः? इति चेत्सत्यं, परं यथा ऋषभवीरजिनजननीभ्यां प्रथमं वृषभस्य सिंहस्य च स्वप्ने दृष्टे सत्यपि बाहुल्यापेक्षया गजस्य वर्णनमकार्षुः प्राक् श्रीभद्रबाहुस्वामिपादाः, तथा नवकल्पविहारेऽपि बोध्यं। नहि पौषाषाढाभिवर्द्धित-मासद्वयेऽप्येकैकमासस्थानं प्रतिपादितं क्वाप्यागमे साधूनां, चेत्प्रतिपादितं भवेत्तदा किं न दर्श्यते भवता?।

न च वाच्यं "आसाढे मासे दुपया" इत्यादिसूर्यचारेऽप्यधिकमासो न गणित इति, यतः सूर्यचारस्सूर्यगतिमाश्रित्य प्रवर्त्तते, पक्षादि-व्यवहारस्तु चन्द्रगतिमाश्रित्य, ततः कथं चन्द्रगतिनिष्पन्नव्यवहारागतस्याधिकमासस्य पृथग्गणनं तत्रोचितं? इति स्वयमेव विमर्शनीयम्।

ननु "अंगुलं सत्तरत्तेणं, पक्खेणं च दुरंगुलं। वड्ढए हायए वा वि, मासेणं चउरंगुलं ॥१॥" इत्युत्तराध्ययनागमोक्तक्रमेण तु प्रथम एव पौषे पादत्रयस्य पूर्त्तिः स्यात्ततः कथं द्वितीयः पौषः सूर्यचारे गणनायां गणित इति मन्तुं शक्यते? इति चेदहो ते आगमा-भिज्ञता!!, नहि "अंगुलं सत्तरत्तेणं" इत्यागमवाक्यं सप्तरात्रेणाङ्गुलस्यावश्यम्भावेन हानिर्वृद्धिश्च भवतीति निश्चायकं, किन्तु प्रतिपादितोऽस्माभिस्तिथिसत्कं नक्षत्रदशकं यावद्विद्युद्गर्जितादिभिरस्वाध्याये तथाविधनक्षत्रपरिज्ञानशून्यानां बोधाय यथा "अह केसिं पि साहूणं तहाविहं नक्खत्तपरिण्णाणं न हवइ, तओ आसाढचउम्मासाओ कत्तियचउम्मासं जाव विज्जुगज्जिएसु वि न असज्झाओ" इत्येव नियमो विहितः शास्त्रकारैस्तथैव तथाविधायनपरिज्ञानशून्यानां बोधाय "अंगुलं सत्तरत्तेणं" इति नियमो विहितः, वस्तुतस्तु पौरुषीच्छायानयने दक्षिणोत्तरायणक्रमेणैवाङ्गुलानां वृद्धिहानिश्चापि भवति, कथमन्यथा सार्द्धत्रिंशदहोरात्रैरेकत्रिंशता च तिथिभिश्चतुरङ्गुलानां वृद्धिर्हानिश्च प्रोक्ता स्यात्, न चैतदनागमिकं, ज्योतिष्करण्डवृत्त्यादौ तथैवोक्तत्वात्, तथाहि—

"दक्खिणवुड्ढी दुपयाउ, अंगुलाणं तु होइ नायवा। उत्तरअयणा हाणी, कायवा चउहिं पायाहिं ॥ ३७१ ॥

वृत्तिः–दक्षिणायने 'द्विपादः' पादद्वयस्योपर्यङ्गुलानां वृद्धिर्ज्ञातव्या, उत्तरायणे चतुर्भ्यः पादेभ्यः सकाशादङ्गुलानां हानिः ॥ ३७१ ॥ तत्र युगमध्ये प्रथमे संवत्सरे दक्षिणायने यतो दिवसादारभ्य वृद्धिस्तं निरूपयति—

सावणबहुलपडिवए, दुपया पुण पोरिसी धुवं होइ। चत्तारि अंगुलाइं, मासेणं वड्ढए तत्तो ॥ ३७२ ॥

एक्कत्तीसइ भागा, तिहिए पुण अंगुलस्स चत्तारि। दक्खिणअयणे वुड्ढी, जाव उ चत्तारि उ पयाइं ॥ ३७३ ॥

वृत्तिः–युगस्य प्रथमे संवत्सरे श्रावणमासि बहुलपक्षे प्रतिपदि पौरुषी 'द्विपदा' पदद्वयप्रमाणा ध्रुवराशिर्भवति, ततस्तस्याः प्रतिपद आरभ्य प्रतितिथिक्रमेण तावद्वर्द्धते याव'न्मासेन' सार्द्धत्रिंशदहोरात्रप्रमाणेन, चन्द्रमासापेक्षया एकत्रिंशता तिथिभिरित्यर्थः, चत्वार्यङ्गुलानि वर्द्धन्ते। कथमेतदवसीयते ? यथा मासेन–सार्द्धत्रिंशदहोरात्रप्रमाणेन, एकत्रिंशत्तिथ्यात्मकेन ?, अत आह–'एक्कत्तीसे' इत्यादि, यत एकस्यां तिथौ चत्वार एकत्रिंशद्भागा वर्द्धन्ते, एतच्च प्रागेव भावितं, परिपूर्णे तु दक्षिणायने वृद्धिः परिपूर्णानि चत्वारि पदानि, ततो 'मासेन' सूर्यमासेन सार्द्धत्रिंशदहोरात्रप्रमाणेन एकत्रिंशत्तिथ्यात्मकेनेत्युक्तम् ॥ ३७२–७३ ॥ तदेवमुक्ता वृद्धिः, सम्प्रति हानिमाह—उत्तरअयणे हाणी, चउहिं पायाहिं जाव दो पाया।

वृत्तिः–युगस्य प्रथमे संवत्सरे उत्तरायणे माघमासे बहुलपक्षे सप्तम्या आरभ्य चतुर्भ्यः पादेभ्यः सकाशात्प्रतितिथि एकत्रिंशद्भागचतुष्टयहानिस्तावदवसेया यावदुत्तरायणपर्यन्ते द्वौ पादौ पौरुषीति। एष प्रथमसंवत्सरगतो विधिः, द्वितीये संवत्सरे श्रावणे मासि बहुलपक्षे त्रयोदशीमादौ कृत्वा वृद्धिः, माघमासे शुक्लपक्षे चतुर्थीमादिं कृत्वा क्षयः। तृतीये संवत्सरे

श्रावणमासे शुक्लपक्षे दशमी वृद्धेरादिः, माघमासे बहुलपक्षे प्रतिपत् क्षयस्यादिः । चतुर्थे संवत्सरे श्रावणमासे बहुलपक्षे सप्तमी वृद्धेरादिः, माघमासे बहुलपक्षे त्रयोदशी क्षयस्यादिः । पञ्चमे संवत्सरे श्रावणमासे शुक्लपक्षे चतुर्थी वृद्धेरादिः, माघमासे शुक्लपक्षे दशमी क्षयस्यादिः ॥ सम्प्रत्युपसंहारमाह—एवं तु पोरिसीए, वुड्डिखया होंति णायव्वा ॥ २७४ ॥

वृत्तिः–'एवं' उक्तेन प्रकारेण 'पौरुष्यां' पौरुषीविषयौ वृद्धिक्षयौ यथाक्रमं दक्षिणोत्तरायणेषु वेदितव्यौ ॥" इत्यादि §

[illegible]तोन सिद्धं यदुत–'नूनं चारेऽधिकमासो न गणित' इति प्रलपनं ग्रहिलत्वप्रकटनप्रायमेवेति । [ § ज्योतिष्करण्डकवृत्तौ ।

[illegible]रेऽपि न कोऽपि श्रावणभाद्रपदाभिवर्द्धितमासद्वयं यावदेकत्र द्रविणं रक्षित्वा भृतिं वा कृत्वाऽप्येकस्यैव मासस्य कलान्तरं (व्याजं) भृतिं वा ददाति गृह्णाति च, किन्तु मासद्वयस्यैव सर्वे ददति गृह्णन्ति च, ततः किं कारणं पर्युषणाराधनेऽधिकमासस्यागणनायाः ? ।

न च वाच्यं–नपुंसकोऽधिकमासः सर्वेष्वप्युत्तमकार्येषु वर्जितस्ततः कथं सर्वोत्तमं पर्युषणापर्वाराधनं तत्र विधेयं ? इति, यतो न जैनसिद्धान्ताभिमता नपुंसकताऽधिकमासस्य, किन्तु लौकिकसिद्धान्ताऽभिमता । साऽपि सांसारिकेषु विवाहादिकृत्येषु, न तु धार्मिकेषु कार्येषु । न च तु तस्य पुरुषोत्तमेत्याख्या, या जैनैस्तीर्थकरेषु निवेश्यते, तां समर्प्य विशेषतो धर्मक्रियाकरणमेव निर्दिष्टमस्ति, यतस्तन्माहात्म्ये [illegible] श्लोकाः—"अस्मै समर्पितास्सर्वे, ये गुणा मयि संश्रिताः । पुरुषोत्तमेति मन्नाम, प्रथितं लोकवेदयोः ॥ ९ ॥ तदप्यस्मै मया दत्तं, तव तुष्ट्यै जनार्दन ! । अहमेवास्य सञ्जातः, स्वामी च मधुसूदनः ॥ १० ॥ [illegible] ॥ एतन्नाम्ना जगत्सर्वं, पवित्रं च भविष्यति । मत्सादृश्यमुपागम्य, मासानामधिपो भवेत् ॥ ११ ॥ जगत्पूज्यो जगद्वन्द्यो, मासोऽयं तु भविष्यति । पूजकानां च सर्वेषां, दुःखदारिद्र्यखण्डनः ॥ १२ ॥ × × सर्वसाधनतः श्रेष्ठः, सर्व-

कामार्थसिद्धिदः। तस्मात्संसेव्यतामेषो, मासोऽयं पुरुषोत्तमः ॥ १९ ॥ सीतानिक्षिप्तबीजानि, वर्द्धन्ते कोटिशो यथा। तथा कोटिगुणं पुण्यं, कृतं मे पुरुषोत्तमे ॥ २० ॥ ×× विधिवत्सेवते यस्तु, पुरुषोत्तममादरात्। कुलं स्वकीयमुद्धृत्य, मामेवैष्यत्यसंशयम् ॥ २२ ॥ मामुपेतोऽत्र संसारे, जन्ममृत्युभयाकुले। आधिव्याधिजराग्रस्ते, न पुनर्याति मानवः ॥ २३ ॥ ×× य एतस्मिन्महामूढा, जपदानादिवर्जिताः। सत्कर्मस्नानरहिता, देवतीर्थद्विजद्विषः ॥ ३० ॥ जायन्ते दुर्भगा दुष्टाः, परभाग्योपजीविनः। न कदाचित्सुखं तेषां, स्वप्नेऽपि शशशृङ्गवत् ॥३१॥ युग्मम् ॥ तिरस्कुर्वन्ति ये मूढा, मलमासं मम प्रियम्। नाचरिष्यन्ति ये धर्मं, ते सदा निरयालयाः ॥ ३२ ॥ पुरुषोत्तममासाद्य, वर्षे वर्षे तृतीयके। नाचरिष्यन्ति धर्मं ये, कुम्भीपाके पतन्ति ते ॥ ३३ ॥ इहलोके महद्दुःखं, पुत्रपौत्रकलत्रजम्। प्राप्नुवन्ति महामूढा, दुःखदावानलस्थिताः ॥ ३४ ॥ ते कथं सुखमेधन्ते ?, येपामज्ञानतो गतः। श्रीमान्पुण्यतमो मासो, मदीयः पुरुषोत्तमः ॥ ३५ ॥" (पुरुषो० माहा० अध्याय ७)।

"सर्वे मासास्तथा पक्षाः, पर्वाण्यन्यानि यानि च। पुरुषोत्तममासस्य, कलां नार्हन्ति षोडशीम् ॥ ७ ॥" (अध्यायः १०)।

"एकमप्युपवासं यः, करोत्यस्मिंस्तपोधनः। असावनन्तपापानि, भस्मीकृत्य द्विजोत्तम! ॥ ६ ॥"

"सुरयानं समारुह्य, वैकुण्ठं याति मानवः।" (पुरुषो० माहा० अध्याय १९)।

इत्यादयोऽनेके श्लोकाः सन्त्यधिकमासमाहात्म्यवर्णकाः पुरुषोत्तममासमाहात्म्ये, न च तत्र गन्धोऽप्यधिकमासागणनाया जपस्तपःप्रभृतिभिः पर्वाराधननिपेधस्य वा, प्रत्युत विशेषेण धर्मक्रियायाः करणीयत्वमेव निर्दिष्टं। किञ्च—यद्यधिकमासागणनमेव भवतामिष्टं तदा द्विमासक्षपण-सार्द्धमासक्षपण-मासक्षपणादितपःकर्मसु कथं तस्यागणनं न क्रियते भवता ?।

यदि चाधिकमासो गणनायां गण्यते तदा चातुर्मासिक-सांवत्सरिकप्रतिक्रान्त्योरभ्युत्थानक्षामणासु "चउण्हं मासाणं, अट्ठण्हं पक्खाणं, वीसुत्तरसयराइंदियाणं" तथा "बारसण्हं मासाणं, चउवीसण्हं पक्खाणं, तिण्णिसयसट्ठिराइंदियाणं" इत्येतदागमोक्तपाठस्थाने "पंचण्हं मासाणं, दसण्हं पक्खाणं, पण्णासुत्तरसयराइंदियाणं" तथा "तेरसण्हं मासाणं, छव्वीसण्हं पक्खाणं, तिण्णिसयनउइराइंदियाणं" इत्येवं कल्पितपाठो वक्तव्यः स्यादिति चेत्? न, जल्पनमेतदागमज्ञानाकौशलमेव व्यनक्ति तव, यतो न कुत्राप्यागमे प्रोक्तमेतत्, बहुना-चान्द्रोऽभिवर्द्धितो वा यः कोऽपि वर्षो भवतु, सर्वत्र तुल्य एव पाठोऽभ्युत्थानक्षामणासु पठनीयः, भवेदेवं चेत्क्वाप्यागमे तर्हि किं न दर्शितो भवता?, अस्मद्दृष्टिपथे तु न कापायातं, केवलं हारिभद्रीयावश्यकवृत्तिप्रोक्तं "एगस्स पक्खस्स पण्णरसण्हं दिवसाणं, पण्णरसण्हं राईणं" इत्येवं पाक्षिकपाठवदुक्तगेव चातुर्मासिक-सांवत्सरिकयोरपि पाठकल्पनैवाहर्निशं विधीयते सर्वैरपि गच्छवासिभिः। अपि च त्वामेव पृच्छामो, बहुना-तीर्थकरैः सद्भूतवस्तुप्ररूपणमुपदिष्टं वाऽसद्भूतवस्तुप्ररूपणं?। चेत्सद्भूतवस्तुप्ररूपणमुपदिष्टं तर्हि जातेष्वपि वस्तुतस्त्रयोदशसु मासेषु षड्विंशतिषु च पक्षेषु, जल्पितेष्वपि च स्वास्येनैव प्रतिपाक्षिकं त्रिस्त्रिर्वारं "एगस्स पक्खस्स" इत्यादिपाठेन सद्भूतगणनागतेषु षड्विंशतिषु पक्षेषु चातुर्मासिकसांवत्सरिकयोरेकं मासं द्वौ च पक्षावुल्लङ्घ्य "चउण्हं मासाणं, अट्ठण्हं पक्खाणं—बारसण्हं मासाणं, चउवीसण्हं पक्खाणं" इत्यादिजल्पनं किं सद्भूतवस्तुप्ररूपणं? उतासद्भूतवस्तुप्ररूपणं? इति स्वयमेव त्वं चक्षुषी निमील्य विचारय।

ननु तर्हि तिथीनां वृद्धौ जातेष्वपि षोडशसु रात्रिन्दिवेषु वृद्धितिथिं सम्मिल्य "सोलसण्हं दिवसाणं" इत्यादिकमभणित्वा कथं "पण्णरसण्हं दिवसाणं" इत्येव भण्यते? इति चेदिदमपि तेऽनुपासितगुरोर्वचो न विद्वज्जनमनांसि रञ्जयति, यतो यद्येकस्मिन्नेव पक्षे तिथेर्वृद्धिर्हानिश्चापि भवति, यद्वा एकस्मिन् पक्षे वृद्धिरन्यस्मिंश्च पक्षे हानिर्भवति तदा तां वृद्धितिथिं गणयित्वैव तु "पण्णरसण्हं दिवसाणं"

इत्यादिर्जल्प्यते। किञ्च—सर्वाग्रेण तु वर्षे षण्णां दिवसानां हानिरेवोपलभ्यते, ततः कथं **"सोलसण्हं दिवसाणं"** इत्यादिजल्पनमुचितं भवेत् ?।

अन्यच्च यद्यपि निश्चयनयमपेक्ष्य सर्वेऽपि पक्षाः पादोनपञ्चदशदिनप्रमाणा एव भवन्ति, न तु परिपूर्णाः पञ्चदशदिनप्रमाणाः, तथापि व्यवहारनयमपेक्ष्य **"एगमेगस्स णं भंते ! पक्खस्स कइ दिवसा पण्णत्ता ?, गोयमा ! पण्णरस दिवसा पण्णत्ता"** इति जम्बूद्वीपप्रज्ञप्त्यादिशास्त्रप्रमाणात्सर्वत्राप्यागमे यथा पञ्चदशदिनात्मका एव सर्वे पक्षाः प्रोक्ता न तथा सर्वेऽपि वर्षा द्वादशमास-चतुर्विंशति-पक्षात्मका एव भवन्तीति क्वाप्यागमे केनापि दृष्टं श्रुतं वा। किञ्च—यथा तिथीनां हानिर्वृद्धिश्च द्वेऽपि भवन्त्यौ दृश्येते, न तथा मासानामेकस्मिन्वर्षे वृद्धिरन्यस्मिन्नेव च वर्षे हानिः केनापि दृष्टा श्रुता वा।

अपि च—**"तेरस य चंदमासा, ए[वा]सो अभिवड्ढिओ उ नायव्वो"** इति ज्योतिष्करण्डके, तथा **"अभिवड्ढियसंवच्छरस्स छव्वीसाइं पव्वाइं"** इति चन्द्र-सूर्य-जम्बूद्वीपप्रज्ञप्तिषु, तथा **"पंचसंवच्छरिए जुगे बासट्ठि पुण्णिमाओ बावट्ठि अमावासाओ पण्णत्ताओ"** इति चतुर्थांगे, इत्याद्यनल्पैः शास्त्रप्रमाणैर्यथा द्वादशमासात्मकाचान्द्रवर्षाद्भिन्नस्य त्रयोदशमासात्मकस्याभिवर्द्धितवर्षस्य निरूपणमुपलभ्यते न तथैकादशमासात्मकस्य वर्षस्योपलभ्यते क्वाप्यागमे। किञ्च—यद्यधिकमासोऽप्रमाण एव भवतां ? तदा कथं प्रथमं शुद्धभाद्रपदं विहाय द्वितीयेऽधिकभाद्रपदे पर्युषणापर्वाराधनं विधीयते भवता ?।

न च वाच्यं प्रथमो मासोऽधिक इति, युक्त्या शास्त्रप्रमाणेनापि च बाधितत्वात्। नहि भाद्रविकैर्विनाऽन्येन केनापि प्रथममेव पुत्रं शिष्यं वाऽधिकत्वेन जल्पितुं शक्यते, ततः कथं प्रथमो मासोऽधिक इति केनापि सकर्णेन जल्पितुं शक्यते ?, न कथमपि। न चैतदनागमिकं, यतः—**"अइरित्त अहिगमासा"** इति दशवैकालिकनिर्युक्तिवृत्तौ **"अतिरिक्ता—उचितकालात्समधिका अधिकमासकाः**

प्रतीताः" इति श्रीमद्धरिभद्रसूरिपुरन्दराः, तथा "सट्ठीए अइयाए, हवइ हु अधिमासगो जुगद्धम्मि। बावीसे पव्वसए, हवइ बीओ जुगंतम्मि ॥ १ ॥ वृत्तिः—एकस्मिन् युगे—प्रागुक्तवर्णितस्वरूपे पक्षाणां षष्टावतीतायां, षष्टिसङ्ख्येषु पक्षेष्वतिक्रान्तेष्वित्यर्थः, एतस्मिन्नवसरे युगार्द्धप्रमाणे एकोऽधिकमासो भवति, द्वितीयस्त्वधिकमासकश्चान्द्रे द्वाविंशत्यधिके पर्वशते—पक्षशतेऽतिक्रान्ते युगस्यान्ते—युगस्य पर्यवसाने भवति" इति ज्योतिष्करण्डकमूले वृत्तावपि च। एतत्प्रभृतिषु सर्वेष्वपि शास्त्रेषु द्वितीय एव मासोऽधिकत्वेन निरूपितस्तीर्थकृद्गणधरादिभिः। उचितकालो—मार्गशीर्षानन्तरभावी प्रथमः पौषः ज्येष्ठानन्तरभावी प्रथम आषाढो वा, तन्नान्यमधिक—उपरिवर्त्ती, तथा पक्षाणां षष्टेर्द्वाविंशत्यधिकशतस्य चातीतेषु, न त्वन्तरैव, अधिकमाससम्भवस्य प्रोक्तत्वात्। नहि प्रथम एव पौषे आषाढे वा उचितकालात्समधिकत्वं पक्षाणां षष्ट्या द्वाविंशत्यधिकाच्छताच्चानन्तरभावित्वं वा सङ्घटीति, पक्षाणां षष्टेर्द्वाविंशत्यधिकस्य शतस्य न तत्रैव पूर्णीभवनात्। किञ्च—मार्गशीर्षानन्तरमागतः पौषो ज्येष्ठानन्तरमागतश्चाषाढ एव यद्यधिको भवेत्तदा न तौ ऽपि मासा अधिका भवेयुर्भवन्मते, प्रतिमासानां प्रतिमासानन्तरमेव भावित्वात्। अपि च यदा "अहिगा संवच्छरा य कालम्मि" इति दशवैकालिकनिर्युक्तिपाठात्तथा "अधिकाः संवत्सराश्च षष्ट्यब्दाद्यपेक्षया 'काल' इति कालचूडा" इति तस्यैव हारिभद्रीयवृत्तिपाठाच्च वर्षाणां षष्ट्यनन्तरं योऽधिकः संवत्सरो भवति तस्मिंस्तु सर्वथैव पर्युषणाया अकरणमेव स्वीकर्त्तव्यं स्याद्भवताम्।

ननु वर्षाकालस्य चतुर्मासत्वं पञ्चाशद्दिनलक्षणानियतावग्रहमध्यात्पञ्चपञ्चदिनवृद्ध्या हान्या वा स्यात्, न पुनः पर्युषणानन्तरमपि दिनवृद्ध्या, यथा च कार्त्तिकचातुर्मासिकमनियतं स्यादिति चेत्?, अहो ते वैदग्ध्यं गुरुपादमूलसेवित्वं च!!, यतः केन शिष्टं पर्युषणानन्तरमपि वर्षावग्रहस्य न्यूनत्वं?, न केनाप्येवं प्रतिपाद्यते, परं संवत्सरप्रतिक्रान्त्यनन्तरं दिनशतात्मको गृहिज्ञातपर्युषणावग्रहो नैव भवतीत्यपि न केनापि

काप्यागमे दृष्टं श्रुतं वा, प्रत्युत कल्पनिर्युक्ति-निशीथचूर्णि-बृहत्कल्पचूर्णिप्रभृतिसर्वमान्यप्राचीनशास्त्रेषु चान्द्रे वर्षे सप्ततिदिनानामभिवर्द्धिते तु शतदिनानां पाश्चात्यानामवशिष्टत्वं सुस्पष्टमेव प्रतीयते गुरुपादमूलसेविनामागमविदाम् ।

अनेनैतदपि स्फुटं ज्ञापितं—यद्गृहिज्ञातपर्युषणानन्तरं चान्द्रे वर्षे सप्ततिदिनलक्षणोऽभिवर्द्धिते च दिनशतात्मक औत्सर्गिको वर्षावग्रहः सांवत्सरिकप्रतिक्रमणादिकृत्यविशिष्टाया गृहिज्ञातपर्युषणाया भवति, **"एत्थ अधिमासगो चेव मासो गणिज्जति, सो वीसाए समं सवीसतिरातो मासो भण्णति चेव"** इति बृहत्कल्पचूर्ण्यादिशास्त्रप्रमाणैः पौर्वात्यायां दिनविंशत्यामधिकमासप्रक्षेपेण दिनपञ्चाशत्याः परिपूरितत्वात् ।

अन्यच्च—**"अंतरा वि य से कप्पइ, नो से कप्पइ तं रयणिं उवाइणावित्तए"** इति कल्पसिद्धान्तप्रमाणेन यथा पौर्वात्यानां पञ्चाशद्दिनानामनुल्लङ्घनं प्रोक्तं न तथा पाश्चात्यानां सप्ततिदिनानामनुल्लङ्घनं समवायाङ्गेऽन्यत्र वा कुत्राप्यागमे प्रोक्तं, ततः कथं निश्चीयते ? यत्सांवत्सरिकप्रतिक्रमणादिकृत्यविशिष्टगृहिज्ञातपर्युषणानन्तरं सप्ततिदिनेभ्योऽधिको वर्षावग्रहो नैव रक्षणीय इति ।

यस्त्वेवं पाश्चात्येऽवग्रहे वर्द्धिते कार्त्तिकचातुर्मासकानैयत्यं प्रलपति स हि यक्षावेशोज्झितवसनोऽप्यलङ्कृतं पुरुषं प्रत्युपहसन्निवावगन्तव्यः, कथमन्यथा स्वपूर्वजैराद्ये कार्त्तिके समाचीर्णमिति स्वास्येनैव स्वीकुर्वन्नपि स्वयं पुनर्द्वितीये कार्त्तिके प्रतिक्रामन्नपि चेत्थं प्रलापमकरिष्यत् ? । एवं तु कार्त्तिकचातुर्मासकानैयत्यं न कथमपि भवितुमर्हति, परं कार्त्तिकवृद्धौ द्वितीये कार्त्तिके सांवत्सरिकप्रतिक्रान्तिविधायकानां सुदुर्निवार एव जिनाज्ञायाः स्वपूर्वजपरम्परायाश्च विलोपप्रसङ्गः, जिनाज्ञया चतुर्मासप्रमाणतैव कार्तिकचातुर्मासकस्य नियमितत्वात् ।

नन्वेवं तर्हि श्रावणाद्यन्यतरवृद्धावाश्विन एव चातुर्मासकं प्रतिक्रान्तव्यं स्यादिति चेत् ? न, तस्य कार्त्तिकमासप्रतिबद्धत्वात् । न चाद्ये कार्त्तिके कार्त्तिकत्वाभावः । प्रतिक्रान्तं च भाद्रविकपूर्वजैः **श्रीसोमप्रभसूरिभिराद्ये** कार्त्तिके चातुर्मासकं, पश्यतां—

वासावासं० कप्पइ निग्गंथाण वा निग्गंथीण वा सव्वओ समंता सक्कोसं जोयणं उग्गहं ओगिण्हित्ता णं चिट्ठिउं अहालंदमवि उग्गहे ९. (२)

अथ वर्षायामवग्रहमानलक्षणा द्वितीया सामाचारी भण्यते—

९.—'वर्षावासं' चतुर्मासकं 'पर्युषितानां' स्थितानां कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा, 'सर्वतः' चतसृषु, गजेन्द्रपदादिगिरिमेखलोपाश्रये ऊर्ध्वाधोमेलनात्षट्सु च दिक्षु 'समन्तात्' विदिक्षु च सक्रोशं योजनं गमनागमनापेक्षया, केवलं गमने सार्द्धं क्रोशद्वयं 'अवग्रहं' मर्यादां 'अवगृह्य' गृहीत्वा, अथेत्यव्ययं, 'लन्द'मिति कालस्याख्या, तत्रोदकार्द्रः करो यावता कालेन शुष्यति तावान् कालो जघन्यं लन्दं, पञ्चाहोरात्रश्चोत्कृष्टं तन्मध्ये मध्यमं। तत्र जघन्यमपि लन्दं, अर्थात्स्तोकमपि कालं, आस्तां बहु, अवग्रहमध्य एव, नावग्रहाद्बहिः, स्थातुं कल्पते। अटव्यादिव्याघाते यथासम्भवं त्रिद्व्येकदिक्षो वाऽवग्रहो भावनीयः। इति द्वितीया सामाचारी॥

"श्रुतातिशायी पुरि भीमपल्ल्यां, वर्षासु चाद्येऽपि हि कार्त्तिकेऽसौ।"

"अगात्प्रतिक्रम्य विबुद्ध्य भावि–भङ्गं परैकादशसूर्यबुद्धम्॥ १॥" इति मुनिसुन्दरसूरीयगुर्वावल्याम्।

"भीमपल्ल्यां कार्त्तिके द्वये प्रथम एव कार्त्तिके एकादशान्यपक्षीयाचार्याविज्ञातं भाविनं भङ्गं विज्ञाय चातुर्मासीं प्रतिक्रम्य विहृतवन्तः" इति धर्मसागरीयपट्टावलीवृत्तौ। एवमेव क्रियारत्नसमुच्चयप्रशस्तावपि।

न च सामान्यं 'नवु पडिमंतव्वाणाहिति'मिति, सञ्जातेऽप्युपद्रवादिकारणे चातुर्मासिकमप्रतिक्रम्य नैव विहर्त्तव्यमिति न क्वाप्यागमे प्रोक्तं, तेषां भो सिद्धाऽनागतेऽपि कार्त्तिके उपद्रवादिसद्भावे चातुर्मासिकं प्रतिक्रम्यैव विहर्त्तव्यमिति सुतरां स्वीकर्त्तव्यं स्यादित्यलम्।

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा निग्गंथीण वा सव्वओ समंता सक्कोसं जोयणं भिक्खायरियाए गंतुं पडिनियत्तए॥१०॥ जत्थ नई निच्चोयगा निच्चसंदणा, नो से कप्पइ सव्वओ समंता सक्कोसं जोयणं भिक्खायरियाए गंतुं पडिनियत्तए ॥११॥ एरावई कुणालाए, जत्थ चक्किया सिया एगं पायं जले किच्चा एगं पायं थले किच्चा, एवं चक्किया, एवं णं कप्पइ सव्वओ समंता सक्कोसं जोयणं भिक्खा० गंतुं पडिनियत्तए ॥१२॥ एवं च नो चक्किया, एवं से नो कप्पइ सव्वओ समंता सक्कोसं जोयणं भिक्खाय० गंतुं पडिनियत्तए ॥१३॥ (३)

अथ तृतीयां भिक्षाचर्याऽवग्रहलक्षणां सामाचारीमाह—

१०—वर्षावासं पर्युषितानां कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'सर्वतः' चतसृषु षट्सु वा दिक्षु 'समन्तात्' विदिक्षु च सक्रोशं योजनं—गमनागमनेन पञ्चक्रोशमित्यर्थः, 'भिक्षाचर्यायां' गोचरचर्यार्थं गन्तुं प्रतिनिवर्त्तितुं। ११—यत्र नदी 'नित्योदका' सदाऽस्तोकजला 'नित्यस्यन्दना' सततवाहिनी, तत्र न तस्य कल्पते सर्वतः समन्ताद्दिक्षु विदिक्षु च सक्रोशं योजनं भिक्षाचर्यायां गन्तुं प्रतिनिवर्त्तितुं। १२—यथा चैरावतीनदी कुणालायां पुर्यामस्ति, यत्र स्तोकजलत्वात् "चक्किया" शक्नुयात् "सिया" स्यात्—यदि एकं पादं 'जले कृत्वा' जलान्तः प्रक्षिप्य एकं च पादं 'स्थले' जलादुपर्याकाशे कृत्वा, एवं द्वाभ्यां पादाभ्यां जलमविलोडयन् गन्तुं यदि शक्नुयात्, एवं सति कल्पते सर्वतः समन्तात्सक्रोशं योजनं भिक्षाचर्यायां गन्तुं प्रतिनिवर्त्तितुं। १३—एवं च प्रागुक्तेन प्रकारेण यत्र गन्तुं न शक्नुयात्, एवं तस्य साधोर्न कल्पते सर्वतः समन्तात्सक्रोशं योजनं भिक्षाचर्यार्थं गन्तुं प्रतिनिवर्त्तितुं, यत्र जलं विलोड्य गमनं स्यात्तत्र न कल्पते गन्तुमित्यर्थः। तत्र जङ्घार्द्धं यावज्जलं दकसङ्घट्टः १, नाभिं यावल्लेपः २, तत्परतो लेपोपरि ३,

गामाणुगामं पज्जोसवियाणं अत्थेगइयाणं एवं वुत्तपुव्वं भवइ–'दावे भंते !'। एवं से कप्पइ दावित्तए, नो से कप्पइ पडिगाहित्तए ॥ १४॥
गामाणुगामं पज्जो० अत्थेगइयाणं एवं वुत्तपुव्वं भवइ–'पडिगाहेहि भंते !'। एवं से कप्पइ पडिगाहित्तए, नो से कप्पइ दावित्तए ॥ १५॥
गामाणुगामं पज्जो० अत्थेगइयाणं एवं वुत्तपुव्वं भवइ–'दावे भंते ! पडिगाहेहि भंते !' एवं से कप्पइ दावित्तए वि पडिगाहित्तए वि ॥ १६॥ (४)

तत्र ऋतुबद्धे काले प्रतिमासं त्रिभिर्दकसङ्घट्टैर्वर्षाकाले च सप्तभिः क्षेत्रं नोपहन्यते, चतुर्थेऽष्टमे च दकसङ्घट्टे उपहन्यत एव, एषा सङ्ख्या केवलं गमनापेक्षिकैवास्ति, गमनागमने तु ऋतुबद्धे षट् वर्षासु चतुर्दश स्युः। लेपस्त्वेकोऽपि क्षेत्रमुपहन्ति, नाभिं यावज्जले गन्तुमेव न कल्पते, किं पुनर्लेपोपरि जलसद्भावे?। इति तृतीया समाचारी ॥

अथ साधूनां परस्परमाहारादिदानरूपां चतुर्थीं सामाचारीमाह—

१४–वर्षावासं पर्युषितानां अस्त्येतत् 'यदेकेषां' केषाञ्चित्साधूनां एवमुक्तपूर्वं भवति, गुरुभिरिति गम्यते, हे 'भदन्त' कल्याणिन् साधो ! ग्लानायामुकं वस्तु दापयेस्त्वं, एवं सति तस्य साधोः कल्पते दातुं ग्लानाय, परं न तस्य कल्पते स्वयं प्रतिग्रहीतुं। १५–वर्षावासं पर्युषितानां अस्त्येतद्यदेकेषां साधूनां गुरुभिरेवमुक्तपूर्वं भवति–यत्त्वं स्वयममुकं वस्तु प्रतिगृह्णीयाः भदन्त !, ग्लानायान्यो दास्यति, एवं सति तस्य कल्पते प्रतिग्रहीतुं, परं न तस्य कल्पते ग्लानाय दातुं। १६–वर्षावासं पर्युषितानां अस्त्येतद्यदेकेषां साधूनां गुरुभिरेवमुक्तपूर्वं भवति, यदुत–दापयेः 'भदन्त !' कल्याणिन् ! ग्लानाय स्वयमपि च प्रतिगृह्णीया भदन्त !। एवं सति तस्य कल्पते दातुमपि प्रतिग्रहीतुमपि। गुरुभिरनुक्ते ग्लानाय ददाति स्वयं वा गृह्णाति चेत्तदा पारिष्ठापनिकादोषोऽजीर्णादिना

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण निग्गंथीण वा हट्ठाणं तुट्ठाणं आरोग्गाणं बलियसरीराणं इमाओ नव रसविगइओ अभिक्खणं अभिक्खणं आहारित्तए, तं जहा-खीरं १ दहिं २ नवणीयं ३ सप्पिं ४ तिल्लं ५ गुडं ६ महुं ७ मज्जं ८ मंसं ९ ॥ १७ ॥ (५)

---

ग्लानत्वं वा मोहोद्भवो वा क्षीरादौ च धरणाधरणे आत्मसंयमविराधना स्यात् । इति चतुर्थी सामाचारी ॥

अथ रसविकृतित्यागरूपां पञ्चमीं सामाचारीं प्राह—

१७-वर्षावासं पर्युषितानां न कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'हृष्टानां' तरुणत्वेन सशक्तानां, अत एव 'तुष्टानां' प्रसन्नानां 'आरोग्याणां' रोगरहितानां 'बलिकशरीराणां' शारीरिकबलवतां या 'इमाः' वक्ष्यमाणा नव रसप्रधाना विकृतयः, रसग्रहणं तासां मोहोद्भवहेतुत्वख्यापनार्थं, ता 'अभीक्ष्णं अभीक्ष्णं' वारंवारं आहारयितुं, तद्यथा-'क्षीरं' दुग्धं, दधि प्रतीतं 'नवनीतं' म्रक्षणं 'सर्पिः' घृतं तैलं गुडं मधु मद्यं मांसं चेति । अभीक्ष्णग्रहणं पुष्टालम्बने कदाचित्तासां परिभोगानुज्ञार्थं । नवग्रहणात्कदाचित्पक्वान्नं गृह्यते । तत्र विकृतयो द्वेधा-असाञ्चयिकाः साञ्चयिकाश्च । तत्रासाञ्चयिकास्ता या बहुकालं रक्षितुमशक्याः, ताश्च दुग्धदधिपक्वान्नाख्या ग्लानत्वे गुरुबालाद्युपग्रहार्थं श्राद्धाग्रहाद्वा ग्राह्याः, साञ्चयिकास्तु घृततैलगुडाख्यास्तिस्रः, ताः प्रतिलम्भयन् गृही वाच्यो-महान् कालोऽस्ति, ततो यथावसरं ग्लानादिनिमित्तं ग्रहीष्यामः । गृही वदेत्-गृह्णीत, चतुर्मासीं यावत्प्रभूताः सन्ति, ततो ग्राह्या बालादीनां च देया, न तरुणानां । यद्यपि मद्यादीनां वर्जनं यावज्जीवमस्त्येव, तथाप्यत्यन्तापवादे बाह्यपरिभोगार्थं कदाचिद्वर्षाकालादन्यत्र ग्राह्यमपि वर्षाकाले सर्वथा न ग्राह्यं । इति पञ्चमी सामाचारी ॥

सूत्रं १७ सामाचाया मुत्सर्गतो विकृतिग्रहणनिषेधात्मिका पञ्चमी सामाचारी

॥१८२॥

वासावासं पज्जो० अत्थेगइयाणं एवं वुत्तपुव्वं भवइ–'अट्ठो ? भंते ! गिलाणस्स' से य वइज्जा–'अट्ठो' । से य पुच्छियव्वे–केवइएणं अट्ठो ?' से वएज्जा–एवइएणं अट्ठो गिलाणस्स, जं से पमाणं वयइ से य पमाणओ घित्तव्वे । से य विन्नविज्जा, से य विन्नवेमाणे लभिज्जा, से य पमाणपत्ते 'होउ अलाहि' इय वत्तव्वं सिया । से किमाहु ? भंते !, एवइए णं अट्ठो गिलाणस्स । सिया णं एवं वयंतं परो वइज्जा–पडिगाहेहि अज्जो !, पच्छा तुमं भोक्खसि वा पाहिसि वा, एवं से कप्पइ पडिगाहित्तए, नो से कप्पइ गिलाणनीसाए पडिगाहित्तए ॥१८॥(६)।

अथ ग्लानप्रायोग्यग्रहणविधिरूपा षष्ठी सामाचारी प्रोच्यते—

१८–वर्षावासं पर्युषितानां अस्त्येतत् यदेकेषां वैयावृत्त्यकरादीनां मध्यात्केनाप्येवमुक्तपूर्वं भवति, गुरुं प्रतीति शेषः, हे 'भदन्त !' पूज्य ! अर्थोऽस्ति ग्लानस्य ?, ततः 'स च' गुरुर्वदेत्–अर्थोऽस्ति । ततो वैयावृत्त्यकरेण स च ग्लानः प्रष्टव्यः–कियता विकृत्यादिना तवार्थः ? । तेन स्वप्रमाणे प्रोक्ते स वैयावृत्त्यकरो गुरुं वदेत्–इयता विकृत्यादिना अर्थो ग्लानस्य, गुरुर्वदेत्–यत्स ग्लानः प्रमाणं वदति तत्प्रमाणतस्तद्विकृत्यादिकं ग्रहीतव्यं त्वया । स च–वैयावृत्त्यकरो 'विज्ञपयेत्' याचेत गृहस्थपार्श्वात्, स च 'विज्ञपयन्' याचमानो लभेत तद्वस्तु, अथ प्रमाणप्राप्ते तद्वस्तुनि "होउ अलाहि" त्ति 'भवत्वलं, अधिकं माऽदाः' इति वक्तव्यं स्यात् गृहस्थं प्रति । अथ गृहस्थो ब्रूते–'किमाहु भदन्ताः !' किमर्थं भगवन्तः ! अलमिति ब्रुवते ?, साधुर्ब्रूते–एतावतैवार्थो ग्लानस्य । 'स्यात्' कदाचित् "णं" ति एनं साधुं एवं वदन्तं 'परो' गृही वदेत्–प्रतिगृहाण हे आर्य !, 'पश्चात्' ग्लानभोजनानन्तरं यदधिकं तत्त्वं भोक्ष्यसे पक्वान्नादि:, पास्यसि वा क्षीरादि:, "पाहिसि" त्ति स्थाने क्वचित् "दाहिसि" त्ति पाठस्तत्र स्वयं भुञ्जीथा अन्येभ्यो वा

वासावासं पज्जो० अत्थि णं थेराणं तहप्पगाराइं कुलाइं कडाइं पत्तियाइं थिज्जाइं वेसासियाइं सम्मयाइं बहुमयाइं अणुमयाइं भवंति, तत्थ से नो कप्पइ अदक्खु वइत्तए-'अत्थि ते आउसो! इमं वा इमं वा?'। से किमाहु? भंते!, सड्ढी गिही गिण्हइ वा, तेणियं पि कुज्जा(७)।

---

दद्या इति व्याख्येयम्। एवं गृहस्थेनोक्ते सति तस्य साधोः कल्पते प्रतिग्रहीतुं, परं न तस्य कल्पते ग्लाननिश्रया गृद्धितः स्वयं प्रतिग्रहीतुं, ग्लानार्थमानितं मण्डल्यां नानेयमिति भावः। इति षष्ठी सामाचारी॥

अथ वक्ष्यमाणेषु कुलेष्वदृष्टं वस्तु न याचनीयमित्यर्थनिरूपिकां सप्तमीं सामाचारीं प्राह—

१९—वर्षावासं पर्युषितानां अस्त्येतत्, "णं" इति वाक्यालङ्कारे, स्थविराणां तथाप्रकाराणि अजुगुप्सितानि 'कुलानि' गृहस्थगृहाणि, भवन्तीति क्रियाऽत्र योज्या, यानि कुलानि 'कृतानि' तैरन्यैर्वा श्रावकीकृतानि 'प्रत्ययितानि' प्रीतिकराणि 'स्थैर्याणि' प्रीतौ दाने वा स्थिरतायुतानि 'वैश्वासिकानि' ध्रुवं लप्स्येऽहममुकं वस्तु तत्रेति विश्वासयुतानि 'सम्मतानि' येषां साधुप्रवेशः सम्मतो भवति, तानि। 'बहुमतानि' बहवोऽपि साधवः सम्मता येषां, यद्वा बहूनां गृहमनुजानां साधवः सम्मता येषु कुलेषु, तानि। 'अनुमतानि' दातुमनुज्ञातानि, यद्वा 'अणुः' क्षुल्लकोऽपि मतो येषु, सर्वसाधुसाधारणत्वात्, न तु मुखं दृष्ट्वा तिलकं कुर्वन्ति, ईदृशानि कुलानि भवन्ति, 'तत्र' तेषु कुलेषु तस्य साधोर्न कल्पते याच्यं वस्तु अदृष्ट्वा वदितुं, यथाऽस्ति ते गृहे हे आयुष्मन्! इदं वा इदं वा?। तत् किमाहुर्भदन्ताः! इति शिष्यप्रश्ने गुरुराह—'श्रद्धी' श्रद्धावान् गृही गृह्णीत मूल्येन, मूल्येनाप्यप्राप्ये वस्तुनि स्तैन्यमपि कुर्यात्, श्रद्धातिशयत्वात्। कृपणगेहे तु अदृष्ट्वाऽपि याचने न दोषः। इति सप्तमी सामाचारी॥

वासावासं पज्जोसवियस्स निच्चभत्तियस्स भिक्खुस्स कप्पइ एगं गोअरकालं गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा, णऽन्नत्थायरियवेयावच्चेण वा, एवं उवज्झायवे० तवस्सिवे० गिलाणवे० खुड्डएण वा खुड्डियाए वा अवंजणजायएण वा ॥ २० ॥ वासावासं पज्जोसवियस्स चउत्थभत्तिअस्स भिक्खुस्स अयं एवइए विसेसे-जं से पाओ निक्खम्म पुव्वामेव वियडगं भुच्चा पिच्चा पडिग्गहगं संलिहिय संपमज्जिय से य संथरिज्जा, कप्पइ से तद्दिवसं तेणेव भत्तट्ठेणं पज्जोसवित्तए। से य नो संथरिज्जा, एवं से

---

अथाष्टमीं भिक्षाचर्याकालनियमनरूपां सामाचारीमाह—

२०–वर्षावासं पर्युषितस्य 'नित्यभक्तिकस्य' नित्यमेकाशनिनो भिक्षोः कल्पते 'एकं गोचरकालं' एकस्मिन्नेव समये 'गाथापतिकुलं' गृहस्थगृहं भक्ताय वा पानाय वा निष्क्रमितुं वा प्रवेष्टुं वा, न पुनर्द्वितीयवारं, परं "णन्नत्थ" इत्यत्र णकारो वाक्यालङ्कारार्थः, अन्यत्राचार्यवैयावृत्त्यात्–आचार्यवैयावृत्त्यकरं वर्जयित्वेत्यर्थः, स हि यथेकवारभुक्तेन वैयावृत्त्यं कर्तुं न शक्नोति तदा द्विरपि भुङ्क्ते, यतस्तपसो हि वैयावृत्त्यं गरीयः। एवं उपाध्यायवैयावृत्त्यकराद्वा तपस्विवैयावृत्त्यकराद्वा ग्लानवैयावृत्त्यकराद्वा क्षुल्लकाद्वा क्षुल्लिकाया वा अव्यञ्जनजातकाद्वा, किमुक्तं भवति?, यावद्दस्तिकूर्चकक्षादिरोमाणि न प्रादुर्भूतानि तावत्क्षुल्लकेति व्यपदिश्यते, तस्मात्। एतानाचार्यादिवैयावृत्त्यकरादीन् द्विरपि भोजनं न दूष्यति। अत्र सर्वत्र पञ्चम्यर्थे तृतीया। २१–वर्षावासं पर्युषितस्य 'चतुर्थभक्तिकस्य' एकान्तरितोपोषितस्य भिक्षोरयमेतावान् विशेषो–यत्स प्रातर्गोचर्यार्थं निष्क्रम्य 'पूर्वमेव' प्रथममेव 'विकटं' प्रासुकाहारं भुक्त्वा पीत्वा च तक्रादिकं 'पतद्ग्रहं' पात्रं 'संलिख्य' प्रक्षालनादिना निर्लेपीकृत्य

कप्पइ दुच्चं पि गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥२१॥ वासावासं पज्जो० छट्ठभत्तियस्स भिक्खुस्स कप्पंति दो गोअरकाला, गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥ २२ ॥ वासावासं पज्जो० अट्ठमभत्तियस्स भिक्खुस्स कप्पंति तओ गोअरकाला, गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥ २३ ॥ वासावासं पज्जो० विगिट्ठभत्तिअस्स भिक्खुस्स कप्पंति सव्वे वि गोअरकाला, गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥२४॥(८)।

वासावासं पज्जोसवियस्स निच्चभत्तिअस्स भिक्खुस्स कप्पंति सव्वाइं पाणगाइं पडिगाहित्तए [१]। वासावासं पज्जोसविअस्स चउ-

'सम्प्रमृज्य' वस्त्रखण्डेन रूषयित्वा स च यदि 'संस्तरेत्' निर्वहेत्तदा कल्पते तस्मिन् दिने तेनैव 'भक्तार्थेन' भोजनेन 'पर्युषितुं' स्थातुं। अथ च यदि न संस्तरेत्तर्हि निश्चयेन तस्य—एकान्तरितोपवासकारिणः साधोः कल्पते द्वितीयमपि वारं गाथापतिकुलं—गृहस्थगृहं भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा। २२—वर्षावासं पर्युषितस्य षष्ठभक्तिकस्य भिक्षोः कल्पेते द्वौ गोचरकालौ, अर्थाद्वारद्वयं गाथापतिकुलं भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा कल्पते। २३—वर्षावासं पर्युषितस्याष्टमभक्तिकस्य भिक्षोः कल्पन्ते त्रयो गोचरकालाः, त्रिवेलं गाथापतिकुलं भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा। २४—वर्षावासं पर्युषितस्य 'विकृष्टभक्तिकस्य' अष्टमादुपरितपःकारिणो भिक्षोः कल्पन्ते सर्वेऽपि गोचरकालाः, यदैवाहारेच्छा भवेत्तदैव गाथापतिकुलं भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा कल्पते। इत्यष्टमी सामाचारी ॥ अथ नवमीं पानकग्रहणसामाचारीं प्राह—

२५—वर्षावासं पर्युषितस्य नित्यभक्तिकस्य भिक्षोः कल्पन्ते 'सर्वाणि' × आचाराङ्गोक्तान्येकविंशतिरत्र वा

× इमानि तानि—"उस्सेइमं वा संसेइमं वा चाउलोदगं वा × × तिलोदगं वा तुसोदगं वा जवोदगं वा आयामं वा सोवीरं वा सुद्ध-

छट्ठभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तं जहा–ओसेइमं वा संसेइमं वा चाउलोदगं वा [२]। वासावासं पज्जोसवियस्स अट्ठमभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तं जहा–तिलोदगं वा तुसोदगं वा जवोदगं वा [३]। वासावासं पज्जोसवियस्स अट्ठमभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तं जहा–आयामं वा सोवीरं वा सुद्धवियडं वा [४]।

वक्ष्यमाणानि नव, पानकानि प्रतिग्रहीतुं [१]। वर्षावासं पर्युषितस्य चतुर्थभक्तिकस्य भिक्षोः कल्पन्ते त्रीणि पानकानि प्रतिग्रहीतुं, तद्यथा–'उत्स्वेदिमं' पिष्टजलं पिष्टभृतहस्तादिधावनजलं वा, संस्वेदिमं–संसेकिमं वा, यत्पर्णाद्युत्काल्य शीतोदकेन सिच्यते, 'चाउलोदकं' तण्डुलधावनजलं वा [२]। वर्षावासं पर्युषितस्य षष्ठभक्तिकस्य भिक्षोः कल्पन्ते त्रीणि पानकानि प्रतिग्रहीतुं, तद्यथा–'तिलोदकं' महाराष्ट्रादिषु लभ्यं निस्त्वचिततिलधावनजलं, यद्वा 'तुषोदकं' व्रीह्यादितुषधावनजलं, यद्वा 'यवोदकं' यवधावनं वा [३]। वर्षावासं पर्युषितस्याष्टमभक्तिकस्य भिक्षोः कल्पन्ते त्रीणि पानकानि × प्रतिग्रहीतुं, तद्यथा–अयामं–अवश्रावणं, सौवीरं–काञ्जिकं,

वियडं वा" [श्रु० २ अ० १ उ० ७] "अंबपाणगं वा अंबाडगपाणगं वा कविट्ठपा० माउलिंगपा० मुद्दियापा० दाडिमपा० खज्जूरपा० नालिएरपा० करीरपा० कोलपा० आमलगपा० चिंचापा०" [श्रु० २ अ० १ उ० ८] एतेषूत्स्वेदिमादिकानि नव स्वत्र व्याख्यास्यन्त एव, शेषाणामर्थः प्रतीत एव, नवरं–"अंबाडगपाणगं" अम्बाडिकायाः क्षेदनजलं, एवं "मुद्दिया" द्राक्षा, कोलानि–बदराणि, चिंचा–आम्लिका इति।

× ननु भक्तप्रत्याख्यातचतुर्थादिभक्तिकैरेकाशनेन वा भुक्त्वोत्थितानन्तरमप्युत्स्वेदिमादिकानि अशनाद्याहारमिश्रितानि पानकानि कथं पातव्यानि भवेयुरिति चेत्?, न, पानकस्य षडागाराणां तत्र गृहीतत्वात्। त्रिविधाहारप्रत्याख्यान एव तेषां ग्रहणार्हत्वमुक्तं शास्त्रकारैः, यदुक्तं–"× × जइ पुणो कुणइ। पोरिसि पुरिमेगासण–अभत्तट्ठे तिविह आहारे ॥ १५० ॥ तो पाणगमुद्दिसिउं, लेवाडेणेव-

 सामाचार्या नित्यभक्तिकादिग्राह्य-पानकानि त्रिविधाहारे साधूनामेव पानकाकारग्राह्यत्वं

शुद्धविकटं–उष्णोदकं वर्णान्तरादिप्राप्तं शुद्धजलं वा ×, केवलमुष्णोदकं तु "उसिणवियडे" इत्यनेनैवोक्तः [४]।

माइयं कुणइ। आगाराणं छक्कं, तत्थ य सुत्तं इमं भणियं ॥ १५१ ॥ लेवाडेण वा" इत्यादि प्रत्याख्यानस्वरूपे।

तत्रापि साधुभिरेव ग्राह्याणि, न पुनः श्राद्धैः, सर्वविरतित्वाभावात्तेषां। सर्वविरतीनामेव तद्ग्रहणेऽधिकारः, अनेकेषु शास्त्रेषु तथैव प्रतिपादितत्वात्तथाहि–"एए छ आगारा साहूणं, न पुण सड्ढाणं" इति बृहत्कल्पविशेषभाष्ये, तथा "एते पानकाकारा यतीनामेव, न तु श्राद्धानां, न खलु श्राद्धाः सर्वविरतयः" इति त्र्यशीत्यधिकैकादशशते वैक्रमाब्दे निर्मितायां प्रत्याख्यानभाष्य(सम्भवतो यशोदेवीयप्रत्याख्यानस्वरूप)वृ०।

अनेन नमस्कारसहितादिचतुर्विधाहारप्रत्याख्यानेऽप्येतेषामागाराणां ग्रहणमनुचितमेव। यदि चतुर्विधाहारप्रत्याख्यानेऽपि तेषामागाराणां ग्रहणं शास्त्राज्ञानुगतं स्यात्तदा कथं दिवसचरिमचतुर्विधाहारेऽपि तानि न गृह्यन्ते ?, न्यायस्योभयत्रापि समानत्वात्।

किञ्च–ये केचिद्दिवसचरिमत्रिविधाहारप्रत्याख्याने गृहस्थानां सचित्तजलपानमुपदिशन्ति ते सुविहितशास्त्रपरम्परोत्तीर्णवादिन एव, नहि सुविहितशास्त्रपरम्परया त्रिविधाहारप्रत्याख्याने सचित्तभक्षणं पानं वा कथमपि सिद्ध्यति। चेत् रात्रिके दिवसचरिमत्रिविधाहारप्रत्याख्याने सचित्तजलपानमयुक्तं न स्यात्तर्हि अभक्तार्थाचामाम्लनिर्विकृतिकैकासनैकस्थानप्रभृतिके दैवसिके त्रिविधाहारप्रत्याख्याने कथं तत्पानस्यायुक्तत्वं स्यात् ?, दैवसिकरात्रिकयोस्त्रिविधाहारप्रत्याख्यानयोरविशेषत्वात्, ततश्च सिद्धं–निशायां सचित्तजलपिपासुना दिवसचरिमे त्रिविधाहारं न प्रत्याख्येयं, किन्तु द्विविधाहारमेव, चेत्त्रिविधाहारं प्रत्याख्यायात्तर्हि न निशायां सचित्तजलं पिबेदिति राद्धान्तः।

× "शुद्धविकटं–प्रासुकमुदकं" इत्याचाराङ्गवृत्तौ श्रु० २ अ० १ उ० ७, "शुद्धविकटं–उष्णोदकं" इति च स्थानाङ्गवृत्तौ अ० ३ उ० ३। अनेन 'शुद्धविकटं–उष्णोदकं वर्णान्तरादिप्राप्तं शुद्धजलं वा' इति सन्देहविषौषधीनामकल्पवृत्तिगतस्य वैकल्पिकव्याख्यानस्याना-

गर्भापहारकल्पनं कल्पकिरणावलीकारस्य शक्रेण स्वश्रेयसे नैगमेषीद्वारा कारिते देवानन्दाकुक्षितस्त्रिशलाकुक्षौ गर्भतया सङ्क्रामणलक्षणे श्रीवीर-गर्भापहारे कल्याणकभूतत्वातिनिन्द्यत्वाशुभत्वादिवादवत्तिथिवृद्धौ च सम्पूर्णाहोरात्रभोग्यप्रथमतिथावपर्वत्वसङ्कल्पनात्मकपापोपदेशवच्चतु-र्दश्यादिक्षये त्रयोदश्यां, चतुर्दशीवृद्धावाद्यां चतुर्दशीं सम्पूर्णभोगां विहाय द्वितीयचतुर्दश्यां पूर्णिमाऽमावास्ययोश्च वृद्धौ ग्रहणान्वितयोराद्य-पूर्णिमाऽमावास्ययोः पाक्षिकादिप्रतिक्रमणवाङ्वचागमाभिप्रायानभिज्ञत्वव्यञ्जकमेव । नहि वर्णान्तरादिप्राप्तत्वेन प्रासुकत्वं प्रासुकत्वेन वा वर्णान्तरादिप्राप्तत्वं व्यभिचरति । किञ्च-चेदुष्णोदकपरमेव निश्चितं व्याख्यानं शुद्धविकटशब्दस्याभविष्यत्तर्हि विकृष्टभोजिप्रसङ्गे "उसिण वियडे" इति भिन्नं शब्दं कथं प्रायुङ्क्ष्यन् ? श्रीभद्रबाहुस्वामिपादाः । किञ्च-एवमागमसिद्धेष्वप्युत्स्वेदिमादुष्णावसानेषु पानीयेषु प्रत्याख्यान-भङ्गादिदोषमाविष्कृत्य केवलाप्कायारम्भनिष्पन्नं वर्णान्तरादिप्राप्तं शुद्धविकटं तिरस्कृत्य षट्कायोपमर्दनिष्पन्नमुष्णजलमेवोत्सर्गतः पिबन्तः पानीयाद्याग्रहस्याप्यदारसेऽन्यथ्यनुकम्पारहिता दीर्घसंसारिणोऽवगन्तव्याः । न चैवंविधस्य वर्णान्तरादिप्राप्तस्य शुद्धविकटस्याल्पकालीनत्वं प्रासुकत्वे शङ्कनीयं, उष्णोदकतुल्यमेव वर्णान्तरादिप्राप्तस्य शुद्धविकटस्यापि प्रासुकत्वकालमिति प्रवचनसारोद्धारवृत्त्यादावभिहितत्वात्तथाहि—

"जायइ सचित्तया से, गिम्हंमि पहरपंचगस्सुवरिं । चउपहरोवरि सिसिरे, वासासु पुणो तिपहरुवरिं ॥ ८८२ ॥"

वृत्तिः-'जायते' भवति सचित्तता "से"त्ति तस्य-उष्णोदकस्य प्रासुकजलस्य वा ग्लानाद्यर्थं धृतस्य 'ग्रीष्मे' उष्णकाले 'प्रहरपञ्चकस्योपरि' प्रहरपञ्चकादूर्ध्वं, कालस्यातिरूक्षत्वाच्चिरेणैव जीवसंसक्तिसद्भावात्, तथा 'शिशिरे' शीतकाले कालस्य स्निग्धत्वात्प्रहरचतुष्टयादूर्ध्वं सचित्तता भवति, 'वर्षासु' वर्षाकाले पुनः कालस्यातिस्निग्धत्वात्प्रासुकीभूतमपि जलं भूयः प्रहर-त्रयादूर्ध्वं सचित्ती भवति, तदूर्ध्वमपि यदि ध्रियते तदा क्षारः प्रक्षेपणीयो येन भूयः सचित्तं न भवतीति" सृतं प्रसङ्गेन ।

न चैतानि षष्ठाष्टमादिप्रायोग्यानि पानकानि तत्तत्तपश्चिकीर्षुभिराद्यएवोपवासे ग्राह्याणि भवन्ति, किन्तु यथा चतुर्थषष्ठाष्टमादिभक्तिकाय प्रोक्ता गोचरकालास्तत्तत्तपःपारणकदिन एव व्यवहर्त्तव्या भवन्ति तथा तत्तत्तपःप्रायोग्यानि पानकान्यपि तत्तत्तपःपूर्त्तिदिन एव ग्राह्याणि, न त्वर्वागेव। किमुक्तं भवति ?, प्रथम उपवासे चतुर्थप्रायोग्यानि द्वितीय उपवासे षष्ठप्रायोग्यानि तृतीय उपवासेऽष्टमप्रायोग्यानि पानकानि ग्रहीतव्यानि चतुर्थपञ्चमादिषु चोपवासेषु विकृष्टभक्तिकप्रायोग्यमेकमुष्णोदकं ग्रहीतव्यं, **"विकृष्टतपश्चाष्टमादारभ्य भवति"** इत्योघनिर्युक्तिवृत्तिपाठात्तत्र तत्रैव तत्तत्तपोव्यवहारस्य व्यवहरणार्हत्वात्।

ननु प्रथम एव घस्रे प्रत्याख्याते षष्ठाष्टमादिप्रत्याख्याने तत्र तत्तत्तपःप्रायोग्यानि पानकानि कथं न पातव्यानि भवेयुरिति चेत् ? न, प्रथम एव घस्रे षष्ठाष्टमादिप्रत्याख्यानकरणस्यैवानागमिकत्वात्। हारिभद्रीयावश्यकवृत्तिचूर्णि-प्रवचनसारोद्धारवृत्ति-पञ्चाशकवृत्ति-यशोदेवीय-प्रत्याख्यानस्वरूपप्रभृतिषु सर्वमान्यप्राचीनशास्त्रेषु यत्र क्वापि प्रत्याख्याननिरूपणमुपलभ्यते तत्र सर्वत्र **"सूरे उग्गए अभत्तट्ठं पच्चक्खामि"** इत्याद्येवोपलभ्यते, नहि क्वापि **"चउत्थभत्तं-छट्ठभत्तं-अट्ठमभत्तं"** इत्यादि।

अन्यच्च युगपत्षष्ठाष्टमादिप्रत्याख्याते प्रथमेऽह्नि चतुर्विधाहारस्य तदन्यदिनेषु च त्रिविधाहारस्य परिहारं चिकीर्षोः षष्ठाष्टमादियुगपत्प्रत्याख्यातुराद्य एव दिने कथं प्रत्याख्यानं भवेत् ?, तथा षष्ठाष्टमादियुगपत्प्रत्याख्यातोपासकः षाण्मासिकतपश्चिन्तनावसरे प्रथमेऽह्नि षष्ठमष्टमं वा कर्तुं शक्नोमीत्युक्तौ सत्यां द्वितीयतृतीयाद्यह्नि किं तपः कर्त्तुं शक्नोमीति ब्रूयात् ?।

किञ्चैवं युगपत्षष्ठाष्टमादिप्रत्याख्याने कोटिसहितप्रत्याख्यानमपि नाराधितं भवति, द्वितीयतृतीयाद्येषु दिनेषु प्राक्तनस्य द्वित्रादिदिनावधिना गृहीतस्य प्रत्याख्यानस्यासमापनादग्रेतनस्यान्यस्यानारम्भणाच्च। अभक्तार्थाचाम्लनिर्विकृतिकैकासनैकस्थानान्यतरैः सदृशैर्विसदृशैश्चाप्यहोरात्रिकैरेव

वासावासं पज्जो० निगिट्ठभत्तिअस्स भिक्खुस्स कप्पइ एगे उसिणवियडे पडिगाहित्तए, से वि य णं असित्थे नो वि य णंससित्थे [५]। वासावासं पज्जोसवियस्स भत्तपडियाइक्खियस्स भिक्खुस्स कप्पइ एगे उसिणवियडे पडिगाहित्तए, से वि य णं असित्थे नो चेव णं ससित्थे, से वि य णं परिपूए नो चेव णं अपरिपूए, से वि य णं परिमिए नो चेव णं अपरिमिए, से वि य णं बहुसंपन्ने नो चेव णं अबहुसंपन्ने [६]॥२५॥ (९)।

वर्षावासं पर्युषितस्य 'विकृष्टभक्तिकस्य' अष्टमादुपरि तपःकारिणो भिक्षोः कल्पते एकं 'उष्णविकटं' उत्कालितजलं प्रतिग्रहीतुं, तदप्यसिक्थं—धान्यकणरहितं, नापि च ससिक्थं [५]। वर्षावासं पर्युषितस्य 'भक्तप्रत्याख्यानिनः' कृतानशनिनो भिक्षोः कल्पते एकमुष्णविकटं प्रतिग्रहीतुं, तदप्यसिक्थं नैव ससिक्थं, तदपि 'परिपूतं' वस्त्रगलितं नैवापरिपूतं, तृणादेर्गले लगनात्, तदपि 'परिमितं' मानोपेतं नैवापरिमितं, अजीर्णादिहेतुत्वात्, तदपि 'बहुसम्पन्नं' किञ्चिन्न्यूनं नैव 'अबहुसम्पन्नं' अतिन्यूनं, तृषाया अनुपशमात्। इति नवमी सामाचारी ॥

प्रत्याख्यानेष्वपि कोटिसहितं प्रत्याख्यानं, न पुनः केवलैर्दैवसिकै रात्रिकैर्वा, तथैव हारिभद्रीयावश्यकवृत्त्यादिष्वभिहितत्वात्तथाहि—

"पट्ठवणओ अ दिवसो, पच्चक्खाणस्स निट्ठवणओ अ। जहियं समिंति दुन्नि वि, तं भण्णइ कोडिसहियं तु ॥ १५७० ॥"

व्याख्या—'प्रस्थापकश्च' प्रारम्भकश्च दिवसः प्रत्याख्यानस्य 'निष्ठापकश्च' समाप्तिदिवसश्च यत्र प्रत्याख्याने "समिंति" त्ति मिलतो द्वावपि पर्यन्तौ, तद्भण्यते कोटिसहितमिति गाथासमासार्थः ॥१५७०॥ भावत्थो पुण जत्थ पच्चक्खाणस्स कोणो कोणो य मिलति, कथं ?, गोसे आवस्सए अभत्तट्ठो गहितो, अहोरत्तं अच्छिऊण पच्छा पुणरवि अभत्तट्ठं करेति, बितियस्स पट्ठवणा

१—भावार्थः पुनर्यत्र प्रत्याख्यानस्य कोणः कोणश्च मिलति, कथं ?, प्रत्यूषे आवश्यकेऽभक्तार्थो गृहीतः, अहोरात्रं स्थित्वा पश्चात्पुनरप्यभक्तार्थं करोति, द्वितीयस्य प्रस्थापना

वासावासं पज्जो० संखादत्तियस्स भिक्खुस्स कप्पंति पंच दत्तीओ भोअणस्स पडिगाहित्तए पंच पाणगस्स, अहवा चत्तारि भोअणस्स पंच पाणगस्स, अहवा पंच भोअणस्स चत्तारि पाणगस्स। तत्थ णं एगा दत्ती लोणासायणमित्तमवि पडिगाहिआ सिया, कप्पइ से तद्दिवसं तेणेव भत्तट्ठेणं पज्जोसवित्तए, नो से कप्पइ दुच्चंपि गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥२६॥ (१०)।

अथ दत्तिसङ्ख्यारूपां दशमीं सामाचारीं प्राह—

२६–वर्षावासं पर्युषितस्य 'सङ्ख्यादत्तिकस्य' दत्तिसङ्ख्याकारिणो भिक्षोः कल्पन्ते पञ्च दत्तयो भोजनस्य प्रतिग्रहीतुं पञ्च पानकस्य, अथवा चतस्रो भोजनस्य पञ्च पानकस्य, अथवा पञ्च भोजनस्य चतस्रः पानकस्य। अत्र पञ्चादिकमुपलक्षणं, तेन यथाऽभिग्रहं न्यूनाऽधिका वा वाच्या। तत्र एका दत्तिर्लवणास्वादनमात्रमपि प्रतिगृहीता स्यात्, लवणं किल स्तोकमेव दीयते, तावन्मात्रेऽपि भक्तादौ गृहीते एका दत्तिर्भवतीति भावः। कल्पते तस्य तस्मिन्दिने तेनैव 'भक्तार्थेन' भोजनेन 'पर्युषितुं' स्थातुं, न तस्य कल्पते द्वितीयमपि वारं 'गाथापतिकुलं' गृहस्थगृहं भक्ताय वा पानाय वा निष्क्रमितुं वा प्रवेष्टुं वा, अवशिष्टा दत्तयः पानकस्य भोजने

पढमस्स निट्ठवणा, एते दोवि कोणा एगट्ठा मिलिता। अट्ठमादिसु दुहतो कोडिसहितं, जो चरिमदिवसो तस्स वि एगा कोडी। एवं आयंबिलनिव्वीतियएगासणा एगट्ठाणगाणि वि। अथवा इमो अण्णो विही—अभत्तट्ठं कतं आयंबिलेण पारितं, पुणरवि अभत्तट्ठं करेति आयंबिलं च। एवं एगासणादीहि वि संजोगो कातव्वो, णिव्वीतिगादिसु सव्वेसु सरिसेसु विसरिसेसु य''इत्यलम्।

प्रथमस्य निष्ठापना, एतौ द्वावपि कोणावेकत्र मिलितौ। अष्टमादिषु द्विघातः कोटिसहितं, यश्चरमदिवसस्तस्याप्येका कोटी, एवमाचाम्लनिर्विकृतिकैकासनैकस्थानान्यपि। अथवाऽयमन्यो विधिः—अभक्तार्थं कृत आचाम्लेन पारयति, पुनरप्यभक्तार्थं करोति आचाम्लं च। एवं एकासनादिभिरपि संयोगः कर्त्तव्यः, निर्विकृतिकादिषु सर्वेषु सदृशेषु विसदृशेषु च।

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा जाव उवस्सयाओ सत्तघरंतरं संखडिं संनियट्टचारिस्स इत्तए। एगे पुण एवमाहंसु–नो कप्पइ जाव उवस्सयाओ परेणं सत्तघरंतरं संखडिं संनियट्टचारिस्स इत्तए। एगे पुण एवमाहंसु–नो कप्पइ जाव उवस्सयाओ परंपरेणं संखडिं संनियट्टचारिस्स इत्तए ॥ २७ ॥ (११)।

---

भोजनस्य वा पानके क्षेप्तुं न कल्पत इत्यर्थः। इति दशमी सामाचारी ॥

अथ सङ्खडिगमननिषेधलक्षणामेकादशीं सामाचारीं प्राह—

२७–वर्षावासं पर्युषितानां नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यावदुपाश्रयात् 'ससगृहान्तरं' ससगृहमध्ये 'संस्कृतिं' भोजनपाकलक्षणां–बहुजनजेमनवाररूपां 'एतुं' गन्तुं। भिक्षार्थं तत्र गन्तुं न कल्पत इति भावः। कीदृशानां साधूनां न कल्पते? 'सन्निवृत्तचारिणां' निषिद्धगृहेभ्यः सम्यङ्निवृत्ताः सन्तश्चरन्ति ये ते तथा, तेषां। अत्र बहुत्वे एकत्वमार्षत्वात्। बहवस्त्वेवं व्याचक्षते–यत्सोपाश्रये ससगृहमध्ये जेमनवारे भिक्षार्थं गन्तुं न कल्पते। 'एके' केचिदाचार्या एवमाहुः–नो कल्पते यावदुपाश्रयात्परतः ससगृहान्तरे जेमनवारे सन्निवृत्तचारिणां भिक्षार्थं गन्तुं। एके पुनरेवमाहुः–न कल्पते यावदुपाश्रयात् 'परम्परया' एकं गृहं मुक्त्वा ससगृहमध्ये जेमनवारे सन्निवृत्तचारिणां 'एतुं' गन्तुं। अत्राद्येन मतेन सोपाश्रये, द्वितीयेन मतेन उपाश्रयात्परतः, तृतीयेन मतेन उपाश्रयं परतोऽपि नैकं गृहं मुक्त्वा ससगृहे, अर्थात्सोपाश्रयेषु ससस्वष्टसु नवसु वा गृहेषु जेमनवारे सुविहितैर्भिक्षार्थं न गन्तव्यं, तेषां सन्निहितत्वेन साधुगुणहृतहृदयतया उद्गमादिदोषसम्भवत्वात्। इत्येकादशमी सामाचारी ॥

वासावासं पज्जोसवियस्स नो कप्पइ पाणिपडिग्गहियस्स भिक्खुस्स कणगफुसियमित्तमवि वुट्ठिकायंसि निवयमाणंसि गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए पविसित्तए वा ॥ २८ ॥ वासावासं पज्जो० पाणिपडिग्गहियस्स भिक्खुस्स नो कप्पइ अगिहंसि पिंडवायं पडिगाहित्ता पज्जोसवित्तए। पज्जोसवेमाणस्स सहसा वुट्ठिकाए निवइज्जा, देसं भुच्चा देसमादाय, से पाणिणा पाणिं परिपिहित्ता उरंसि वा णं निलिज्जिज्जा, कक्खंसि वा णं समाहडिज्जा, अहाछन्नाणि वा लेणाणि वा उवागच्छिज्जा, रुक्खमूलाणि वा उवा-

---

अथ वृष्टौ पतत्यां जिनकल्पिकानां आहारग्रहणविधिरूपां द्वादशमीं सामाचारीमाह—

२८—वर्षावासं पर्युषितस्य नो कल्पते (पाणि–र्हस्तः, स एव पतद्ग्रहः–पात्रं यस्यासौ पाणिपतद्ग्रहिकस्तस्य) 'पाणिपतद्ग्रहिकस्य' जिनकल्पिकस्य भिक्षोः "कणगफुसिअमित्तं"ति फुसारमात्रेऽपि सूक्ष्मे वृष्टिकाये निपतति सति 'गाथापतिकुलं' गृहस्थगृहं भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा। २९—वर्षावासं पर्युषितस्य पाणिपतद्ग्रहिकस्य भिक्षोर्नो कल्पते 'अगृहे' अनाच्छादिते आकाशे 'पिण्डपातं' आहारं 'प्रतिगृह्य' गृहीत्वा 'पर्युषितुं' आहारकरणाय स्थातुं। यदि चेदनाच्छादिते स्थाने 'पर्युषतः' तिष्ठतः कदाचिदर्द्धभुक्ते सहसा वृष्टिकायो निपतेत्तदा पिण्डपातस्य देशं भुक्त्वा देशमादाय च स जिनकल्पिकः 'पाणिना' अन्येन हस्तेन 'पाणिं' गृहीताहारं हस्तं 'परिपिधाय' आच्छाद्य 'उरसि' हृदयाग्रे वा 'निलीयेत्' स्थापयेत्, कक्षायां वा 'समाहरेत्' गुप्तं कुर्यात्, एवं च कृत्वा 'यथाछन्नानि' गृहिभिः स्वनिमित्तमाच्छादितानि यानि 'लयनानि' गृहाणि, तत्रोपागच्छेत्, स्वभावतश्छन्नानि वा यानि वृक्षमूलानि तत्रोपागच्छेत्। यथा तस्य जिनकल्पिकस्य 'पाणौ' आहारान्विते हस्ते

गच्छित्तए । जत्थ से पाणिंसि दए वा दगरए वा दगफुसिआ वा नो परिआवज्जइ ॥२९॥ वासावासं पज्जो० पाणिपडिग्गहियस्स भिक्खुस्स नं किंचि कणगफुसियमित्तं पि निवडति, नो से कप्पइ गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥३०॥ (१२)।

वासावासं पज्जोसवियस्स पडिग्गहधारिस्स भिक्खुस्स नो कप्पइ वग्घारियवुट्ठिकायंसि गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा । कप्पइ से अप्पवुट्ठिकायंसि संतरुत्तरंसि गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए

---

'दकं वा' स्थूलो जलबिन्दवो 'दकरजो वा' सूक्ष्मा जलबिन्दवो "दगफुसिअ"त्ति अवश्यायादिकं फुसारमात्र-मप्कायं नो 'पर्यापद्यते' विराध्यते। ३०-अत एव वर्षावासं पर्युषितस्य पाणिपतद्ग्रहिकस्य भिक्षोर्यत्कि-ञ्चित्फुसारमात्रमपि यदि वृष्टिकायं निपतति तर्हि तस्य नो कल्पते गाथापतिकुलं प्रति भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा। इति द्वादशी सामाचारी ॥

अथ पतद्ग्रहधारिण आहारग्रहणादिविधिरूपां त्रयोदशीं सामाचारीमाह—

३१-वर्षावासं पर्युषितस्य 'पतद्ग्रहधारिणः' पात्रधारिस्थविरकल्पिकस्य भिक्षोर्नो कल्पते व्याघारितवृष्टि-काये-सर्वत्र व्यासाविच्छिन्नधाराभिः पतत्यां वर्षायां, यस्यां वर्षाकल्पो नीव्रं वा श्रवति कल्पं वा भित्त्वाऽन्तर्देह-मार्द्रयति, तस्यां गाथापतिकुलं भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा। एष उत्सर्गः, अपवादे पुनः कल्पते तस्य-स्थविरकल्पिकस्य अल्पवृष्टिकाये 'सान्तरोत्तरे' अन्तरेणान्तरेण वर्षति सति, यद्वा आन्तरः-सौत्रः कल्पः। उत्तरः-और्णिकस्ताभ्यां सहितस्य-प्रावृतस्य भिक्षोर्गाथापतिकुलं भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा,

वा ॥ ३१ ॥ (ग्रं० ११००) वासावासं पज्जोसविअस्स निग्गंथस्स निग्गंथीए वा गाहावइकुलं पिंडवायपडियाए अणुप्पविट्ठस्स निगिज्झिय २ वुट्ठिकाए निवइज्जा, कप्पइ से अहे आरामंसि वा, अहे उवस्सयंसि वा, अहे वियडगिहंसि वा, अहे रुक्खमूलंसि वा उवागच्छित्तए ॥ ३२ ॥ तत्थ से पुव्वागमणेणं पुव्वाउत्ते चाउलोदणे पच्छाउत्ते भिलिंगसूवे, कप्पइ से चाउलोदणे पडिगाहित्तए, नो से कप्पइ भिलिंगसूवे पडिगाहित्तए ॥ ३३ ॥ तत्थ से पुव्वागमणेणं पुव्वाउत्ते भिलिंगसूवे पच्छाउत्ते चाउलोदणे, कप्पइ से भिलिंगसूवे पडिगाहित्तए, नो से कप्पइ चाउलोदणे पडिगाहित्तए ॥ ३४ ॥ तत्थ से पुव्वागमणेणं दो वि पुव्वाउत्ताइं, कप्पंति से दो वि पडिगाहित्तए। तत्थ से पुव्वागमणेणं

---

३२–वर्षावासं पर्युषितस्य निर्ग्रन्थस्य निर्ग्रन्थ्या वा गाथापतिकुलं 'पिण्डपातो' भिक्षालाभस्तत्प्रतिज्ञया–'अत्राहं लप्स्ये' इति बुद्ध्या 'अनुप्रविष्टस्य' भिक्षार्थं गतस्य "निगिज्झिय २"त्ति स्थित्वा स्थित्वा वृष्टिकायो निपतेत्तदा कल्पते तस्य साधोः साध्व्या वा "अहे"त्ति वाक्यालङ्कारे, आरामे वा, स्वसाम्भोगिकानां इतरेषां वोपाश्रये वा, विकटगृहे–आस्थानमण्डपिकायां वा, यत्र ग्राम्यपर्षद उपविशन्ति तत्र, निर्गलकरीरादिवृक्षमूले वा उपागन्तुं, तत्रस्थो हि वेलां वृष्टेः स्थितास्थितस्वरूपं च जानाति जनानां च अशङ्कनीयः स्यात्। ३३–तत्रारामादौ स्थितस्य तस्य साधोः साध्व्याश्च 'पूर्वागमनेन' आगमनात्पूर्वं, यद्वा पूर्वं साधुरागतः पश्चादायको राद्धुं प्रवृत्त इति पूर्वागमनेन हेतुना 'पूर्वायुक्तः' प्राक्पक्तुमारब्धश्चाउलोदनः पश्चादायुक्तः–पश्चात्पक्तुमारब्धो 'भिलिङ्गसूपो' मसूरदालिप्रभृतिस्तदा कल्पते तस्य साधोश्चाउलोदनं प्रतिग्रहीतुं, न तस्य कल्पते भिलिङ्गसूपः प्रतिग्रहीतुं। ३४–अथ तत्र साधोः पूर्वागमनेन पूर्वायुक्तो भिलिङ्गसूपः–मसूरदाल्यादिः पश्चादायुक्तश्चाउलोदनस्तर्हि कल्पते तस्य साधोर्भिलिङ्गसूपः प्रतिग्रहीतुं, न तस्य कल्पते चाउलोदनः प्रतिग्रहीतुं। ३५–अथ तत्र साधोः

ओ ति पच्छाउत्ताइं, एवं नो से कप्पंति दो वि पडिगाहित्तए। जे से तत्थ पुव्वागमणेणं पुव्वाउत्ते, से कप्पइ पडिगाहित्तए। जे से तत्थ पुव्वागमणेणं पच्छाउत्ते, नो से कप्पइ पडिगाहित्तए ॥ ३५॥ वासावासं पज्जो० निग्गंथस्स निग्गंथीए वा गाहावइकुलं पिंडवायपडियाए अणुपविट्ठस्स निगिज्झिय २ वुट्ठिकाए निवइज्जा, कप्पइ से अहे आरामंसि वा अहे उवस्सयंसि वा अहे वियडगिहंसि वा अहे रुक्खमूलंसि वा उवागच्छित्तए, नो से कप्पइ पुव्वगहिएणं भत्तपाणेणं वेलं उवायणावित्तए, कप्पइ से पुव्वामेव वियडगं भुच्चा पिच्चा पडिग्गहगं संलिहिय २

---

तर्हि कल्पते तस्य द्वावपि प्रतिग्रहीतुं। अथ तत्र साधोः पूर्वागमनेन यदि पूर्वागमनेन यदि द्वावपि पूर्वायुक्तौ, तर्हि कल्पते तस्य द्वावपि प्रतिग्रहीतुं। इदमत्र तात्पर्यं–यत्तस्य साधोस्तत्र पूर्वा- द्वावपि पश्चादायुक्तौ, एवं सति नो तस्य कल्पते द्वावपि प्रतिग्रहीतुं। इदमत्र तात्पर्यं–यत्तस्य साधोस्तत्र पूर्वा- गमनेन पूर्वायुक्तं तत्तस्य कल्पते प्रतिग्रहीतुं, यत्तस्य तत्र पूर्वागमनेन पश्चादायुक्तं नो तत्तस्य कल्पते प्रतिग्रहीतुं, उद्गमादिदोषसम्भवात्। ३६–वर्षावासं पर्युषितस्य निर्ग्रन्थस्य निर्ग्रन्थ्या वा गाथापतिकुलं–गृहस्थगृहं पिण्ड- पातप्रतिज्ञयाऽनुप्रविष्टस्य–गतस्य 'निगृह्य २' स्थित्वा स्थित्वा यदि वृष्टिकायो निपतेत्तदा कल्पते तस्य आरामे वा उपाश्रये वा विकटगृहे वा वृक्षमूले वोपागन्तुम्। तत्रारामादौ स्थितस्य नो तस्य कल्पते पूर्वगृहीतेन भक्त- पानेन वेलां अतिक्रमयितुं, किमुक्तं भवति ?, वृष्टिकारणेनारामादौ स्थितः साधुर्यदि च वर्षं नैवोपरमति तदा कल्पते तस्य साधोः साध्व्या वा 'पूर्वमेव' सूर्यास्तमनादर्वागेव 'विकटं' उद्गमादिदोषशुद्धं आहारादिकं भुक्त्वा पीत्वा च पतद्ग्रहकं 'संलिह्य' प्रक्षाल्य 'सम्प्रमृज्य' लूषयित्वा एकत्र 'आयतं' सुबद्धं 'भाण्डकं' पात्राद्युपकरण- जातं कृत्वा वपुषा सह प्रावृत्य वर्षत्यपि मेघे 'सावशेषे' अनस्तमिते सूर्ये यत्रैवोपाश्रयः स्वस्य, तत्रैवोपागन्तुं,

संपमज्जिय २ एगायर्य भंडगं कट्टु सावसेसे सूरे जेणेव उवस्सए तेणेव उवागच्छित्तए, नो से कप्पइ तं रयणिं तत्थेव उवायणावित्तए ३६
वासावासं पज्जोसवियस्स निग्गंथस्स निग्गंथीए वा गाहावइकुलं पिंडवायपडियाए अणुप्पविट्ठस्स निगिज्झिय २ वुट्ठिकाए निवइज्जा, कप्पइ से अहे आरामंसि वा अहे उवस्सयंसि वा अहे वियडगिहंसि वा अहे रुक्खमूलंसि वा उवागच्छित्तए ॥ ३७ ॥ तत्थ नो कप्पइ एगस्स निग्गंथस्स एगाए य निग्गंथीए एगओ चिट्ठित्तए १, तत्थ नो कप्पइ एगस्स निग्गंथस्स दुण्हं निग्गंथीणं एगओ चिट्ठित्तए २, तत्थ नो कप्पइ दुण्हं निग्गंथाणं एगाए य निग्गंथीए एगओ चिट्ठित्तए ३, तत्थ नो कप्पइ दुण्हं निग्गंथाणं दुण्हं निग्गंथीण य एगओ चिट्ठित्तए ४। अत्थि य इत्थ केइ पंचमे खुड्डए वा खुड्डिया वा अन्नेसिं वा संलोए सपडिदुवारे, एवं ण्हं कप्पइ एगओ चिट्ठित्तए ॥ ३८ ॥

---

न तस्यैकाकिनो कल्पते तां रात्रिं तत्रैवारामादावतिक्रमयितुं। किं कारणं ?, एकाकिनो हि बहिर्वसतः साधोः स्वपरसमुत्था अनेके दोषाः सम्भवेयुः, साधवो वा वसतिस्था अधृतिं कुर्युरिति।

३७–वर्षावासं पर्युषितस्य निर्ग्रन्थस्य निर्ग्रन्थ्या वा गाथापतिकुलं पिण्डपातप्रतिज्ञयाऽनुप्रविष्टस्य निगृह्य २ वृष्टिकायो निपतेत्तदा कल्पते तस्य–साधोः साध्व्या वा "अहे" इत्यलङ्कारे, आरामे वा उपाश्रये वा 'विकटगृहे' आस्थानमण्डपादौ वा वृक्षमूले वोपागन्तुं। ३८–तत्रारामादौ नो कल्पते एकस्य निर्ग्रन्थस्य एकस्याश्च निर्ग्रन्थ्या एकत्र स्थातुं १, तत्र नो कल्पते एकस्य निर्ग्रन्थस्य द्वयोर्निर्ग्रन्थ्योरेकत्र स्थातुं २, तत्र नो कल्पते द्वयोर्निर्ग्रन्थयोरेकस्याश्च निर्ग्रन्थ्या एकत्र स्थातुं ३, तत्र नो कल्पते द्वयोर्निर्ग्रन्थयोर्द्वयोर्निर्ग्रन्थ्योश्च एकत्र स्थातुं ४। अस्ति चात्र कोऽपि पञ्चमः क्षुल्लको वा साधुषु क्षुल्लिका वा साध्वीषु अन्येषां वा 'संलोकः' दृष्टिपथः 'सप्रतिद्वारः' बहुद्वारयुतं स्थानं, "ण्हं" इत्यलङ्कारे, एवं यदि भवेत्तदा कल्पते एकत्र स्थातुं। किमुक्तं ?, साधुर्ह्यात्मना द्वितीयः साध्व्य-

वासावासं पज्जोसवियस्स निग्गंथस्स गाहावइकुलं पिंडवायपडियाए अणुप्पविट्ठस्स निगिज्झिय २ वुट्ठिकाए निवएज्जा, कप्पइ से अहे आरामंसि वा अहे उवस्सयंसि वा अहे वियडगिहंसि वा अहे रुक्खमूलंसि वा उवागच्छित्तए, तत्थ नो कप्पइ एगस्स निग्गंथस्स एगाए य अगारीए एगओ चिट्ठित्तए, एवं चउभंगी। अत्थि णं इत्थ केइ पंचमए थेरे वा थेरिया वा, अन्नेसिं वा संलोए सपडिदुवारे, एवं कप्पइ एगओ चिट्ठित्तए। एवं चेव निग्गंथीए अगारिस्स य भाणियव्वं ॥ ३९ ॥ (१३)।

---

त्यादय एव यत्र कुत्राप्युत्सर्गतो व्रजन्ति, परमपवादतश्चेदेकादयो व्रजन्ति तदा एकेन साधुना एकया साध्व्या द्वाभ्यां वा साध्वीभ्यां सह तथा द्वाभ्यां साधुभ्यां द्वाभ्यां साध्वीभ्यामेकया वा साध्व्या सह न स्थातव्यमेकत्र, किन्तु यदि कोऽपि पञ्चमः क्षुल्लकः क्षुल्लिका वा साक्षिभूतः स्यात्तदा, यद्वा लोहकारादीनां वर्पत्यप्यमुक्तस्वकर्मणां दृष्टिपथे, तत्रापि सर्वतो द्वारे सर्वगृहाणां वाऽभिमुखे द्वारे सति पञ्चमाभावेऽपि स्थातुं कल्पते, अन्यथा शङ्कादिदोषसद्भावेन प्रवचनविराधनासम्भव इति। ३९—वर्षावासं पर्युषितस्य निर्ग्रन्थस्य गाथापतिकुलं पिण्डपातप्रतिज्ञयाऽनुप्रविष्टस्य निगृह्य २ वृष्टिकायो निपतेत्तदा कल्पते तस्य आरामे वा उपाश्रये वा विकटगृहे वा वृक्षमूले वोपागन्तुं, तत्र न कल्पते एकस्य निर्ग्रन्थस्य एकस्याश्च 'अगार्याः' श्राविकाया एकत्र स्थातुं, एवं—यथा साधुसाध्वीनां तथाऽत्रापि चतुर्भङ्गी ज्ञेया। अस्त्यत्र कोऽपि पञ्चमकः स्थविरो वा स्थविरा वा साक्षिभूतो यद्वा अन्येषां 'संलोकः' दृष्टिपथः 'सप्रतिद्वारः' सर्वतो द्वाराणि वा, एवं सति कल्पते एकत्र स्थातुं। एवं चैव निर्ग्रन्थ्या अगारिणश्च भणितव्यम्। इति त्रयोदशी सामाचारी ॥

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा अपरिण्णएणं अपरिण्णयस्स अट्ठाए असणं वा पाणं वा खाइमं वा साइमं वा जाव पडिगाहित्तए ॥ ४० ॥ से किमाहु ? भंते !, इच्छा परो अपरिण्णए भुंजिज्जा, इच्छा परो न भुंजिज्जा ॥ ४१ ॥ (१४) ।

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा उदउल्लेण वा ससिणिद्धेण वा काएणं असणं वा पाणं वा खाइमं

---

अथ अपरिज्ञप्तार्थमशनाद्यानयननिषेधलक्षणां चतुर्दशीं सामाचारीमाह—

४०–वर्षावासं पर्युषितानां नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'अपरिज्ञप्तेन' त्वं मम निमित्तमशनादिकमानयेरित्यभणितेन साधुना 'अपरिज्ञप्तस्य' अहं त्वद्योग्यमशनादिकमानयिष्ये इत्यभणितस्य साध्वादे'रर्थं' निमित्तमशनं वा पानं वा खादिमं वा स्वादिमं वा यावत्प्रतिग्रहीतुं । ४१–तत् किमाहुरत्र कारणं तीर्थङ्करा भदन्त ! इति शिष्यप्रश्ने गुरुः प्राह–इच्छा चेद्भवेत्तदा परोऽपरिज्ञप्तः साधुस्तदर्थमानीतमाहारं भुञ्जीत, इच्छा चेन्न भवेत्तदा न भुञ्जीत, प्रत्युतैवं वदति, यदुत–केनोक्तमासीत् ? यत्त्वयाऽऽनीतं । किञ्च–अनिच्छन्नपि दाक्षिण्यतश्चेद्भुञ्जेत्तदाऽजीर्णादिना पीडितो भवेत्, परिष्ठापने च वर्षासु स्थण्डिलदौर्लभ्यात्संयमविराधना स्यात्, तस्मात्परिज्ञाप्यैवानेयम् । इति चतुर्दशी सामाचारी ॥

अथ आर्द्रदेहेनाहाराभ्यवहरणनिषेधात्मिकां पञ्चदशीं सामाचारीं प्राह—

४२–वर्षावासं पर्युषितानां नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'उदकार्द्रेण' गलज्जलबिन्दुयुतेन वा 'सस्निग्धेन' ईषज्जलबिन्दुयुतेन वा कायेन अशनं वा पानं वा खादिमं वा स्वादिमं वा आहारयितुं ।

वा साइमं वा आहारित्तए ॥४२॥ से किमाहु ? भंते !, सत्तसिणेहाययणा पण्णत्ता, तं जहा-पाणी १, पाणिलेहा २, नहा ३, नहसिहा ४, भमुहा ५, अहरोट्ठा ६, उत्तरोट्ठा ७। अह पुण एवं जाणिज्जा-विगओदगे मे काए, छिन्नसिणेहे, एवं से कप्पइ असणं वा०४ आहारित्तए ॥४३॥(१५)।

वासावासं पज्जोसवियाणं इह खलु निग्गंथाण वा निग्गंथीण वा इमाइं अट्ठ सुहुमाइं, जाइं छउमत्थेणं निग्गंथेण वा निग्गंथीए वा अभिक्खणं २ जाणियव्वाइं पासियव्वाइं पडिलेहियव्वाइं भवंति। तं जहा-पाणसुहुमं १, पणगसुहुमं २, बीअसुहुमं ३, हरियसुहुमं ४, पुप्फ-

---

४३-तत्किमाहुरत्र कारणं ? तीर्थङ्करादयो भदन्त ! इति प्रश्ने उत्तरमाह-सप्तसङ्ख्याकानि 'स्नेहायतनानि' जलावस्थानस्थानानि प्रज्ञप्तानि जिनैः, तद्यथा-पाणी १, पाणिरेखाः २, नखाः ३, नखशिखाः ४ प्रतीताः, "भमुहा" इति भ्रूः-नेत्रोर्द्धरोमाणि (भौंपण इति लोके) ५, "अहरोट्ठा" अधरौष्ठा दाढिका वा ६, "उत्तरोट्ठा" उत्तरौष्ठाः-उपरितना ओष्ठाः श्मश्रूणि वा ७। एतेषु स्थानेषु जलं चिरेण शुष्यति। अथ पुनरेवं जानीयात्-विगतोदको मम कायः 'छिन्नस्नेहः' सर्वथा निर्जलो जातः, एवं सति तस्य कल्पतेऽशनादिकमाहारयितुम्। इति पञ्चदशी सामाचारी ॥

अथ सूक्ष्माष्टकयतनास्वरूपप्रतिपादिकां षोडशीं सामाचारीमाह—

४४-वर्षावासं पर्युषितानामिह प्रवचने खलु निर्ग्रन्थानां वा निर्ग्रन्थीनां वा इमानि अष्टौ सूक्ष्माणि, यानि छद्मस्थेन निर्ग्रन्थेन वा निर्ग्रन्थ्या वा 'अभीक्ष्णं २' वारंवारं, यत्र यत्र स्थाननिषीदनादिकं करोति तत्र तत्र ज्ञातव्यानि सूत्रोपदेशेन, द्रष्टव्यानि चक्षुषा, ज्ञात्वा दृष्ट्वा च 'प्रतिलेखितव्यानि' परिहरणीयतया विचारणीयानि भवन्ति। तद्यथा-'प्राणसूक्ष्मं' सूक्ष्माः प्राणाः कुन्थ्वादयो द्वीन्द्रियादयश्च १, 'पनकसूक्ष्मं' सूक्ष्मः पनकः-

सुहुमे ५, अंडसुहुमं ६, लेणसुहुमं ७, सिणेहसुहुमं ८ ॥४४॥ से किं तं पाणसुहुमे ?, पाणसुहुमे पंचविहे पण्णत्ते, तं जहा-किण्हे १, नीले २, लोहिए ३, हालिद्दे ४, सुक्किल्ले ५। अत्थि कुंथु अणुद्धरी नामं, जा ठिया अचलमाणा छउमत्थाणं निग्गंथाण वा निग्गंथीण वा नो चक्खुफासं हव्वमागच्छइ। जा अट्ठिया चलमाणा छउमत्थाणं निग्गंथाण वा निग्गंथीण वा चक्खुफासं हव्वमागच्छइ। जा छउमत्थेणं निग्गंथेण वा निग्गंथीए वा अभिक्खणं २ जाणियव्वा पासियव्वा पडिलेहियव्वा हवइ, से तं पाणसुहुमे १। से किं तं पणगसुहुमे ?, पणगसुहुमे पंचविहे पण्णत्ते, तं जहा-किण्हे १, नीले २, लोहिए ३, हालिद्दे ४, सुक्किल्ले ५। अत्थि पणगसुहुमे तद्दव्वसमाणवण्णे नामं पण्णत्ते,

---

फुल्ली २, 'बीजसूक्ष्मं' सूक्ष्माणि बीजानि ३, 'हरितसूक्ष्मं' सूक्ष्माणि हरितानि ४, 'पुष्पसूक्ष्मं' सूक्ष्माणि पुष्पाणि ५, 'अण्डसूक्ष्मं' सूक्ष्माण्यण्डकानि ६, 'लयनसूक्ष्मं' सूक्ष्माणि लयनानि-विलानि ७, 'स्नेहसूक्ष्मं' सूक्ष्मः स्नेहः-अप्कायोऽवश्यायादयः ८ ॥ ४५-शिष्यः-अथ किं तत्प्राणसूक्ष्मं ?, गुरुराह-प्राणसूक्ष्मं पञ्चविधं प्रज्ञप्तं, तद्यथा-कृष्णं 'नीलं' हरितवर्णं 'लोहितं' रक्तं 'हारिद्रं' पीतं शुक्लं च। तत्रैकैकस्मिन् वर्णेऽनेके भेदा बहुविधाश्च संयोगास्ते सर्वे कृष्णादिपञ्चस्वेवावतरन्ति। अस्ति कुन्थुरनुद्धरी वेति नाम, यद्वा 'अनुद्धरी' उद्धर्तुमशक्या 'कुन्थुः' इति नाम्नी जन्तुजातिः, या स्थिता अचलन्ती सती छद्मस्थानां निर्ग्रन्थानां वा निर्ग्रन्थीनां वा नो 'चक्षुःस्पर्शं' दृष्टिविषयं 'हव्वं'ति शीघ्रमागच्छति। या चास्थिता चलन्ती सती छद्मस्थानां निर्ग्रन्थानां वा निर्ग्रन्थीनां वा चक्षुःस्पर्शं शीघ्रमागच्छति। या छद्मस्थेन निर्ग्रन्थेन वा निर्ग्रन्थ्या वा 'अभीक्ष्णं २' पुनःपुनर्ज्ञातव्या द्रष्टव्या प्रतिलेखितव्या च भवति, तदेतत्प्राणसूक्ष्मम् १। अथ किं तत्पनकसूक्ष्मं ?, पनकसूक्ष्मं पञ्चविधं प्रज्ञप्तं, तद्यथा-कृष्णं १ नीलं २ लोहितं ३ हारिद्रं ४ शुक्लं ५। अस्ति पनकसूक्ष्मं-सूक्ष्मा उल्लिः, सा हि प्रावृषि भूमि-काष्ठादिषु

जे छउमत्थेणं निग्गंथेण वा निग्गंथीए वा अभि० २ जाणि० पासि० पडिलेहिअव्वे भवइ, से तं पणगसुहुमे २॥ से किं तं बीअसुहुमे ?, बीअसुहुमे पंचविहे पण्णत्ते, तं जहा–किण्हे जाव सुक्किले। अत्थि बीअसुहुमे कणियासमाणवण्णए नामं पण्णत्ते, जे छउमत्थेणं निग्गंथेण वा निग्गंथीए वा जाणि० पा० पडि० भवइ, से तं बीअसुहुमे ३॥ से किं तं हरियसुहुमे ?, हरियसुहुमे पंचविहे पण्णत्ते, तं जहा–किण्हे जाव सुक्किले। अत्थि हरियसुहुमे पुढवीसमाणवण्णए नामं पण्णत्ते, जे निग्गंथेण वा निग्गंथीए वा अभिक्खणं २ जाणियव्वे पासियव्वे पडिलेहियव्वे भवइ, से तं हरियसुहुमे ४॥ से किं तं पुप्फसुहुमे ?, पुप्फसुहुमे पंचविहे पण्णत्ते, तं जहा–किण्हे जाव सुक्किले। अत्थि पुप्फसुहुमे रुक्ख-

---

प्रायो जायते, यत्र च जायते तद्द्रव्यसमानवर्णं, नाम प्रसिद्धौ, प्रज्ञप्तं, यच्छद्मस्थेन निर्ग्रन्थेन वा निर्ग्रन्थ्या वा पुनः पुनर्ज्ञातव्यं द्रष्टव्यं प्रतिलेखितव्यं न भवति, तदेतत्पनकसूक्ष्मम् २। अथ किं तत् बीजसूक्ष्मं ?, बीजसूक्ष्मं पञ्चविधं प्रज्ञप्तं, तद्यथा–कृष्णं यावत् शुक्लं। अस्ति बीजसूक्ष्मं शाल्यादिबीजानां मुखमूलभाविनी या 'कणिका' नखिका 'नखी' इति लोके, तत्समानवर्णं नाम प्रज्ञप्तं, यच्छद्मस्थेन निर्ग्रन्थेन वा निर्ग्रन्थ्या वा ज्ञातव्यं द्रष्टव्यं प्रतिलेखितव्यं च भवति, तदेतद्बीजसूक्ष्मम् ३। अथ किं तद्धरितसूक्ष्मं ?, हरितसूक्ष्मं पञ्चविधं प्रज्ञप्तं, तद्यथा–कृष्णं यावत् शुक्लं। अस्ति हरितसूक्ष्मं–नवोद्भिन्नं हरितं, यत्रोद्भिन्नं तत्पृथ्वीसमानवर्णं नाम प्रज्ञप्तं, तच्चाल्पसंहननत्वात् स्वल्पेनाप्युपमर्देन विनश्यति, यच्छद्मस्थेन निर्ग्रन्थेन वा निर्ग्रन्थ्या वा अभीक्ष्णं २ ज्ञातव्यं द्रष्टव्यं प्रतिलेखितव्यं न भवति, तदेतद्धरितसूक्ष्मम् ४। अथ किं तत्पुष्पसूक्ष्मं ?, पुष्पसूक्ष्मं पञ्चविधं प्रज्ञप्तं, तद्यथा–कृष्णं यावत् शुक्लं। अस्ति पुष्पसूक्ष्मं वटोदुम्बरादीनां तत्तद्वृक्षसमानवर्णं नाम प्रज्ञप्तं, अतोऽलक्ष्यं भवति, तच्चोच्छ्वासेनापि

यरिं तेइच्छियं आउट्टित्तए, तं चेव सव्वं भाणियव्वं ॥ ४९ ॥ वासावासं पज्जोसविए भिक्खू इच्छिज्जा अण्णयरं ओरालं कल्लाणं सिवं धण्णं मंगल्लं सस्सिरीयं महाणुभावं तवोकम्मं उवसंपज्जित्ता णं विहरित्तए, नो से कप्पइ अणापुच्छित्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गणहरं गणावच्छेययं वा, जं वा पुरओ काउं विहरइ। कप्पइ से आपुच्छि[उं]त्ता आयरियं वा उवज्झायं वा थेरं वा पवित्तिं गणिं गणहरं गणावच्छेययं वा, जं वा पुरओ काउं विहरइ—'इच्छामि णं भंते ! तुब्भेहिं अब्भणुन्नाए समाणे अण्णयरं ओरालं कल्लाणं सिवं धण्णं मंगल्लं सस्सिरीयं महाणुभावं तवोकम्मं उवसंपज्जित्ता णं विहरित्तए, तं एवइयं वा एवइखुत्तो वा'। ते य से वियरिज्जा, एवं से कप्पइ अण्णयरं ओरा० विहरित्तए, ते य से नो वियरि०, एवं से नो कप्पइ अण्णयरं ओरा० विहरित्तए। से किमाहु ? भंते !, आयरिया पच्च० ॥५०॥

---

यितुं, तदेव पूर्वोक्तं—न कल्पतेऽनापृच्छ्याचार्यादिकमित्यादि सर्वं भणितव्यम्। ५०—वर्षावासं पर्युषितो भिक्षुः इच्छेदन्यतरं 'उदारं' प्रशस्तं कल्याणं शिवं धन्यं माङ्गल्यं सश्रीकं 'महानुभावं' महाप्रभावं तपःकर्म 'उपसम्पद्य' आहत्य विहर्त्तुं, न तस्य कल्पतेऽनापृच्छ्य आचार्यं वा उपाध्यायं वा स्थविरं प्रवर्त्तकं गणिं गणधरं गणावच्छेदकं वा, यं वा पुरतः कृत्वा विहरति। कल्पते तस्य साधोरापृष्टुं आचार्यं वा उपाध्यायं वा स्थविरं वा प्रवर्त्तकं गणिं गणधरं गणावच्छेदकं वा, यं वा पुरतः कृत्वा विहरति—'इच्छामि भदन्ताः ! युष्माभिरभ्यनुज्ञातः सन्नहं अन्यतरमुदारं कल्याणं शिवं धन्यं माङ्गल्यं सश्रीकं महानुभावं तपःकर्म उपसम्पद्य विहर्त्तुं, तच्चैतावत्प्रमाणं एतावद्वारं वा'। ते चाचार्यादयस्तस्याज्ञां वितरेयुः, एवं सति कल्पते तस्यान्यतरमुदारं यावत्तपःकर्म उपसम्पद्य विहर्त्तुं, ते चाचार्यादयस्तस्याज्ञां नो वितरेयुः, एवं सति तस्य न कल्पतेऽन्यतरमुदारं यावत्तपःकर्म उपसम्पद्य विहर्त्तुं। अथ किमाहुरत्र कारणं ? तीर्थङ्करादयो भदन्ताः !, उच्यते—आचार्याः प्रत्यपायं जानन्ति, प्रत्यपाया-

सूत्रं ५० १७ सामाचार्यां गुर्वाज्ञां विना तपःकरणादेरपि निषेधः

गामाणुगामं दूइज्जमाणे भिक्खू इच्छिज्जा अपच्छिममारणंतियसंलेहणाजूसणाजूसिए भत्तपाणपडियाइक्खिए पाओवगए कालं अणवकंखमाणे विहरित्तए वा, निक्खमित्तए वा पविसित्तए वा, असणं वा पाणं वा खाइमं वा साइमं वा आहारित्तए वा, उच्चारं वा पासवणं वा परिट्ठावित्तए, सज्झायं वा करित्तए, धम्मजागरियं वा जागरित्तए। नो से कप्पइ अणापुच्छित्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गणहरं गणावच्छेययं वा, जं वा पुरओ काउं विहरइ। कप्पइ से आपुच्छि[उं]त्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गण-

---

स्त्वत्र—अयमस्य तपसो निस्तारको न वा!, प्रतिचारकादयः सन्ति न वेत्यादिकाः। आचार्यादेरनुज्ञयैव सर्वं तपःकर्मादिकमपि विधेयमिति भावः। ५१—वर्षावासं पर्युषितो भिक्षुः इच्छेत् 'अपश्चिमं' चरमं यन्मरणं, न पुनः प्रतिक्षणमायुर्दलिकानुभवात्मकमावीचिमरणं, अपश्चिममरणमेवान्तस्तत्र भवा अपश्चिममारणान्तिकी, एवंविधा या संलेखना ×, तस्या 'जोषणा' सेवना, तया 'जुष्टः' क्षपितदेहः, अत एव प्रत्याख्यातभक्तपानस्तथा 'पादपोपगतः' कृतपादपोपगमनानशनः सन् कालं जीवितस्य मरणस्य वा 'अनवकाङ्क्षन्' अनभिलषन् विहर्तुं, यद्वा भक्तादिग्रहणाय निष्क्रमितुं स्वोपाश्रयात् प्रवेष्टुं वा गृहस्थगृहं, अशनादिचतुर्विधं वा आहारमाहारयितुं, यद्वा उच्चारं वा प्रस्रवणं वा परिष्ठापयितुं, स्वाध्यायं वा वाचनापृच्छनादिकं कर्त्तुं, (आज्ञाऽपायादिधर्मध्यानविधानेन जागरणं—धर्मजागरिका, तां) धर्मजागरिकां—वा जागरितुं। न तस्य कल्पतेऽनापृच्छ्य आचार्यं वा उपाध्यायं वा स्थविरं प्रवर्त्तकं गणिं गणधरं गणावच्छेदकं वा, यं वा पुरतः कृत्वा विहरति। कल्पते तस्यापृष्ट्वा आचार्यं वा

---

× संलिख्यते-कृशीक्रियते शरीरमनयेति संलेखना, देहशोषणार्थं विविधजातितपोविशेष इत्यर्थः।

वा जाव जं वा पुरओ काउं विहरइ–'इच्छामि णं भंते ! तुब्भेहिं अब्भणुन्नाए समाणे गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा'। ते य से वियरिज्जा, एवं से कप्पइ गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा। ते य से नो वियरिज्जा, एवं से नो कप्पइ गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा। से किमाहु ? भंते !, आयरिया पच्चवायं जाणंति ॥४६॥ एवं विहारभूमिं वा वियारभूमिं वा अन्नं वा जं किंचि पओयणं, एवं गामाणुगामं दूइज्जित्तए ॥४७॥ वासावासं पज्जोसविए

येण च लघुमपि गीतार्थतया प्रदीपकल्पं पुरतः कृत्वा विहरति। कल्पते तस्य–साधोर्वक्ष्यमाणप्रकारेणाप्रष्टुं आचार्यं वा, यावद्यं वा पुरतः कृत्वा विहरति–'इच्छामि हे भदन्ताः–पूज्याः ! युष्माभिरभ्यनुज्ञातः सन् गाथापतिकुलं भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा'। इत्येवमापृष्टाः सन्तस्ते चाचार्यादयस्तस्य साधोर्यद्याज्ञां वितरेयुस्तदैवं सति तस्य कल्पते गाथापतिकुलं भक्तार्थं वा पानार्थं निष्क्रमितुं वा प्रवेष्टुं वा। ते चाचार्यादयो यदि तस्याज्ञां नो वितरेयुस्तदैवं सति तस्य-साधोर्न कल्पते गाथापतिकुलं भक्तार्थं वा पानार्थं निष्क्रमितुं वा प्रवेष्टुं वा। अथ किमाहुरत्र कारणं तीर्थङ्करादयो भदन्ताः !, गुरुराह–आचार्याः 'प्रत्यपायं' अपायं तत्परिहारं च जानन्ति *। ४७–एवमेव 'विहारभूमिं' जिनायतनं वा 'विचारभूमिं' देहचिन्ताद्यर्थं वा, गमनमिति शेषः, अन्यं वा यत्किञ्चित्प्रयोजनं लेपसीवनलिखनादिकं भवेत्तत्सर्वमापृच्छ्यैव विधेयमिति तत्त्वं, गुरुपारतन्त्र्यस्यैव ज्ञानादिहेतुत्वात्, एवं ग्रामानुग्रामं 'दुइज्जित्तए'त्ति हिण्डितुं, भिक्षाद्यर्थं ग्लानादिकारणे वा, अन्यथाऽनुचितमेव

* अनापृच्छ्य गतानां वृष्टिर्वा पतेत्प्रत्यनीका वोपद्रवेयुः, आचार्यादिप्रायोग्यं वा ग्राह्यमभविष्यत्ते चातिशयशालिनस्तत्सर्वं विदित्वा तस्मै अदापयिष्यन्, अतस्तान्पृष्ट्वैव गन्तव्यम्।

भिक्खू इच्छिज्जा अण्णयरिं विगइं आहारित्तए, नो से कप्पइ अणापुच्छित्ता आयरियं वा जाव गणावच्छेययं वा, जं वा पुरओ कट्टु विहरइ। कप्पइ से आपुच्छित्ता आयरियं वा जाव आहारित्तए। 'इच्छामि णं भंते ! तुब्भेहिं अब्भणुन्नाए समाणे अन्नयरिं विगइं आहारित्तए, तं एवइयं वा एवइक्खुत्तो वा'। ते य से वियरिज्जा, एवं से कप्पइ अण्णयरिं विगइं आहारित्तए, ते य से नो वियरिज्जा, एवं से नो कप्पइ अन्नयरिं विगइं आहारित्तए। से किमाहु ? भंते !, आयरिया पच्चवायं जाणंति ॥ ४८ ॥ वासावासं पज्जोसविए भिक्खू इच्छिज्जा अण्ण-

नगरेषु ग्रामानुग्रामं हिण्डनम्। ४८–वर्षावासं पर्युषितो भिक्षुर्यदीच्छेदन्यतरां विकृतिमाहारयितुं, तदा न तस्य कल्पते अनापृच्छ्य आचार्यं वा यावद्गणावच्छेदकं वा, यं वा पुरतः कृत्वा विहरति। कल्पते तस्य साधोरापृच्छ्य आचार्यादिकं यावदाहारयितुम्। कथं प्रष्टव्यमित्याह–'इच्छामि हे भदन्ताः ! युष्माभिरभ्यनुज्ञातः सन्नहं अन्यतरां विकृतिमाहारयितुं, तां इयतीं प्रमाणेन 'इयत्कृत्वः' इयतो वारान्वा'। ते चाचार्यादयस्तस्याज्ञां वितरेयुस्तदा तस्य कल्पतेऽन्यतरां विकृतिं आहारयितुम्। ते च यदि तस्याज्ञां नो वितरेयुस्तदा तस्य न कल्पतेऽन्यतरां विकृतिं आहारयितुम्। अथ किमाहुस्तीर्थङ्करादयोऽत्र कारणं? भदन्ताः !, गुरुः प्राह–आचार्याः प्रत्यपायं–(गोहोऽग्रादि, ग्लानतादस्य गुणो वा न वेति) जानन्ति। ४९–वर्षावासं पर्युषितो भिक्षुरिच्छेत् अन्यतरां–वातिक-पैत्तिक-श्लैष्मिक-सान्निपातिकरोगाणां आतुर-वैद्य-प्रतिचारक-भैषज्यरूपापादचतुष्कां × चिकित्सां 'आउट्टित्तए'त्ति कार-

× यदुक्तम्–"भिषग्द्रव्याण्युपस्थाता, रोगी पादचतुष्टयम्। चिकित्सितस्य निर्दिष्टं, प्रत्येकं तच्चतुर्गुणम् ॥ १ ॥
दक्षो विज्ञातशास्त्रार्थो, दृष्टकर्मा शुचिर्भिषक् (१)। बहुकल्पं बहुगुणं, सम्पन्नं योग्यमौषधम् (२) ॥ २ ॥
अनुरक्तः शुचिर्दक्षो, बुद्धिमान् प्रतिचारकः (३)। आढ्यो (वैभवशाली) रोगी भिषग्वश्यो, ज्ञायकः सत्त्ववानपि (४) ॥३॥"

सूत्रं ५०. १७ सामाचार्यां गुर्वाज्ञां विना-तपःकरणादेरपि निषेधः

यरिं तेइच्छियं आउट्टित्तए, तं चेव सव्वं भाणियव्वं ॥ ४९ ॥ वासावासं पज्जोसविए भिक्खू इच्छिज्जा अण्णयरं ओरालं कल्लाणं सिवं धण्णं मंगल्लं सस्सिरीयं महाणुभावं तवोकम्मं उवसंपज्जित्ता णं विहरित्तए, नो से कप्पइ अणापुच्छित्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गणहरं गणावच्छेययं वा, जं वा पुरओ काउं विहरइ। कप्पइ से आपुच्छि[उं]त्ता आयरियं वा उवज्झायं वा थेरं वा पवित्तिं गणिं गणहरं गणावच्छेययं वा, जं वा पुरओ काउं विहरइ—'इच्छामि णं भंते ! तुब्भेहिं अब्भणुन्नाए समाणे अण्णयरं ओरालं कल्लाणं सिवं धण्णं मंगल्लं सस्सिरीयं महाणुभावं तवोकम्मं उवसंपज्जित्ता णं विहरित्तए, तं एवइयं वा एवइखुत्तो वा'। ते य से वियरिज्जा, एवं से कप्पइ अण्णयरं ओरा० विहरित्तए, ते य से नो विय०, एवं से नो कप्पइ अण्णयरं ओरा० विहरित्तए। से किमाहु ? भंते !, आयरिया पच्च० ॥५०॥

---

यितुं, तदेव पूर्वोक्तं—न कल्पतेऽनापृच्छ्याचार्यादिकमित्यादि सर्वं भणितव्यम्। ५०—वर्षावासं पर्युषितो भिक्षुः इच्छेदन्यतरं 'उदारं' प्रशस्तं कल्याणं शिवं धन्यं माङ्गल्यं सश्रीकं 'महानुभावं' महाप्रभावं तपःकर्म 'उपसम्पद्य' आहत्य विहर्त्तुं, न तस्य कल्पतेऽनापृच्छ्य आचार्यं वा उपाध्यायं वा स्थविरं प्रवर्त्तकं गणिं गणधरं गणावच्छेदकं वा, यं वा पुरतः कृत्वा विहरति। कल्पते तस्य साधोरापृष्टुं आचार्यं वा उपाध्यायं वा स्थविरं वा प्रवर्त्तकं गणिं गणधरं गणावच्छेदकं वा, यं वा पुरतः कृत्वा विहरति—'इच्छामि भदन्ताः ! युष्माभिरभ्यनुज्ञातः सन्नहं अन्यतरमुदारं कल्याणं शिवं धन्यं माङ्गल्यं सश्रीकं महानुभावं तपःकर्म उपसम्पद्य विहर्त्तुं, तच्चैतावत्प्रमाणं एतावद्वारं वा'। ते चाचार्यादयस्तस्याज्ञां वितरेयुः, एवं सति कल्पते तस्यान्यतरमुदारं यावत्तपःकर्म उपसम्पद्य विहर्त्तुं, ते चाचार्यादयस्तस्याज्ञां नो वितरेयुः, एवं सति तस्य न कल्पतेऽन्यतरमुदारं यावत्तपःकर्म उपसम्पद्य विहर्त्तुं। अथ किमाहुरत्र कारणं ? तीर्थङ्करादयो भदन्ताः !, उच्यते—आचार्याः प्रत्यपायं जानन्ति, प्रत्यपाया-

वासावासं पज्जोसविए भिक्खू इच्छिज्जा अपच्छिममारणंतियसंलेहणाजूसणाजूसिए भत्तपाणपडियाइक्खिए पाओवगए कालं अणवकंखमाणे विहरित्तए वा, निक्खमित्तए वा पविसित्तए वा, असणं वा पाणं वा खाइमं वा साइमं वा आहारित्तए वा, उच्चारं वा पासवणं वा परिट्ठावित्तए, सज्झायं वा करित्तए, धम्मजागरियं वा जागरित्तए। नो से कप्पइ अणापुच्छित्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गणहरं गणावच्छेययं वा, जं वा पुरओ काउं विहरइ। कप्पइ से आपुच्छि[उं]त्ता आयरियं वा उवज्झायं वा थेरं पवित्तिं गणिं गण-

---

त्वत्र–अगमस्य तपसो निस्तारको न वा!, प्रतिचारकादयः सन्ति न वेत्यादिकाः। आचार्यादेरनुज्ञयैव सर्वं तपःकर्मादिकमपि विधेयमिति भावः। ५१–वर्षावासं पर्युषितो भिक्षुः इच्छेत् 'अपश्चिमं' चरमं यन्मरणं, न पुनः प्रतिक्षणमायुर्दलिकानुभवात्मकमावीचिमरणं, अपश्चिममरणमेवान्तस्तत्र भवा अपश्चिममारणान्तिकी, एवंविधा या संलेखना ×, तस्या 'जोषणा' सेवना, तया 'जुष्टः' क्षपितदेहः, अत एव प्रत्याख्यातभक्तपानस्तथा 'पादपोपगतः' कृतपादपोपगमनानशनः सन् कालं जीवितस्य मरणस्य वा 'अनवकाङ्क्षन्' अनभिलषन् विहर्तुं, यद्वा भक्तादिग्रहणाय निष्क्रमितुं स्वोपाश्रयात् प्रवेष्टुं वा गृहस्थगृहं, अशनादिचतुर्विधं वा आहारमाहारयितुं, यद्वा उच्चारं वा प्रस्रवणं वा परिष्ठापयितुं, स्वाध्यायं वा वाचनापृच्छनादिकं कर्तुं, (आज्ञाऽपायादिधर्मध्यानविधायिका जागरणं–धर्मजागरिका, तां) धर्मजागरिकां–वा जागरितुं। न तस्य कल्पतेऽनापृच्छ्य आचार्यं वा उपाध्यायं वा स्थविरं प्रवर्त्तकं गणिं गणधरं गणावच्छेदकं वा, यं वा पुरतः कृत्वा विहरति। कल्पते तस्यापृष्ट्वा आचार्यं वा

---

× संलिख्यते–कृशीक्रियते शरीरकषायाद्यनयेति संलेखना, देहशोषणार्थं विविधजातितपोविशेष इत्यर्थः।

हरं गणावच्छेययं वा, जं वा पुरओ काउं विहरइ–'इच्छामि णं भंते ! तुब्भेहिं अब्भणुन्नाए समाणे अपच्छिममारणंतियसंलेहणाजूसणाजूसिए भत्तपाणपडियाइक्खिए पाओवगए कालं अणवकंखमाणे विहरित्तए वा, निक्खमित्तए वा पविसित्तए वा, असणं वा पाणं वा खाइमं वा साइमं वा आहारित्तए वा, उच्चारं वा पासवणं वा परिट्ठावित्तए, सज्झायं वा करित्तए, धम्मजागरियं वा जागरित्तए, तं एवइयं वा एवइखुत्तो वा'। ते य से वियरिज्जा, एवं से कप्पइ, ते य से नो वियरिज्जा, नो से कप्पइ । से किमाहु ? भंते !, आयरिया पच्च० जाणंति ॥५१॥(१७)।

उपाध्यायं वा स्थविरं प्रवर्त्तकं गणिं गणधरं गणावच्छेदकं वा, यं वा पुरतः कृत्वा विहरति–'इच्छामि हे भदन्ताः ! युष्माभिरभ्यनुज्ञातः सन्नहं अपश्चिममारणान्तिकसंलेखनाजोषणाजुष्टः प्रत्याख्यात भक्तपानः पादपोपगतः सन् कालं अनवकाङ्क्षन् विहर्त्तुं, यद्वा भक्तादिग्रहणाय निष्क्रमितुमुपाश्रयात् प्रवेष्टुं वाऽगारिगेहं, अशनादिकमाहारयितुं वा, उच्चारं वा प्रस्रवणं वा परिष्ठापयितुं, स्वाध्यायं वा कर्त्तुं, धर्मजागरिकां वा जागरितुं, तदेतावत्प्रमाणं वा एतावद्वेलं वा' । ते चाचार्यादयस्तस्याज्ञां वितरेयुः, एवं सति तस्य कल्पते प्रागुक्तमशनादिकं कार्यजातं कर्त्तुं, ते चाचार्यादयस्तस्य यदि नाज्ञां वितरेयुस्तदा न तस्य कल्पते प्रागुक्तकार्यजातमध्यात् किमपि कर्त्तुं । अथ किमाहुरत्र कारणं ? तीर्थङ्करादयो भदन्ताः !, उच्यते–आचार्याः प्रत्यपायं जानन्ति । अत्र प्रत्यपायाः–अयं निस्तारको न वा ?, समाधिपानकं निर्यामका वा सन्ति न वा ? इत्यादयः । तत्र क्षपकस्य क्षुदरमलशोधनार्थं त्वगेला-नागकेसर-तमालपत्र-मिश्रशर्कराकथितशीतलक्षीरलक्षणं समाधिपानकं पाययित्वा पूगीफलादिद्रव्यैर्मधुरविरेचः कार्यते, निर्यामकास्तु उद्वर्त्तनाद्यर्थमुत्कृष्टतोऽष्टचत्वारिंशत् । इति सप्तदशी सामाचारी ॥

अथातपे दत्तमुपधिमन्येषां प्रतिज्ञाप्य गौचर्याद्यर्थं गन्तव्यमित्यधिकाररूपामष्टादशीं सामाचारीमाह–

सूत्रं ५१ १७ सामाचार्यां गुर्वाज्ञां विना संलेखनादिकरण-निषेधः

णणयरि वा उवहिं आयावित्तए वा पया-
निक्खमित्तए वा पविसित्तए वा, असणं
वा करित्तए, काउस्सग्गं वा, ठाणं वा ठाइ-
त्तए-'इमं ता अज्जो ! तुमं मुहुत्तगं जाणेहि
ाणं वा खाइमं वा साइमं वा आहारित्तए,

[illegible] पात्र वा कम्बलं वा 'पादप्रोञ्छनं' रजोहरणं वा अन्यतरं वोपधिं 'आतापयितुं' सकृदातपे दातुं यद्वा 'प्रतापयितुं' पुनःपुनरातपे दातुं, अनातापिते हि कुत्सा-पन-[illegible]शोषणं, तदा उपधावातपे दत्ते सति न तस्य-साधोः कल्पते एकं वा साधुं 'अनेकान्' वा श्रमणान् 'अप्रतिज्ञाप्य' अकथयित्वा गाथापतिकुलं भक्तार्थं वा पानार्थं वा निष्क्रमितुं वोपाश्रयात्प्रवेष्टुं वा गृहस्थगृहं, यद्वा अशनादिकं चतुर्विधमाहारमाहारयितुं, बहिः'विहारभूमिं' जिनसद्मनि यद्वा 'विचारभूमिं' स्थण्डिलभूमौ वा, गन्तुमिति शेषः, स्वाध्यायं वा कर्त्तुं, कायोत्सर्गं वा 'स्थानं' ऊर्ध्वस्थानं वीरासनादिना वा स्थातुं । अस्ति चात्र कोऽपि अभिसमन्वागतो 'यथासन्निहितः' समीपवर्ती एकः साधुरनेके वा साधवस्तदा कल्पते तस्यैवं वक्तुं– 'इमं' उपधिं नहि हे आर्य ! त्वं 'मुहूर्त्तकं' मुहूर्त्तमात्रं यावत् 'जानीहि' सत्यापयेः तावदहं गाथापतिकुलं भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा, अशनादिकं वा आहारं आहारयितुं, बहिर्विहारभूमिं विचारभूमिं वा गन्तुं, स्वाध्यायं वा कर्त्तुं कायोत्सर्गं वा स्थानं वा स्थातुं, उद्यमितो भवामीति शेषः । स च समीपवर्त्ती साधु-

वहिया विहारभूमिं वियारभूमिं सज्झायं वा करित्तए, काउस्सग्गं वा ठाणं वा ठाइत्तए'। से य से पडिसुणिज्जा, एवं से कप्पइ गाहावइ-कुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा, असणं पाणं खाइमं साइमं आहारित्तए वा, वहिया विहार० वियार० सज्झायं करित्तए वा, काउ० ठाणं वा ठाइत्तए। से य से नो पडि०, एवं से नो कप्पइ गाहावइकुलं भ० वा पा० वा निक्ख० वा पवि० वा असणं पाणं खाइमं साइमं आहारित्तए वा, वहिया विहार० वियार०, सज्झायं करित्तए वा, काउस्सग्गं वा ठाणं वा ठाइत्तए ॥५२॥ (१८)।

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा अणभिग्गहियसिज्जासणिएणं हुत्तए, आयाणमेयं, अणभिग्गहिय-

---

यदि तस्यैतद्वाक्यं 'प्रतिशृणुयात्' स्वीकुर्यात्तदेवं सति तस्य कल्पते गाथापतिकुलं भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा, अशनादिचतुर्विधमाहारं वा आहारयितुं, बहिर्विहारभूमिं विचारभूमिं वा गन्तुं, स्वाध्यायं कर्तुं वा, कायोत्सर्गं स्थानं वा स्थातुं। स च तस्यैतद्वाक्यं यदि न प्रतिशृणुयात्, एवं सति तस्य न कल्पते गाथापतिकुलं भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा, अशनादिचतुर्विधमाहारमाहारयितुं वा, बहिर्विहारभूमिं विचारभूमिं वा गन्तुं, स्वाध्यायं वा कर्तुं, कायोत्सर्गं वा स्थानं वा स्थातुं। अन्येन सत्यापनाऽस्वीकारे आतपोन्मुक्तोपधेर्जलक्लेदनचौरापहरणाप्कायविराधनादयोऽनेके दोषाः। इत्यष्टादशी सामाचारी ॥

अथाभिगृहीतशय्यासनिकत्वाद्यधिकारलक्षणामेकोनविंशीं सामाचारीमाह—

५३—वर्षावासं पर्यु० न कल्पते निर्ग्र० वा निर्ग्र० वा अनभिगृहीतशय्यासनिकेन (नाभिगृहीतानि शय्यासनानि येन, स्वार्थे इकप्रत्ययः) भवितुं, वर्षासु मणिकुट्टिमेऽपि पीठफलकादिग्रहवतैव भाव्यं साधुना, अन्यथा शीतलायां भुवि

गिज्झागमियस्स अणुच्चाकुइयस्स सणद्धाबंधियस्स अमियासणिअस्स अणातावियस्स असमियस्स अभिक्खणं २ अपडिलेहणासीलस्स अपमज्जणासीलस्स तहा तहा णं संजमे दुराराहए भवइ ॥१३॥ अणादाणमेयं, अभिग्गहियसिज्जासणियस्स उच्चाकुइअस्स अट्ठाबंधियस्स

गमने उपवेशने च कुन्थ्वादिजीवविराधनोत्पत्तेः। 'आदानं' ग्रहणकारणं कर्मणां दोषाणां वा 'एतद्' अनभिगृहीतशय्यासनिकत्वं। तदेव द्रढयति–अनभिगृहीतशय्यासनिकस्य 'अनुच्चाकुचिकस्य' हस्तादेर्न्यूनोच्चसपरिस्पन्दशय्याकस्य, अनर्थकबन्धिनः–निरर्थकं पक्षान्त एकवारोपरि द्वौ त्रींश्चतुरो वा वारान् कम्बासु बन्धान् ददाति, चतुरुपरि बहूनि अष्टकानि वा बध्नाति, तथा च स्वाध्यायविघातादयो दोषाः, यदि तावदेकाङ्गिकं चम्पकादिपट्टं लभ्यते तदा तदेव ग्राह्यं, बन्धनादिपलिमन्थरहितत्वात् ×, तथा 'अमितासनिकस्य' अनियमितासनस्य, पुनःपुनः स्थानात्स्थानान्तरं गच्छतो हि जीववधः स्यात्, यद्वा अनेकासनसेवमानस्य, 'अनातापिनः' संस्तारकादीनामातपेऽदातुः 'असमितस्य' ईर्यादिष्वनुपयुक्तस्य 'अभीक्ष्णं २' वारंवारं अप्रतिलेखनाशीलस्य दृष्ट्या, अप्रमार्जनाशीलस्य रजोहरणादिना, तथातथाप्रकारेणायतनावार्त्तिनः साधोः संयमो दुराराध्यो भवति।

१४–अनादानं कर्मणां दोषाणां वा एतदभिगृहीतशय्यासनिकत्वादिकं, तदेव स्पष्टयति–अभिगृहीतशय्यासनिकस्य 'उच्चाकुचिकस्य' हस्तादियावदुच्चापरिस्पन्दशय्याकस्य, 'अर्थबन्धिनः' पक्षान्तः सकृदेव पट्टकादिबन्धकारिणः मितासनिकस्य 'आतापिनः' वस्त्रादेरातपे दातुः 'समितस्य' ईर्यादिषु मनआदिगुप्तिषु च सम्यगुपयुक्तस्य

× अथवा न तस्मिन् द्वित्रपट्टमकमपि तथाविधं ग्राह्यं, यस्मिन्पक्षान्तर्द्वित्रिवेलातोऽधिकबन्धनदानस्य नावश्यकता भवेत्।

मियासणियस्स आयावियस्स समियस्स अभिक्खणं २ पडिलेहणासीलस्स पमज्जणासीलस्स तहा तहा णं संजमे सुआराहए भवइ ॥ (१९)।

अभीक्ष्णं २ प्रतिलेखनाशीलस्य प्रमार्जनाशीलस्य च साधोस्तथातथाप्रकारेण संयमः सुखाराध्यो भवति। तत्रेर्यायां वरदत्तो × मुनिर्भाषासमितौ सङ्गतः * श्रमणः, एषणायां वसुदेवपूर्वभवजीवो नन्दिषेणो मुनिः †, आदाननिक्षेपादौ प्रतिलेखनायां च सोमिलो मुनिः +, उच्चारादिपारिष्ठापनिकायां सुव्रताचार्यशिष्यः क्षुल्लको §

× स हि कदाचिदिन्द्रेण प्रशंसितः, ततः सञ्जातामर्षेण मिथ्यादृष्टिसुरेणागत्य हस्तिरूपं विकुर्व्य शुण्डया मुनिं गृहीत्वा नभसि उल्लालितोऽधश्च भूमौ सूक्ष्मा मण्डूक्यो विकुर्विताः, मुनिना चाधःपतता चिन्तितं सखेदं–'अहो मम देहेनैता वराकीमण्डूक्यो विनाशमाप्स्यन्ती'ति तन्मनोवृत्तिं विज्ञाय देवेन क्षामितः १।

* स च शत्रुरुद्धान्नगरान्निर्गच्छन् शत्रुसैनिकैर्धृतः पृष्टश्च 'नगरान्तः कीदृशं सैन्यस्य बलाबलं ?' इति, मुनिराह–'यौ कर्णौ शृणुतस्तौ न वदतः न च पश्यतः, ये नेत्रे पश्यतस्ते न वदतो न शृणुतश्च, या च रसना वदति सा न पश्यति न शृणोति च'। पुनः पुनरेवमेव जल्पन् स पाठग्रहिल इति कृत्वा मुक्तस्तैः २।

† स हि ग्लानवैयावृत्त्याभिग्रही नित्यषष्ठभक्तिकः, शक्रप्रशंसया सञ्जातामर्षेण मिथ्यादृक्सुरेणातीसारिसाधुविकुर्वणां विधाय क्षुल्लकसाधुरूपेण वैयावृत्त्यनिमित्तमभ्यर्थितो नन्दिषेणस्तस्य देहशुद्ध्यर्थं जलविहरणाय गतो गृहस्थगेहे, तत्र च विहिता सुरेणानेषणा, कथञ्चित्सुरस्यासावधानत्वे प्राप्तं शुद्धजलं विहृत्य गतो ग्लानान्तिके, देहशुद्धिकरणपूर्वकं तं स्कन्धे समारोप्य चलितस्ततः, खरण्टितमशुचिना तेनाऽखिलमपि देहं तस्य, तथाप्यविचलितचित्तः स क्षामितः सुरेण ३।

+ क्वापि गच्छे सोमिलो मुनिः, कदाचिदपराह्ने विहारकारणात्सकाले प्रतिलेखना कृता गुर्वाज्ञया श्रमणैः, स्थितौ च पुनः कालेऽपि कृता सोमिलवर्जैः सर्वैः, गुरुभिर्नोदितः सोमिलः प्राह–'किं कारणं पुनः प्रतिलेखनाकरणस्य ?, इदानीमेव किमुपधौ सर्पाः समुत्पन्नाः ?'। एवं सोल्लुण्ठभाषिणं तं शिक्षयितुं प्रातः प्रतिलेखनावसरे शासनदेवतयोपधिमध्ये सर्पा निष्कासिताः, तान् दृष्ट्वा भीतस्सोमिलो नंष्ट्वाऽगात् गुर्वन्तिके, गुरुभिरुक्तं–'यत्त्वया सोल्लुण्ठं जल्पितं तस्मादिदं जातं, अत एवं न वक्तव्यं, यतः प्रतिलेखनायां महती कर्मनिर्जरा भवति'। ततः सोमिल आदाननिक्षेपणासमितौ प्रतिलेखनायां च सदाऽप्रमत्तो जातः ४।

§ आचार्यैस्तं प्रत्युक्तं–क्षुल्लक ! निशायामुच्चारप्रस्रवणपरिष्ठापनार्हभूप्रतिलेखनरूपाणि स्थण्डिलानि कुरु। तेनोक्तं–किं तत्रोष्ट्राः समुपविष्टाः सन्ति ?। आचार्यास्तूष्णीं स्थिताः, निशायां प्रस्रवणं परिष्ठापयन्तं तमशिक्षयदुष्ट्ररूपं विकुर्व्य पादप्रहारैः शासनदेवता, ततो गुरूपदेशेन निश्चलोऽभूत्स पारिष्ठापनिकासमितौ ५।

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा निग्गंथीण वा तओ उच्चार-पासवणभूमीओ पडिलेहित्तए, न तहा हेमंतगिम्हासु

दृष्टान्तः । एवं गुप्तित्रिकेऽप्युदाहरणानि, यथा मनोगुप्तौ कुङ्कणदेशीयो वृद्धो मुनिर्यस्योदन्तः प्राक्पीठिकायां [illegible] वर्णके प्रोक्तः, वचनगुप्तौ गुणदत्तः ×, कायगुप्तौ च अर्हन्नको + मुनिर्दृष्टान्तः । इत्येकोनविंशी सामाचारी ॥

अथोच्चार-प्रस्रवणभूमिप्रतिलेखनरूपां विंशतितमां सामाचारीमाह—

५५—वर्षावासं पर्युषितानां कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा तिस्रः उच्चार-प्रस्रवणभूमयः प्रतिलेखितुं । अनधिसहिष्णोस्तिस्रोऽन्तः, अधिसहिष्णोश्च बहिस्तिस्रः, दूरव्याघाते मध्या तद्व्याघाते चासन्नेति आसन्न-मध्यदूरभेदात्त्रिधा भूमिः प्रतिलेखितव्येति हृदयम् । न तथा हेमन्त-ग्रीष्मयोर्यथा वर्षासु । तत्कुतो हेतोः ? इति पृष्टे गुरुराह—वर्षासु "उस्सण्णं"ति प्रायेण 'प्राणाः' शङ्खनकेन्द्रगोपकृम्यादयस्तृणानि—प्रतीतानि 'बीजानि'

× [illegible] 'जन्याया वयं न ज्ञाप्याः' इति वचनं च लात्वा मुक्तो गतः स्वपुरं, [illegible] स्थाने समागतः, उत्थिताश्चौराः, मुषिता मुनिजनन्यादयस्सर्वेऽपि जन्याजनाः, ततो मुनिं दृष्ट्वा [illegible] निषिद्धोऽभूत् । [illegible] मुनिजनन्याश्चित्ते महद्दुःखमभूत्, यदुत—पुत्रेणाऽप्यनेन साधुना जानताऽपि [illegible] 'इयं साधुजननी' इति ज्ञात्वा चौरैस्सर्वं धनादिकं प्रत्यर्पितं प्रशंसितश्च साधुः २ ।

+ [illegible] ( [illegible] ) [illegible] । यदुत—जलान्तः पादप्रक्षेपेऽप्कायविराधना भविष्यति, ततोऽन्यजनैः कूर्दनेनो- [illegible] शासनदेवतया पादयोरन्तरे लकुटीं प्रक्षिप्य भूमौ पातितो भग्नपादश्च विहितः । ततः [illegible] 'जलान्तः पादः प्रक्षेप्यः, परं नैवं विधेय'मिति शिक्षयित्वा सज्जपादो विहितः । सोऽपि मिथ्यादुष्कृतदानपूर्वकं कायगुप्तौ स्थिरो जातः ३ ।

जहा णं वासासु, से किमाहु ? भंते !, वासासु णं उस्सण्णं पाणा य तणा य बीया य पणगा य हरियाणि य भवंति ॥ ५५ ॥ (२०) ।

वासावासं पज्जो० णं कप्पइ निग्गंथाण वा निग्गंथीण वा तओ मत्तगाइं गिण्हित्तए, तं जहा–उच्चारमत्तए, पासवण० खेल० ॥५६॥(२१) ।

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा परं पज्जोसवणाओ गोलोमप्पमाणमित्ते वि केसे तं रयणिं

---

तत्तद्वनस्पतिनां नवोद्भिन्नानि किसलयानि 'पनका' उल्लयो 'हरितानि' बीजेभ्यो जातानि, यद्वा "पाणायतणा य" त्ति प्राणानां–जीवानामायतनानि–स्थानानि बीजप्रभृतीनि, एतानि वर्षासु बाहुल्येन भवन्ति, अतो वर्षासु उच्चारादिनिमित्तं भूमित्रयं ग्रहीतव्यमेवेति विंशतितमी सामाचारी ॥

अथ मात्रकत्रयस्य ग्राह्यत्वनिरूपिकामेकविंशतितमीं सामाचारीमाह—

५६–वर्षावासं पर्यु० कल्पते नि० वा नि० वा त्रीणि मात्रकाणि ग्रहीतुं, तद्यथा–उच्चारमात्रकं प्रस्रवण० खेल० । तदभावे वेलातिक्रमेण वेगधारणे आत्मविराधना वर्षति च बहिर्गमने संयमविराधना । इत्येकविंशी सामाचारी ॥

अथ लोचकर्तव्यताप्रतिपादिकां द्वाविंशीं सामाचारीमाह—

५७–वर्षावासं पर्युषितानां नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा परं पर्युषणात–उत्सर्गतो गृह्यज्ञातपर्युषणाऽऽद्यदिनाषाढचतुर्मासकादनन्तरं "धुवलोओ उ जिणाणं, निच्चं थेराण वासवासासु" इति वचनाद् गोलोमप्रमाणमात्रानपि, आस्तां दीर्घान्, केशान्, रक्षितुमिति शेषः। अपवादतस्तु यावत्तां रजनीं–आषाढचतुर्मासकानन्तरं गृहिज्ञातपर्युषणोपलक्षितां प्राग्जैनटिप्पनकप्रवृत्तिसमये चान्द्रे वर्षे पञ्चाशत्तमीं भाद्रवशुक्लपञ्चमीरात्रिं, अभि-

उवायणाविसए। अज्जेणं खुरमुंडेण वा लुक्कसिरएण वा होयव्वं सिया। पक्खिया आरोवणा, मासिए खुरमुंडे, अद्धमासिए कत्तरिमुंडे, छम्मासिए लोए, संवच्छरिए वा थेरकप्पे ॥ ५७ ॥ (२२)।

वर्द्धिते च वर्षे विंशतितमीं श्रावणशुक्लपञ्चमीरात्रिं, साम्प्रतं तु पञ्चाशत्तमीं श्रावणस्य भाद्रपदस्य वा शुक्लचतुर्थीरात्रिं अतिक्रमयितुं न कल्पते, तस्या अर्वागेव लोचं कारयेत्। इदमुक्तं भवति–समर्थश्चेत्तदा वर्षासु नित्यं लोचं कारयेत्, असमर्थोऽपि सांवत्सरिकरात्रिं नोल्लङ्घयेत्, लोचं विना सांवत्सरिकप्रतिक्रमणस्यावश्यमकल्प्यत्वात्। केशेषु हि अप्कायविराधना, तत्संसर्गाच्च यूकाः सम्मूर्च्छन्ति, ताश्च कण्डूयमानो हन्ति, शिरसि नखक्षतं वा स्यात्, यदि च क्षुरेण मुण्डापयति कर्त्तर्या वा कारयति तदाऽऽज्ञाभङ्गादयो यूकाछेदन–नापितपश्चात्कर्म–शासनापभ्राजनादिदोषाः स्युः, अत उत्सर्गतो लोच एव श्रेयान्। यदि चासहिष्णुर्लोचे कृते ज्वराद्युपद्रवः स्यात्कस्यचित् बालो वा रुयाद्धर्मं वा त्यजेत्ततो न तस्य लोचः कार्य इत्याह–'आर्येण' साधुना बालग्लानादिनाऽपवादतः क्षुरमुण्डेन, उत्सर्गतस्तु लुञ्चितशिरोजेन भवितव्यं स्यात्, यस्तु व्रणादिकारणात्क्षुरेणापि कारयितुमसमर्थस्तस्य कर्त्तर्या कार्या। पाक्षिका आरोपणा–पक्षे पक्षे संस्तारकदवरकाणां बन्धा मोक्तव्याः प्रतिलेखितव्याश्च, यद्वा 'आरोपणा' प्रायश्चित्तं पक्षे पक्षे ग्राह्यं सर्वदा, वर्षासु विशेषतः। मासिकः क्षुरमुण्डः–असहिष्णुना मासे मासे मुण्डनं कारणीयं, अर्द्धमासिकः कर्त्तरीमुण्डः–यदि कर्त्तर्या कारयति तदा पक्षे पक्षे गुप्तं कारणीयं, क्षुरकर्त्तर्योश्च प्रायश्चित्तं निशीथोक्तं यथासङ्ख्यं लघुमास–गुरुमास(पुरिमार्द्धैकाशन)रूपं ज्ञेयं। पाण्मासिको लोचः,

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा परं पज्जोसवणाओ अहिगरणं वइत्तए, जे णं निग्गंथो वा निग्गंथी वा परं पज्जोसवणाओ अहिगरणं वयइ, से णं 'अकप्पेणं अज्जो! वयसी'ति वत्तव्वे सिया। जे णं निग्गंथो वा निग्गंथी वा परं पज्जोसवणाओ अहिगरणं वयइ, से णं निज्जूहियव्वे सिया ॥ ५८ ॥ (२३)।

सांवत्सरिको वा स्थविरकल्पः—'स्थविराणां' वृद्धानां जराजर्जरत्वेनाशक्तत्वात् दृष्टिरक्षणार्थं च सांवत्सरिकः कल्पः लोचस्य, अर्थापत्त्या तरुणानां चातुर्मासिकः। इति द्वाविंशी सामाचारी ॥

अथाधिकरणानुदीरणनिरूपिकां त्रयोविंशतितमीं सामाचारीमाह—

५८—वर्षावासं पर्युषितानां नो कल्पते नि० वा नि० वा परं पर्युषणातः 'अधिकरणं' कलहकृद्वचनं वक्तुं, यो निर्ग्रन्थो वा निर्ग्रन्थी वा परं पर्युषणातोऽधिकरणं वदति, स चैवं वक्तव्यः स्यात्, यदुत—'आर्य! अकल्पेन त्वं वदसि' यतः पर्युषणातः प्राक् तद्दिने वा यदधिकरणमुत्पन्नं तत्सर्वं पर्युषणायां क्षामितं, यच्च त्वं तदनन्तरमप्यधिकरणं वदसि तदयमकल्प इति हृदयम्। यश्चैवं वारितोऽपि निर्ग्रन्थो वा निर्ग्रन्थी वा परं पर्युषणातोऽधिकरणं वदति, स निर्यूहितव्यः—ताम्बूलिकपत्रदृष्टान्तेन × संघाद्बहिर्विधेयः (यथा ताम्बूलिकेन विनष्टं पत्रं अन्यपत्रविनाशनभया-

× वृषभमारकद्विजदृष्टान्तेन वा, यथा—खेटवास्तव्यो रुद्राख्यो द्विजो वर्षाकाले हलं लात्वा क्षेत्रं गतः, हलं वाहयतस्तस्य गलिर्बलिवर्द उपविष्टः, तोत्रेण ताड्यमानोऽपि नोत्तिष्ठति, क्रुद्धेन द्विजेन कृष्टकेदारत्रयमृत्खण्डैराहन्यमानो मृत्खण्डस्थगितमुखः श्वासरोधान्मृतः, ततः सञ्जातपश्चात्तापो द्विजो महाजनान्तिकं गत्वा प्रायश्चित्तममार्गयत्। 'उपशान्तो न वा?' इति तैः पृष्टो 'नाद्यापि ममोपशान्ति'रिति वदन् द्विजैरपाङ्क्तेयो विहितः। एवं अनुपशान्तकोपतया पर्युषणायामप्यकृतक्षामणः साध्वादिरपि गणान्निष्कास्यः, उपशान्तोपस्थितस्यैव स्थानं दातव्यम्।

गमणागमणं पज्जो० इह खलु नि० वा नि० वा अज्जेव कक्खडे कडुए वुग्गहे समुप्पज्जिज्जा, सेहे रायणियं खामिज्जा, रायणिए वि सेहं खामिज्जा (ग्रं०१२००)। खमियव्वं खमावियव्वं उवसमियव्वं उवसमावियव्वं, संमुइसंपुच्छणाबहुलेणं होयव्वं। जो उवसमइ तस्स अत्थि आरा-

धना, यो न उपशमयति अनन्तानुबन्धिक्रोधाविष्टो विनष्ट एवेति बहिः कर्त्तव्यः)। यस्तु पर्युषणायामप्यकृतक्षामणः स सङ्घबाह्यो भवति, अत एव हि सापराधोऽपि चण्डप्रद्योतः साधर्मिक इति कृत्वा उदयनराज्ञा मुक्तः +। इति त्रयोविंशी सा० ॥

अथ परस्परक्षामणाविधिनिरूपिकां चतुर्विंशीं सामाचारीमाह—

२४.—वर्षावासं पर्युषितानां इह प्रवचने खलु निर्ग्रन्थानां वा निर्ग्रन्थीनां वा अद्यैव–पर्युषणादिने 'कक्खड'त्ति कर्कशो-निष्ठुरः कटुको–जकारमकारादिरूपो यदि 'व्युद्ग्रहः' कलहः समुत्पद्येत, तदा 'शैक्षो' लघू 'रात्निकं' ज्येष्ठं सापराधमपि प्रथमं क्षामयेत्, तथा व्यवहारात्, ततो रात्निकोऽपि शैक्षं क्षामयेत्। अथापरिणतधर्मत्वान्न क्षामयति लघुर्ज्येष्ठं चेत्तदा ज्येष्ठेन प्रथमं लघुः क्षामयितव्यः, ततः क्षमयितव्यं स्वयमेव क्षामयितव्यः परः, तथा उपशमितव्यमुदितकोपस्य विफलीकरणेनात्मना उपशमयितव्यश्च परः, नैतावन्मात्रं, किन्तु 'सम्मुइ'त्ति राग-

---

+ तदुक्तं कल्पकिरणावल्यां-सिन्धुदेशे वह्निलादिदशमुकुटबद्धनृपसेव्यो वीतभयपुराधीश उदयनो नाम राजा, स हि विद्युन्मालिदेवतार्पितदेवाधिदेवश्रीमहावीरप्रतिमायाः पूजार्थं गान्धारश्रावकार्पितगुटिकाप्रभावेण सञ्जातानुत्तररूपायाः सुवर्णगुलिकेत्याख्यया प्रसिद्धिमुपगताया देवदत्ताया दास्याश्च अपहर्त्तारं चतुर्दशमुकुटबद्धनृपसेव्यं मालवेशं चण्डप्रद्योतं सङ्ग्रामे बद्ध्वा पश्चाद्वलन् दशपुरे वर्षासु स्थितः, वार्षिकपर्वणि भूपः स्वयमुपवासमकरोत्, भूपादिष्टसूपेन भोजनाय पृष्टे ममाप्यद्योपवासोऽस्तीति राज्ञोक्ते भूपः साधर्मिकोऽयमिति बद्धे कथं मम प्रतिक्रान्तिशुद्धिरिति विमृश्य तं मुक्त्वा क्षामयित्वा च 'मम दासीपति'रिति पूर्वलिखिताक्षरप्रच्छादनाय भाले स्वमुकुटपट्टं बन्धयित्वाऽवन्तिविषयं ददाविति।

हणा, जो न उवसमइ तस्स नत्थि आराहणा, तम्हा अप्पणा चेव उवसमियव्वं, से किमाहु ? भंते !, उवसमसारं खु सामण्णं ॥५९॥(२४) ।

द्वेषराहित्येन शोभना मतिः सन्मतिः, तत्पूर्वं या सम्पृच्छना-सूत्रार्थेषु ग्लानाद्यवस्थायां वा समाधिप्रश्नः, तद्बहुलेन भवितव्यं । येन सह सञ्जातमासीदधिकरणं, तेन सह रागद्वेषौ परित्यज्य निर्मलेन चेतसा आलापादिकं कार्यमिति भावः । अथैकतरस्य क्षामयतोऽपि नान्यश्चेदुपशाम्यति तदा का गतिरित्याह-य उपशाम्यति तस्यास्ति आराधना ज्ञानादीनां, यश्च नोपशाम्यति तस्य नास्त्याराधना, तस्मादात्मनैवोपशमितव्यं । अथ किमाहुः ? तत्र कारणं तीर्थंकरादयो भदन्ताः ! इति प्रश्ने गुरुराह-'उपशमसारं' उपशमप्रधानं खलु श्रामण्यं, यद्वा 'खलु' निश्चयेन उपशम एव 'सारं' तत्त्वं श्रामण्यस्य, मृगावत्या इव केवलोत्पत्तिहेतुत्वात् × । इति चतुर्विंशी सामाचारी ॥

× अन्यदा श्रीमहावीरः, कौशाम्ब्यां समवासरत् । सविमानौ तु चन्द्रार्कौ, तत्रायातौ विवन्दितुम् ॥१॥ प्रसृतस्तेन सर्वत्र,प्रकाशो दिनवत्तदा । ज्ञात्वाऽस्तसमयं दक्षा,चन्दना स्वालयं गता ॥२॥ प्रसृतेऽथ तमःस्तोमे,गतयोश्चन्द्रसूर्ययोः । भीताऽगात्सह साध्वीभिः, स्वोपाश्रयं मृगावती ॥३॥ ईर्यापथं प्रतिक्रम्य, शयनस्थां प्रवर्त्तिनीम् । प्रणम्य क्षामयामास, स्वप्रमादं मुहुर्मुहुः ॥४॥ चन्दनशीतलाभिश्च, वाग्भिर्वदति चन्दना । तव भद्रकुलोत्पन्ने !, न युक्तं कर्तुमीदृशम् ॥५॥ साऽप्यूचे नेदृशं भूयः, करिष्येऽहं प्रवर्त्तिनी ! । उक्त्वैवं पादयोस्तस्याः, पतिता शुद्धभावतः ॥६॥ निद्राणायां प्रवर्त्तिन्यां, तथैव स्थितया तया । सम्प्राप्तं केवलज्ञानं, क्षाम्यन्त्या हि सुभावतः ॥७॥ प्रबुद्धा सर्पवृत्तेन, सर्पं ज्ञातवती कथम् ?। इति प्रश्नेन सञ्जात-केवलामवगम्य ताम् ॥८॥ चन्दनाऽपि हि क्षाम्यन्ती,सम्प्राप केवलं द्रुतम् । मिथ्यादुष्कृतमेवं हि,देयं न तु कुलालवत् ॥९॥ युग्मम् ॥ तथाहि-करोति क्षुल्लकः कश्चित्, सच्छिद्रं भाण्डकं मुहुः । वारितस्तु कुलालेन,मिच्छामि दुक्कडं ददौ ॥१०॥ कुर्वतः पुनरप्येवं, कुलालेन स शिक्षितः ।

वासावासं पज्जो० कप्पइ नि० वा नि० वा तओ उवस्सया गिण्हित्तए, तं जहा–वेउ[ट्ठिया]धिया पडिलेहा साइज्जिया पमज्जणा(२५)।

अथ वर्षासूपाश्रयसङ्ख्याप्रतिपादिकां पञ्चविंशतितमां सामाचारीमाह—

६०–वर्षावासं पर्युषितानां कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा त्रय उपाश्रया ग्रहीतुं, जन्तुसंसक्ति-जलप्लावनादिदोषभयात्, तद्यथा–"वेउव्विया" क्वचित् "वेउट्टिया" इति दृश्यते, उभयत्रापि पुनःपुनरित्यर्थः, का ?, प्रतिलेखना दृष्ट्याऽवलोकनात्मिका उपभुज्यमानस्यानुपभुज्यमानस्यापि च, कार्येति शेषः। तथा 'साइज्जिय'त्ति उपभुज्यमानोपाश्रयसत्का प्रमार्जना कार्या। इदमुक्तं भवति–यस्मिन्नुपाश्रये साधवः स्थिता भवन्ति तं प्रातः प्रमार्जयन्ति, ततो भिक्षाङ्गतेषु साधुषु, पुनर्मध्याह्ने, तथैव प्रतिलेखनावसरे तृतीययामे, इत्येवं वारचतुष्टयं वर्षासु, ऋतुबद्धे तु वारत्रयं, असंसक्तेऽयं विधिः, संसक्ते तु पुनःपुनः प्रमार्जनीयं। शेषोपाश्रयद्वयं तु प्रत्यहं दृशा प्रतिलेख्यं, मा कोऽपि तत्र स्थास्यति ममत्वं वा करिष्यतीति, तृतीये चाह्नि दण्डप्रोञ्छनेन प्रमार्जनीयमिति।

यत्तु किरणावलीकारस्य "सन्देहविषौषध्यां वारचतुष्टयप्रमार्जनमयुक्तं, चूर्णौ वारत्रयस्यैवोक्तत्वा"दिति प्रलपनं तत्पृथुस्थूलबुद्धेः शास्त्राशयापरिज्ञानस्य चैवानुमापकं, यतो माध्याह्निकं प्रमार्जनं भोजनोत्तरकालभावि, तच्चाहारकरणेऽनाभोगादिना प्रपतितान्नकणादिपरिष्ठापनकृते भोजनदिनापेक्षिकमेव, न हि सार्वदिकं, तत्तु भोजनदिने करणीयमेव, अन्यथा जन्तु संसक्त्यादिबहुदोषसम्भवः, अतस्तं निषेधयंस्त्रसेष्वप्यनुकम्पारहितो जिनाज्ञायाः

कृतांत प॰ हिं॰: कर्ण-मोटनं क्षुल्लकस्य हि।११। क्षुल्लकोऽवकप्रपीड्येऽहं, सोऽवज्ञिच्छामि दुक्कडम्। नेवं भवति मिच्छामि-दुक्कडं श्रेयसे क्वचित्॥१२॥

वासावासं पज्जोसवियाणं निग्गंथाण वा निग्गंथीण वा कप्पइ अण्णयरिं दिसिं वा अणुदिसिं वा अवगिज्झिय भत्तपाणं गवेसित्तए। से किमाहु? भंते!, उस्सण्णं समणा भगवंतो वासासु तवसंपउत्ता भवंति, तवस्सी दुब्बले किलंते मुच्छिज्ज वा पवडिज्ज वा, तमेव दिसं वा अणुदिसं वा समणा भगवंतो पडिजागरंति ॥६१॥ (२६)

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा निग्गंथीण वा गिलाणहेउं जाव चत्तारि पंच जोयणाइं गंतुं पडिनियत्तए। अंतराऽवि

---

स्वाचारस्यापि च विलोपक एव। इति पञ्चविंशतितमी सामाचारी ॥

अथ दिग्ज्ञापनपूर्वकं गोचरचर्यागमनप्रतिपादिकां षड्विंशतितमीं सामाचारीमाह—

६१–वर्षावासं पर्युषितानां निर्ग्रन्थानां वा निर्ग्रन्थीनां वा कल्पते अन्यतरां दिशं–पूर्वादिकां अनुदिशं–आग्नेयादिकां विदिशं वा 'अवगृह्य' उद्दिश्य (अमुकां दिशं विदिशं वाऽहं यास्यामीति गुरुभ्योऽन्यसाधुभ्यो वा कथयित्वेत्यर्थः) भक्तपानं गवेषयितुं। अथ किमाहुरत्र कारणं? तीर्थङ्करादयो भदन्त! इति प्रश्ने गुरुराह–"उस्सण्णं"ति प्रायः श्रमणा भगवन्तो वर्षासु तपःसम्प्रयुक्ताः (प्रायश्चित्तवहनार्थं संयमार्थं मोहजयार्थं वा षष्ठादितपश्चारिणो) भवन्ति। ततस्ते तपस्विनो 'दुर्बलाः' तपसैव कृशाः, अत एव 'क्लान्ताः' खिन्नाः सन्तो मूर्च्छेयुः प्रपतेयुर्वा, ततस्तामेव दिशमनुदिशं वा वसतिस्थाः श्रमणा भगवन्तः 'प्रतिजाग्रति' गवेषयन्ति, अकथयित्वा गतांस्तु कुत्र गवेषयेयुः?। इति षड्विंशी सा०।

अथ ग्लानादिकार्ये गमनागमनमर्यादानिरूपिकां सप्तविंशतितमीं सामाचारीमाह—

६२–वर्षावासं पर्यु० कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'ग्लानहेतोः' ग्लानसाराकरणाद्यर्थं, उपलक्षणाद्वर्षा-

से पत्थाइ वत्थए, नो से कप्पइ तं रयणिं तत्थेव उवायणावित्तए ॥६३॥ (२७)

इच्चेयं संवच्छरियं थेरकप्पं अहासुत्तं अहाकप्पं अहामग्गं अहातच्चं सम्मं काएण फासित्ता पालित्ता सोहित्ता तीरित्ता किट्टित्ता आराहित्ता आणाए अणुपालित्ता अत्थेगइआ समणा निग्गंथा तेणेव भवग्गहणेणं सिज्झंति बुज्झंति मुच्चंति परिनिव्वाइंति सव्वदुक्खाणमंतं

---

कल्पौषधवैद्यार्थं न यावच्चत्वारि पञ्च वा योजनानि गत्वा प्रतिनिवर्त्तितुं। स्वस्थानं प्राप्तुमक्षमश्चेत्तदाऽन्तराऽपि तस्य कल्पते वस्तुं, परं न कल्पते कार्ये जाते तां रात्रिं तत्रैवातिक्रमयितुं, यत्राह्नि वर्षाकल्पादि लब्धं तद्रात्रिं न तत्रैवातिक्रामयेत्, यदा लब्धं तदैव निर्गन्तव्यमिति भावः। एवं च वीर्याचार आराधितो भवति। इति सप्तविंशी सा० ॥

अथ प्रागुक्तसामाचारीपालनफलनिरूपिकामष्टाविंशतितमीं सामाचारीमाह—

६३-इत्येतं-प्राक्प्रदर्शितं 'सांवत्सरिकं' वर्षारात्रिकं स्थविरकल्पं, यद्यपि किञ्चिज्जिनकल्पिकानामप्यस्ति, परं सामान्येन तत्, बाहुल्येन तु स्थविराणामेवात्र कल्प इति स्थविरकल्पस्तं 'यथासूत्रं' सूत्रानुसारं, न तु तद्विरुद्धं 'यथाकल्पं' यथाऽत्र कल्पो दर्शितस्तथैव, न त्वन्यथा 'यथामार्गं' यथा ज्ञानादित्रयाराधनप्रकारस्तथैव, अत एव 'यथातथ्यं' यथामलमुपदिष्टं जिनैस्तथा सम्यक्कायेन, उपलक्षणत्वान्मनोवाग्भ्यां 'स्पृष्ट्वा' आसेव्य 'पालयित्वा' रक्षयित्वाऽतिचारेभ्यः, शोधयित्वा दूषणापनयनेन शोभयित्वा वा विधिवत्करणेन 'तीरयित्वा' यावज्जीवमाराध्य 'कीर्त्तयित्वा' अन्येभ्य उपदिश्य, आराध्य यथोक्तकरणेन, न तु वैपरीत्यकरणेन विराध्य, 'आज्ञया' भगवदुपदेशेन यथा पूर्वैः पालितं तथा अनुपाल्य, सन्त्येके श्रमणा निर्ग्रन्थाः, येऽत्युत्तमया तत्पालनया तेनैव भवग्रहणेन

करिंति, अत्थेगआ दुच्चेणं भवग्गहणेणं सिज्झंति जाव सव्वदुक्खाणमंतं करिंति, अत्थेगइआ तच्चेणं भवग्गहणेणं जाव अंतं करिंति, सत्तऽट्ठभवग्गहणाइं पुण नाइक्कमंति ॥ ६३ ॥ (२८)

ते णं काले णं ते णं समए णं समणे भगवं महावीरे रायगिहे नगरे गुणसिलए चेइए बहूणं समणाणं बहूणं समणीणं बहूणं सावयाणं बहूणं सावियाणं बहूणं देवाणं बहूणं देवीणं मज्झगए चेव एवमाइक्खइ एवं भासइ एवं पण्णवेइ एवं परूवेइ, पज्जोसवणाकप्पो

---

'सिद्ध्यन्ति' निष्ठितार्था भवन्ति, बुद्ध्यन्ते केवलज्ञानेन, मुच्यन्ते कर्मबन्धनेभ्यः, 'परिनिर्वान्ति' कर्मजनिततापोपशमनाच्छीती भवन्ति, सर्वदुःखानां शारीरमानसानामन्तं कुर्वन्ति। सन्त्येके ये उत्तमया तत्पालनया द्वितीयेन भवग्रहणेन सिद्ध्यन्ति यावत्सर्वदुःखानामन्तं कुर्वन्ति। सन्त्येके ये मध्यमया तदाराधनया तृतीयेन भवग्रहणेन यावदन्तं कुर्वन्ति। जघन्ययाऽपि तदाराधनया सप्ताष्टौ वा भवग्रहणानि पुनर्नातिक्रामन्ति। इत्यष्टाविंशी सा० ॥

न चैतत्स्वमनीषिकया प्रोच्यते, किन्तु भगवदुपदेशपारतन्त्र्येणेत्याह—

६४–तस्मिन्काले चतुर्थारकप्रान्ते तस्मिन्समये राजगृहसमवसरणावसरे श्रमणो भगवान् महावीरो राजगृहे नगरे गुणशिलकाख्ये चैत्ये बहूनां श्रमणानां बहूनां श्रमणीनां बहूनां श्रावकाणां बहूनां श्राविकाणां बहूनां देवानां बहूनां देवीनां मध्यगत एव, न तु एकान्ते प्रच्छन्नतया, 'एवं' प्रागुक्तप्रकारेण 'आख्याति' यथोक्तं कथयति, एवं भाषते वचनयोगेन, 'प्रज्ञापयति' कल्पपालनस्य फलं कथयति 'प्ररूपयति' दर्पणवत् श्रोतृहृदये सङ्क्रमयति (पर्युषणा-वर्षास्वेकत्र निवासस्तस्याः कल्पः—समाचारी साधुसाध्वीमाश्रित्य विधि-प्रतिषेधलक्षणानि पञ्चाशता दिनैः कारणे तदर्वागपि च

सामं सउत्तयं सअट्ठं सहेउयं सकारणं सउत्तं सअट्ठं सउभयं सवागरणं भुज्जो भुज्जो उवदंसेइ त्ति बेमि ॥ ६४ ॥ ग्रं० १२१६

इति पज्जोसवणाकप्पो नाम दसासुअक्खंधस्स अट्ठममज्झयणं समत्तं ।

करणीयानि सांवत्सरिकप्रतिक्रमणादीनि कर्त्तव्यानि, तदभिधेययोगादध्ययनमपि पर्युषणाकल्पस्तत्) पर्युषणाकल्पनामाध्ययनं 'सार्थं' प्रयोजनसहितं 'सहेतुकं' हेतुः–दोषदर्शनं, यथाऽननुपालनेऽमी दोषाः, यद्वा सनिमित्तं, यथा "सवीसइराए मासे विइक्कंते" इत्युक्तेः किं निमित्तं ?, तत्र "पाएणं अगारीणं अगाराइं" इत्यादिको हेतुस्तेन सहितं 'सकारणं' कारणं–अपवादः, यथा "अंतरावि य से कप्पइ" इत्यादि, तेन सहितं, तथा ससूत्रं सार्थं सोभयमिति पदत्रयं प्रतीतं । अथ सार्थत्वं कथमध्ययनस्य ?, नह्यत्र टीकादाविवार्थः पृथक् प्रतिपादितोऽस्तीति चेत्सत्यं, सूत्रस्य अर्थनान्तरीयकत्वाददोषः । तथा 'सव्याकरणं' पृष्टार्थकथनसहितम्, ईदृशं पर्युषणाकल्पाध्ययनमर्थतो भूयो भूय उपदर्शयति, इत्यहं 'ब्रवीमी'ति श्रीभद्रबाहुस्वामी स्वशिष्यान् ब्रूते यन्नेदं स्वमनीषयैव ब्रवीमि, किन्तु तीर्थकृदुपदेशेनेति, अनेन च गुरुपारतन्त्र्यमभिहितम् । इति श्रीपर्युषणाकल्पनाम दशाश्रुतस्कन्धस्याष्टमं अध्ययनं समाप्तम् ।

इति श्रीपर्युषणाकल्पान्तर्वाच्यादिविविधव्याख्यामुपजीव्य प्रवचनप्रभावकश्रीखरतरगच्छनभोनभोमणि–क्रियोद्धारक–श्रीमन्मोहनमुनीश्वरविनेयानुयोगाचार्य–श्रीमत्केशरमुनिजी–गणिवरसंगृहीतायां कल्पार्थबोधिनीनामपर्युषणाकल्पव्याख्यायामष्टाविंशतिसामाचारीवर्णनात्मकं नवमं व्याख्यानं समाप्तम् । तत्समाप्तौ च समाप्तोऽयं सामाचारीरूपस्तृतीयोऽधिकारः पर्युषणाकल्पसूत्रश्चापि ।

ग्रं० २१९–२–२ मूलं, १३६–२–१ वृत्ति., ४०३–१–४ टि० नं० १, ६–०–५ टि० नं० २, सर्वाग्रेण ११६५–२–४ व्या० नवकस्य ७३४९–३–१

नाम्ना 'मोहनलाले'ति, विख्याता ह्यवनीतले । खरतरगणोत्तंसा, जैनशासनभूषणाः ॥ १ ॥

## ॥ इति कल्पार्थबोधिन्या नवमं व्याख्यानम् ॥

तेषां प्रशिष्यपंन्यास–गणि'केशर'सन्मुनेः । शिष्यं बुद्ध्यब्धिनामानं, भद्रं तन्वन्तु तेऽन्वहम् ॥ २ ॥ युग्मम् ।

# वृत्तिसङ्ग्राहक-प्रशस्तिः

"श्रीमद्वीरजिनेन्द्रतीर्थतिलकः सद्भूतसम्पन्निधिः, सञ्जज्ञे सुगुरुः सुधर्मगणभृत्तस्यान्वये सर्वतः । पुण्ये चान्द्रकुलेऽभवत्सुविहिते पक्षे सदाचारवान्, सेव्यः शोभनधीमतां सुमतिमानुद्योतनः सूरिराट् ॥ १ ॥" इत्यात्मप्रबोधे जिनलाभसूरिकृते । "तदीयपट्टे गुरुवर्द्धमानः, सूरीश्वरोऽभूद्धरणेन्द्रवन्द्यः । यश्चार्बुदाद्रौ गुणवर्द्धमानो, व्युच्छिन्नतीर्थं समुद्दधार ॥ २ ॥" इति जिनचन्द्रसूरिचरित्रे लब्धिगुणोपाध्यायकृते । ततः—"श्रीमद्गुर्जरभूमिभूषणमणौ श्रीपत्तने पत्तने, श्रीमद्दुर्लभराजराजपुरतो यश्चैत्यवासिद्विपान् । निर्लोठ्यागमहेतुयुक्तिनखरैर्वासं गृहस्थालये, साधूनां समतिष्ठिपन्मुनिमृगाधीशोऽग्रपूज्यः परैः ॥ ३ ॥ सूरिः स चान्द्रकुलमानसराजहंसः, श्रीमज्जिनेश्वर इति प्रथितः पृथिव्याम् । यो लसच्चरणरागनदीद्विशुद्ध-पक्षद्वयः शुभगतिं सुतरां दधानः ॥ ४ ॥" युग्मम् ॥ इति शालीभद्रचरित्रे पूर्णभद्रोपाध्यायकृते । "राज्ञा तदा खरतराख्यमदायि तस्मै, सत्यत्वतः सुगुरवे बिरुदं यथार्थम् । संवत्सरेऽर्हस्त्रिखवेश-गाङ्क(१०८०)समे ततस्त-च्छब्देन तस्य हि गणोऽपि गतः प्रसिद्धिम् ॥ ५ ॥ तदीयशिष्यो जिनचन्द्रसूरि-र्युगप्रधानश्च बभूव तस्य । यत्रार्पितोऽष्टादशनाममाला, कण्ठाग्रमासन्मुनिसत्तमस्य ॥ ६ ॥" इति जिनचन्द्रसूरिचरित्रे । "अन्योऽपि शिष्यतिलकोऽभयदेवसूरिः, श्रीमज्जिनेश्वरगुरोः श्रुतकेतुरासीत् । पञ्चाशकाष्टकनवाङ्गमनोज्ञटीका-कारः सुचारुधिषणः सुमनः प्रपूज्यः ॥ ७ ॥ आकर्ण्याभयदेवसूरिसुगुरोः सिद्धान्ततत्त्वामृतं, येनाज्ञायि न सङ्कतो

जिनगृहे वासो यतीनामिति। तं त्यक्त्वा गृहमेधिगेहवसतिर्निर्दूषणा शिश्रिये, सूरिः श्रीजिनवल्लभोऽभवदसौ विख्यातकीर्त्तिस्ततः ॥ ८ ॥" इति शालीभद्रचरित्रे पूर्णभद्रोपाध्यायकृते। "तर्कज्योतिरलङ्कृतीर्निजपरानेकागमाल्लक्षणं, यो वेत्ति स सुनिश्चितं सुविहितश्चारित्रचूडामणिः। नानावाग्जडमुख्यकाञ्जनपदाञ्छ्रीचित्रकूटस्थितां, चामुण्डामपि देवतां गुणनिधिर्यो बोधयामासिवान् ॥ ९ ॥" इत्यभयकुमारचरित्रे। "तत्पट्टपूर्वाचलतिग्मरश्मयो, युगप्रधाना जिनदत्तसूरयः। दिदीपिरे श्रावकलक्षबोधकाः, सुरासुरैः संस्तुतपादपङ्कजाः ॥ १० ॥" इति शब्दप्रभेदवृत्तौ ज्ञानविमलोपाध्यायकृतायाम्। "ये योगिनीभ्यो जगृहे ददौ च, वरान्वरान् जाग्रदनेकविद्यः। पश्चापि पीरान् स्ववशीचकार, युगप्रधानो जिनदत्तसूरिः ॥ ११ ॥" इति कल्पलतायाम्। "बाल्ये श्रीजिनदत्तसूरिविभुभिर्ये दीक्षिताः शिक्षिताः, दत्वाऽऽचार्यपदं स्वयं निजपदे तैरेव संस्थापिताः। ते श्रीमज्जिनचन्द्रसूरिगुरवोऽपूर्वेन्दुबिम्बोपमा, न ग्रस्तास्तमसा कलङ्कविकलाः क्षोणौ बभूवुस्ततः ॥ १२ ॥ यैर्वादीन्द्रकरीन्द्रदर्पदलने सिंहैरिव स्फूर्जितं, मोहध्वान्तविनाशने भुवि सदा सूर्यैरिवोज्जृम्भितम्। भव्यप्राणिसमूहकैरववने चन्द्रैरिवेहोद्गतं, ते श्रीमज्जिनपत्यभिख्यगुरवोऽभूवन् यतीशोत्तमाः ॥ १३ ॥" इति शालीभद्रचरित्रे। "यश्चाद्यसंहननकाय इवाधिसेहे, गाढोपसर्गभरमस्पृह एव देहे। आदाय शोधिमधिपोऽपि च योऽत्र षट्षण्-मासान् परं च विकृतिर्बहुशो मुमोच ॥ १४ ॥" इत्यभयकुमारचरित्रे। "तदीयपट्टे च जिनेश्वराख्या-चार्या बभूवुर्हतमोहमानाः। सङ्क्षोभिताशेषकुमार्गसार्था, भवार्त्तिभीताङ्ग्यभयप्रदा हि ॥ १५ ॥ तदीयपट्टे च जिनप्रबोधः, सूरीश्वरोऽभूज्जनितप्रबोधः। जने निरुद्धाखिलमोहयोधः, समग्र-

सिद्धान्तवरेद्धयोग: ॥ १६ ॥ तदीयपट्टे जिनचन्द्रसूरि-र्बभूव दूरीकृतसंवरारिः । प्रज्ञाप्रकर्षाज्जितदेवसूरि-र्गुणौघसन्तोषितसर्वसूरिः ॥ १७ ॥ तेनायोधि चतुर्नृपाः सुगुरुणा तस्माच्च सूरीश्वरात्, सुख्यातिं प्रगतो गणः खरतरः श्रीराजगच्छाख्यया । जित्वा वादिगणान्विशारदसभाप्राप्तान्स विद्वत्तया, सूरीशः कलिकालकेवलितया लोके प्रसिद्धिं गतः ॥ १८ ॥ अभूज्जिनादिः कुशलाख्यसूरि-स्तदीयपट्टे मुनिसत्तमोऽस्ति । अद्यापि सर्वत्र च सप्रभावा, गतगद्गुकाः सज्जनपूज्यमानाः ॥ १९ ॥ तदीयपट्टे जिनपद्मसूरि-र्ज्ञानादिपद्मापरिभूषितोऽभूत् । संसारपद्माकरभव्यपद्म-सूर्यश्च विद्वन्नतपादपद्मः ॥ २० ॥ सरस्वत्याः प्रसादेन, यभूवुस्ते प्रधारकाः । बालधवलकूर्चाल-भारती-विरुदस्य च ॥ २१ ॥ तदीयपट्टे जिनलब्धिसूरि-र्बभूव सम्प्राप्तमुनित्वशोभः । सम्पादिताशेषसुखादिलाभो, विगाचणोऽष्टप्रणिधानवक्ता ॥ २२ ॥ तदीयपट्टे जिनचन्द्रसूरिः, शुद्धाशयोऽभूद्गतमानमायः । स्वर्गापवर्गातुलसौख्यदायि, ज्ञानादिसंसाधनसावधानः ॥ २३ ॥ तदीयपट्टे परिपालयन्तः, पञ्चप्रकारं सुविशुद्धभावाः । आचारमासंश्च जिनोदयाख्याः, सूरीश्वराः सन्मुनिसेवनीयाः ॥ २४ ॥ सूत्रार्थरत्नौघविनाशितान्त-र्मिथ्यान्धकारो जिनराजसूरिः । तदीयपट्टेऽजनि तार्किकेषु, मुख्यः प्रसन्तोषितभव्यजीवः ॥ २५ ॥ तदीयपट्टे जिनभद्रसूरि-र्भद्रः प्रकृत्या कृतभूरिभद्रः । प्रभूतसैद्धान्तिकपुस्तकानि, येनोपकाराय विलेखितानि ॥ २६ ॥" इति जिनचन्द्रसूरिचरिते भक्तिगुरुगुणाख्यानकृतो । "वामेतरे यत्करपङ्कजेऽसिन्, चेक्रीयते सिद्धिरमा सुकेलिम् । विहारनीरोर्मय एव येषां, सम्पत्तिशस्यानि समेधयन्ति ॥ २७ ॥" इति स्थविरसूरिपरम्परायाम् । "तदीयपट्टेऽजनि भव्यजीव-धर्मोपदेशा-

पंणसावधानः। सद्‌गच्छसन्धारणमेढिकल्पः, सूरीश्वरः श्रीजिनचन्द्रनामा ॥ २८॥ तदीयपट्टे समभूज्जिनादिः, समुद्रसूरिर्मुनिधर्मरक्तः। शास्त्रानुसारेण जगद्विवर्त्ति-पदार्थसार्थप्रवरोपदेशी ॥ २९॥ तदीयपट्टे जिनहंससूरि-स्त्रिगुप्तिगुप्तो विशदाशयोऽभूत्। प्राज्ञो विशुद्धाचरणः प्रवादि-स्तम्बेरमोच्छेदनसिंहकल्पः ॥ ३०॥ तदीयपट्टे समभूज्जिनादि-माणिक्यसूरिश्च महाव्रतीशः। दुर्वारपाखण्डमतावलम्बि-वाङ्मेघमालाहरणैकवायुः ॥ ३१॥" इति जिनचन्द्रसूरिचरित्रे। ततोऽभूज्जिनचन्द्राख्यः, सूरिः सूरिशिरोमणिः। निर्जितः पत्तने येन, धर्मो मिथ्याप्ररूपकः ॥३२॥ "अकबररञ्जनपूर्वं, द्वादशसूबेषु सर्वदेशेषु। स्फुटतरममारिपटहः, प्रवादितो यैश्च सूरिवरैः ॥ ३३॥" इति कल्पलतायाम्। "अकब्बराख्यक्षितिपालनाथ-स्तत्तचमत्कारिगुणातिसक्तः। युगप्रधानेत्यभिधामचीकथत्, स नन्दतु श्रीजिनचन्द्रसूरिः ॥ ३४॥" इति शब्दप्रभेदवृत्तौ। "भट्टारकश्रीजिनसिंहसूरि-स्तदीयपट्टेऽजनि बुद्धिशाली। विशुद्ध-जैनेन्द्रपथप्रकाशी, समग्रजीवाभयदानदायी ॥ ३५॥ ततः परं श्रीजिनराजसूरिः, षट्कायसंरक्षणदत्तदृष्टिः। कारुण्यसिन्धुः समभूत्कुवादि-मानाद्रिसञ्चूरणवज्रतुल्यः ॥ ३६॥ तदीयपट्टे जिनरत्नसूरि-र्बभूव सिद्धान्तसुपार-गामी। समग्रदेशेषु विहारकारी, ज्ञानक्रियावान्यतनादियुक्तः ॥ ३७॥ तदीयपट्टे जिनशासनोरु-नीरालयोल्ला-सनचन्द्रतुल्यः। आल्हादितप्राणिगणो बभूव, भट्टारकश्रीजिनचन्द्रसूरिः ॥ ३८॥ सौख्यङ्करो भवजलाशययान-पात्रं, षड्वर्गवर्गितगुणौघविराजमानः। भव्यात्मपङ्कजविबोधनभास्करस्त-दीयपदे जिनसुखाभिधसूरिरासीत् ॥ ३९॥ तदीयपट्टे जिनभक्तिसूरि-र्गतप्रमादो विजितेन्द्रियश्च। बभूव हिंसादिकदोषशून्य-स्तपःक्रियासंयम-

शुभमासम् ॥४०॥" इति मलयाहावन्यां लब्धिमुन्युपाध्यायकृतायाम्। "जिनादिमुक्तिसूरीणां, कर्मचन्द्राभिधाः परे। विनेया नयभङ्गीषु, निपुणा अभवन् भुवि ॥ ४१ ॥ तेषामीश्वरदासाख्याः, शिष्या आसन्सतां मताः । तद्विनेया वृद्धिचन्द्रा, नयनीतिविशारदाः ॥ ४२ ॥ तच्छिष्या लालचन्द्राख्या, अभवन्नतिविश्रुताः । जिनभाषिततत्त्वार्थ-ज्ञानारोऽमलबुद्धयः ॥ ४३ ॥ तेषां विनेया अभवन्, रूपचन्द्रा महाधियः । प्रायः शातोत्पादके ते, पुरे नागपुरेऽभवन् ॥ ४४ ॥" इति मोहनचरित्रे यशोदरशर्मकृते। विनेया जज्ञिरे तेषां, संवेगरङ्गरङ्गिताः । विहितसत्क्रियोद्धारा, मोहनाख्या मुनीश्वराः ॥ ४५ ॥ सर्वतः प्राक्समारब्धं, साधूनामागमं च यैः । मोहमय्यां पुरीवर्यां, साध्वाचारप्रतिष्ठितैः ॥ ४६ ॥ कारिता स्थापना जैन-महाविद्यालयस्य यैः। जैनानां श्रेयसे तत्र, वात्रूजीवनलालतः ॥ ४७ ॥ मिलापचन्द्रकायां च, प्रतिष्ठितं जिनालयम् । शलाकाञ्जननिर्मित्या, नेन्दद्वेऽङ्केन्दू(१९४९)वत्सरे ॥ ४८ ॥ ग्रामे कनारग्रामाख्ये, सुरतासन्नवर्त्तिनि । जीर्णोद्धारं विधाप्याथ, प्रतिष्ठितं जिनालयम् ॥ ४९ ॥ अन्येऽपि सुरतादौ हि, नैके चैत्याः प्रतिष्ठिताः । प्रतिष्ठिताः पत्तने यै-र्जिनदत्तादिपादुकाः ॥ ५० ॥ अनेकविधमित्येवं, जैनशासनशोभनात् । सञ्जाताः शतके विंशे, महाधर्मप्रभावकाः ॥ ५१ ॥ तच्छिष्या बहवोऽभूवन्, श्रमणधर्मपालकाः । श्रीगणमहरस्तेषु, मुख्याः शान्तास्तपस्विनः ॥ ५२ ॥ वीरनिर्वाणपूतायां, पापायां ये हि स्वर्गताः । वह्नित्र्याणोपवासान्(५३), विधाय शुभभावतः ॥ ५३ ॥ तदाज्ञावर्त्तिपंन्यास-श्रीकेशरमुनीश्वरैः । मोहनमुनिशिष्य-श्री-सद्धर्ममुनिशिष्यकैः ॥५४॥ श्रीमोहनमुनीशानां,शिष्या आसन् विशारदाः। श्रीराजमुनिनामान-स्तदीयहस्त-

दीक्षितैः ॥५५॥ विवृतिः सङ्गृहीतेयं, नानावृत्त्यवचूर्णितः। संवच्छिखिनवाङ्केंदु(१९९३)-मिते विक्रमहायने ॥५६॥"
त्रिभिर्विशेषकम्। योक्तुमेवावशिष्टाऽभूत्, सम्बन्धेन परस्परम्। भवितव्यनियोगेना-स्याद्भृद्येव विमर्षणम् ॥५७॥
यतः-स्वर्गं गता हि ते तस्मि-न्नेवाब्दे ह्यन्निरोधतः। निरुद्धोऽस्यास्ततो यत्नो, योजनादेः प्रसङ्गतः ॥ ५८ ॥ ततः-
चतुर्ष्वब्देष्वतीतेषु, मुंन्यंङ्कांङ्केन्दु(१९९७)वत्सरे। तच्छिष्येण मोहमय्यां, गणिना बुद्धिसिन्धुना ॥ ५९ ॥ कृता
सम्बन्धमायोज्य, प्रतिरेषा प्रयत्नतः। जिनर्द्धिरत्नसूरीणां, छत्रच्छायासु तिष्ठता ॥ ६० ॥ युग्मम् ॥ संशोधिता
ह्युपाध्यायैः, श्रीमल्लब्धिमुनीश्वरैः। शब्दशास्त्रादिबोधस्य, भद्रमुनेः सहायतः ॥ ६१ ॥ लिखिता प्रथमादर्शों,
श्रीजिनरत्नसूरिभिः। नित्यमेकाशनोद्युक्तै-र्लेखनकर्मकर्मठैः ॥ ६२॥ वृत्तेरस्याः श्लोकाः, बाणेन्दुशैलवेदप्रमिताश्च
(४७१५)। सूत्रटिप्पणयुतायाः, वह्निवेदवेदाद्रिमिता(७४४३) मताः ॥६३॥ "यद्गदितमल्पमतिना, न्यूनाधिकमर्थ-
जातमिह किञ्चित्। विद्वद्भिरमलधीभिः, प्रसादमाधाय तच्छोध्यम् ॥६४॥" इति पृथ्वीचन्द्रचरित्रे जयसागरोपाध्यायकृते।
जयति जिनशासनमिदं, निर्वृतिपुरमार्गशासनं यावत्। मुनिभिरिह वाच्यमान-स्तावदसौ पुस्तको नन्द्यात् ॥६५॥



सुविहितशिरःशेखर-प्राचीनाचार्यपुरन्दरसङ्कलिता प्राकृतपद्यमया

# कालकाचार्य-कथा



दुप्पडिणीयपयासो, तिहुअणप्पयारओ कलानिलओ । जयउ जयाणंदयरो, जुगपवरो कालगायरिओ ॥ १ ॥

मगहेसु धरावासे, पुरे पुराऽऽसी निवो वयरसीहो । सुरसुंदरत्ति भज्जा, गुणजुत्तो कालओ पुत्तो ॥ २ ॥

भूआ सरस्सई से, कलाकलावेण सरस्सईतुल्ला । कुमरो सुरसमरूवो, कीलइ विविहाहिं कीलाहिं ॥ ३ ॥

अह अन्नदिणे कुमरो, विणिग्गओ वाहवाहणनिमित्तं । चूअवणम्मि गुणंधर—गुरूवएसं सुणइ एवं ॥ ४ ॥

"यथा चतुर्भिः कनकं परीक्ष्यते, निघर्षण-च्छेदन-ताप-ताडनैः। धर्मस्तथाऽयं विदुषा परीक्ष्यते, श्रुतेन शीलेन तपोदयागुणैः ।५।"

गिण्हइ सोउ कुमरो, पव्वज्जं सरस्सईइ संजुत्तो । लहुकम्माणं जेणं, थेवेण वि होइ वेरग्गं ॥ ६ ॥ अह सो गुणनिवहजुओ, पढिअसुओ पवयणसूरिपओ । गाम-पुर-पट्टणेसुं, विहरइ इअ भासिरो धम्मं ॥७॥ दयासमो न हु धम्मो, सुक्खं संतोससरिसयं नत्थि । सच्चसरिसं न सोयं, न भूसणं सीलपरिसुद्धं ॥ ८ ॥ अह उज्जेणिं पत्तो, सूरिवरो गुरुअ गच्छपरिअरिओ । बाहिं उज्जाणठिओ, ठावइ धम्मम्मि बहुलोअं ॥ ९ ॥ अन्नदिणि नमिअ सूरिं, सरस्सई जाव जाइ निअठाणे । ता गद्दहिविज्जेणं, दप्पणभूवेण अवहरिआ ॥ १० ॥ सेणेणं गहि घल्लिआ, हीरिज्जंती अ सा सई तेणं । विलवइ करुणं एवं, हारावपरेसु लोएसु ॥ ११ ॥ हा !! भाय ! सुगुरु ! सुअधर !,

हा !! पवयणनाह ! हा !! गुणनिहाण ! । इमिणा मं हीरंतिं, पावेणं वीर ! रक्ख त्ति ॥ १२ ॥ अह सो कुग्गहगहिओ, अंतेउरसंगयं कुणइ समणिं । तं नत्थि धुवमकिच्चं, जं कामंधा न हु कुणंति ॥ १३ ॥

यत—"न पश्यति हि जात्यन्धः, कामान्धो नैव पश्यति । न पश्यति मदोन्मत्तो, दोषमर्थी न पश्यति ॥ १४ ॥"

गंतूणं गुरुणा सो, वुत्तो महराय ! मुंच समणिमिमं । जेणं तवोवणाइं, कयनिवरक्खाइं भणिआइं ॥१५॥ तं चिअ करेसि एवं, पलीवणं पाणिआउ धुवमेअं । धाडी अ वाहराए, अहवा सरणाउ देव ! भयं ॥ १६ ॥ तह संघेण वि भणिओ, जुत्तं तुम्हारिसाण निव ! नेअं । विउले वि हु जलपूरे, जलही लंघइ न सीमं जं ॥ १७ ॥ तह तह नीअत्तेणं, उवहासं सो करेइ संघस्स । जं दुद्धपाइओ वि हु, विसमविसं मुंचई भुअगो ॥ १८ ॥ दुद्धधोओ वि हु काओ, जह कण्हत्तं न मुंचई कहवि । तह नीओ नीअत्तं, न मुअइ उच्चत्तपत्तो वि ॥ १९ ॥

यत—"दूधइ सींचिउ लिंबडउ, थाणउं किउं गुलेण । तोइ न छंडइ कडुअपणुं, जातिहिं तणइं गुणेण ॥ २० ॥"

अवमन्निअनिअसंघं, नाउ पइन्नं इमं कुणइ सूरी । उम्मूले जइ न इमं, पडिणीयगइं तओ जामि ॥ २१ ॥

यत—"जो पवयणपडिणीए, संते विरिअम्मि नो निवारिज्जा । सो पारंचिअपत्तो, परिभमइ अणंतसंसारं ॥ २२ ॥

देवगुरुसंघकज्जे, चुन्निज्जा चक्कवट्टिसिन्नंपि । कुविओ मुणी महप्पा, पुलायलद्धीइ संपन्नो ॥ २३ ॥"

जइ कहवि इमो वुज्झइ, तोऽहमुवायं रएमि निरवायं । इअ चिंतिअ करुणाए, सत्तो वि गुरू करइ एवं ॥२४॥ जइ निवइ गद्दहिल्लो, अहं च रोरो तओ अ किं ? लोआ ! । इच्चाइ जंपिरो पुरि, भमेइ गहिलुव्व हा !! सूरी ॥ २५ ॥ अह मंतीहि वि भणिओ, निव ! पंचस-

[illegible]! [illegible] । पगइँ [illegible], राया सेसो अ नामेणं ॥ २६ ॥ पालिज्जइ माइुजणो, दंसणिवग्गो वि सेसओ जेण । सो दूमिओ अ नरवर!, [illegible] देइ ॥ २७ ॥

[ [illegible] ] "देवताप्रतिमाभङ्गे, साधूनां च विनाशने । देशभङ्गं विजानीया–द्दुर्भिक्षडमराशिवैः ॥ २८ ॥"

[illegible], [illegible] जेण लोअम[illegible]म्मि । कंठगयजीविएहि वि, तं न कुलीणेहिं कायवं ॥ २९ ॥ इअ सोउ निवो [illegible], भणइ अ रे!! जाह मंदिरं नियगं । सिक्खेवह निअताए, इअ भणिउं ते वि वारेइ ॥ ३० ॥ अह पालिज्जइ सम्मं, संजमसिअ [illegible] निअसीमा । [illegible]सूरिमिमेआ, विहारिआ तेण अन्नत्थ ॥ ३१ ॥ अह चिंतइ सूरिवरो, जाणेऽहं जामि तायपासम्मि । [illegible], सा गंतुं [illegible] नो देइ ॥ ३२ ॥ जे पुण पिसुणा ते व–भिअघ मह कव्वडं करिस्संति । तह गहिअवओ जो गुत्तुं, [illegible] म भडो ॥ ३३ ॥ तो पिउपासि न जामि–त्ति निच्छिऊणं पुणो वि चिंतेइ । विज्जा(बलं)लवं तु जेसिं, पराभवो [illegible] ॥ ३४ ॥ [illegible] मित्ता, जिप्पंति अ मत्तुणो वि विज्जाए । विज्जालवो वि जाणं, नमंति सवे वि नर ताणं ॥ ३५ ॥ [illegible] न [illegible], अग्घेइ गुणवंतयाण गेहेसु । सा विज्जा मह विउला, तेण विदेसो वि निअदेसो ॥ ३६ ॥ अह सूरी सगकूले, वगइ [illegible] । भनइ साहणुसाही, राया जहिं साहिणो सेसा ॥ ३७ ॥ सूरी सहाइ वगइ, बुज्झइ तं जं सुहाइ सवस्स । एवं [illegible], [illegible] ॥ ३८ ॥ भणइ निवो मन्नोऽहं, जं पत्तो सुपुरिसो तुमं इत्थ । सोहइ तयऽम्ह रज्जं, मग्गसु तं जेण [illegible] ॥ ३९ ॥ अह [illegible] सूरिवरो, तुज्झ ममत्तेण सवमवि लद्धं । मग्गिस्समवसरेऽहं, छुहाइ अन्नं पि पीइकरं ॥ ४० ॥ अह पेम्मइ [illegible], नगिरवीअ आगमम्मि पच्छेहे । विच्छायमुहो साही, पुट्ठो गुरुणा कहइ सवं ॥ ४१ ॥ अह भणइ गुरू नरवर!, [illegible] कोवि अप्पणए । कणगाइ दाणओ तह, किज्जइ जह देव! जीविज्जइ ॥ ४२ ॥ सो भणइ निसुण सुपुरिस!, जाणासि

